Old Series Vol XVI New Series Vol IV

THE

# Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITED BY

**R. KRISHNAMACHARIAR, M.A.,**

VIDYANIDHI

**Chaitra to Phalguna**

OF

**Virodhikrit year.**



PRINTED AT THE

SRI VANI VILAS PRESS

SRIRANGAM.

# विषयसूचिका ॥



---

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे चैत्रमासः । [संचि. १.

## सुभाषितानि ॥



आश्रयोन्नतिमात्रेण मान्ति लघुचेतसः
न हि शैलाधिरोहेण परमाणुर्महान्भवेत् ॥

आपातहर्षशरणैरविधेयशब्दै-
रायस्यते कवियशःप्रमितैरिहैकैः ।
अन्यैर्मुधा सहृदयत्वनिमीलिताक्षै-
रास्वाद्यते निभृतमेकरसं समस्तम् ॥

कवीनां निर्दोषं वचनमुकुरं बिम्बितगुणं
नवं वस्तु प्रीतिं वितरति वधूनामिव मुखम्
तयोरेकं दोषैर्यदि भवति किञ्चित्कलुषितं
प्रसादः को वा स्यात्सरससहृदयानां सुमनसाम् ॥

शतावधानम् श्रीनिवासाचार्यः ।

॥ श्रीः ॥

## ॥ विज्ञापना ॥

आर्या ग्राहकमहाशया ,

अद्य संपूर्णपञ्चदशहायनेयं मद्धृदया नवनवोन्मिषद्रसभावविलासावर्जितरसिकजनान्तरङ्गा षोडशे वयसि कृतपदा बाभाति । रमणीयवेषोज्ज्वलेव नटीव रङ्गस्थलीं महीमण्डलमिदमवतरन्ती कचिदाश्चर्यजनकेनेतिहासेन पातिव्रत्यमहिमानम् . कुहचिद्देशान्तरीयपण्डितैरुपवर्णितमार्यभाषास्वरूपम् . कुत्रचिद्धन्वन्तरिप्रोक्तं शरीरगतधातुसूक्ष्मतत्त्वम , अन्यत्र प्राचीनवैदिकाचारेष्ववश्यमाचरणीयानशान् , अपरत्र नवीनभाषाशास्त्रविदां मतमालम्ब्य पाणिनिप्रोक्तधातुस्वरूपविचारम , ऐरोपीयैराद्दताना भौतिकादिशास्त्राणां सग्रहेण प्रतिपादनम् , कचित्प्रत्युत्पन्नमतीनां प्रतिभावैशद्यम् , अथ पञ्चमवेदगाथानामेकदेशमतिरमणीयेन वाग्गुम्भेनानुवर्णन च प्रकाशयन्ती चमत्करोति रसिकान् ॥

सेयमास्तिकहृदयंगमया रीत्या गीर्वाणभाषाभ्युदयप्रकारम् , केनाप्यक्षुण्णेन पथा महाकाव्यगतान्सरसान्भावविशेषान् , पण्डितसमुदायेनानाघ्रातपूर्वान् गन्धवत्या विश्वंभराया स्वरूपपरिणामोदन्तान् , भागवतगोष्ठीसमास्वादनीयया वाक्सरण्या वासुदेवस्य लोकोत्तरमपदानम , अशेषजनवन्दनीयस्य श्रीमच्छारदापीठस्यानुत्तम महिमानम , अपार्थिवसुखप्रवणैरस्मदीयै प्रायेणाविज्ञातं स्थावरलोकतत्त्वरहस्यं च साभिनिवेशमुपादिशन्ती आचार्यपदमधितिष्ठति ॥

शिवलीलार्णवविमर्शः ।

पण्डितानामुत्कर्षाय प्रोत्साहनाय वा 'यूनिवर्सिटिसङ्घैर्नूतनतया प्रतिष्ठापितायां शिरोमण्यादिपरीक्षायां प्रवेशमिच्छद्भिरवश्यज्ञातव्यत्वेन निर्णीतानां पाश्चात्यपण्डितैर्महता परिश्रमेण हौण्या प्रकाशितानामस्मदीयग्रन्थविमर्शानां संग्रहस्तदा तदा आङ्गलवाण्यनभिज्ञानामत्यन्तोपकारायास्यां सहृदयायां मुद्राप्यतेति सप्रमोदं निवेदयाम ॥

संपादकः ।

॥ श्रीः ॥

# ॥ शिवलीलार्णवविमर्शः ॥

---

रमणीयमिदं काव्यमावर्जकेन वेषेणाभिनन्दनीयेन प्रतिमाष्टकेनास्वादनीयेन वाग्गुम्भेन सरसेनोपोद्घातेन च समुपेतं श्रीवाणीविलासालयादद्य बहिरवतरन्ती समुन्मादयति मानसं सहृदयानाम् । कवयितुरस्याभिजनवंशसंभवस्य नीलकण्ठदीक्षितस्य तत्समकालिकानामन्येषां द्रविडदेशीयमहाकवीनां चोदन्तजातमखिलमुपोद्घाते सम्यगनुवर्णितं प्रकाशयति प्राचीनग्रन्थान्वेषपरिश्रमं तद्रचयितुः टि. एस् कुप्पुस्वाम्यार्यस्य ॥

तिरुमलैनायक इति प्रख्यातपराक्रमस्य पाण्ड्यदेशाधिपस्य सभायाममात्यपदमास्थानपण्डितपदवीं चाधिरूढोऽय शिवभक्तिरसास्वादरसिको नीलकण्ठः 'निगमैरगम्यस्य' शम्भोर्लीलापदानप्रकारादिकं द्वाविंशतिसर्गात्मकेन काव्येनानुवर्णयितुमुपक्रान्तः आदिमे सर्गे सरलपदविन्यासरमणीयया वाक्सरण्या काव्यस्य व्यङ्ग्यवैभवादिस्व

रूपं सत्काव्यप्रणेतृष्वात्मनो गौरवं सरससाहितीकन्यादर्शने भल्लूकवदापतत्सु काव्यागमानभिज्ञेषु गौनमीयेष्वत्यन्तमवज्ञां चाविष्कुर्वन् नीरसैः पाठप्रकारैः दुरवगमाभिः पदयोजनाभिस्तात्पर्यदुर्निश्चयैश्च मन्दैरायाम्यमाना वत्सां साहितीं तत्र तत्रानुशोचन् स्वयं रोदिति चमत्करोति च सहृदयान् ॥

परोत्कर्षासहिष्णूनां 'कर्तुं कवेर्जीवनमेव' सर्वप्रबन्धानुगतं दोषमाकलयतां दुर्जनानां शोचनीयां स्थितिम्,

'प्राचीनपद्यभ्रमतः प्रवृत्ता
स्तोतुं खलाः प्रेक्ष्य कविं पुरस्तात् ।
येनान्यथा कर्तुमिदं यतन्ते
क्लेशेन तेषां हि स एव दण्डः ॥'

इति पद्ये निपुणं निरूपयति नीलकण्ठः । एवमसदृशीं साहितीसारज्ञतामात्मनि प्रदर्शयन्नप्यसौ दीक्षितः,

'विद्वत्प्रियं व्यङ्ग्यपथं व्यतीत्य
शब्दार्थचित्रेषु कलेर्विलासात् ।
प्राप्तोऽनुरागो निगमानुपेक्ष्य
भाषाप्रबन्धेष्विव पामराणाम् ॥'

इति वदन् भाषाप्रबन्धेषु विद्वदप्रियत्वं व्यङ्ग्यपथातीतत्वं शब्दार्थचित्रबाहुल्यं विषयगौरववैरल्यं चोपलभ्यन्त इति सूचयन् आत्मनः तादृशप्रबन्धानां स्वरूपानभिज्ञतां प्रदर्शयन् श्रीवैष्णवसंप्रदायस्थानामवज्ञैव परममाहेश्वरस्यासाधारणं चिह्नमिति व्यञ्जयतीति जानन्तो वयमस्य पण्डितामात्यस्य प्रौढिमानं न बहुमन्यामहे ॥

अथ द्वितीये पाण्ड्यदेशस्य निरतिशयं सौभाग्यमतिमधुरया वाग्धोरण्या वर्ण्यमानमनुवाचयतामस्माकमनुसंवत्सरममकृद्वगाह्यमानाया अपि अगस्त्यगोत्रप्रभवेयमित्यनन्यसाधारणं गौरवमावहता सिन्धुराजेन मौक्तिकोघैः पुष्पैर्विकीर्य प्रत्युद्गम्यमानायास्ताम्रपर्ण्याः पुनर्दर्शनाभिलाष अनुक्षणमभिवर्धते ॥

आत्मन क्षारोदकास्वादमेव विपाकमपाकरिष्यन् कुम्भजन्मा यस्या स्वच्छस्वादुसलिलपानव्यसनितामद्यापि नोज्झतीतीदं सत्यमेवेत्यत्र न कापि संशीति सहृदयानाम् । अम्भोनिधिमनुप्रविष्टायास्तस्या एव स्वादु सलिलं निर्मथनेन त्रिदशैर्लब्धमद्याऽपि 'सुधा सुधा' इत्यास्वाद्यते इत्याद्याशयमस्य कवेर्वयमास्वादयन्तस्तादृशीमपि सुधां तृणवदाकलयामः ॥

कदम्बमूले ज्वलत स्वायंभुवस्य सुन्दरनाथलिङ्गस्यानितरसाधारणं वैभवमनेन कविना गीयमानमुपश्रुत्यानन्दसुधाप्लुतमात्मानमपि विस्मृत्य लीयेमहि केवलानन्दे नादमये ब्रह्मणि ॥

(क्रमशः ।)

## भारतवर्षे गीर्वाणभाषाभ्युदयः ॥

अथाद्य प्रतिमण्डलं के विषया प्रतिपाद्यन्ते इति विचारः प्राप्तावसरो भवति ।

शतर्चिनामाद्ये मण्डले—

'अग्निमीळे' इत्याद्यस्तवेनात्मानमभिदर्शयन्ती आग्नेयसूक्तभूयिष्ठा भगवती ऋक्संहिता अग्नेरेव प्राधान्यमुपदिशति । ऋग्वेदस्याग्नेः संभूतिमुपदिशन्त्या श्रुतेरग्नेरुत्कर्षवर्णन एव तात्पर्यम-

वगमयन्त्यास्तिका । अग्निर्वै देवानां मुखम् ' ' अग्निमुखा वै सर्वा देवता. ' इत्याद्या ऋच. अग्ने प्राधान्यमनाग्निमत: धर्माचरणानर्हत्वं च द्योतयन्ति । मण्डलेऽस्मिन् स्तूयमानेषु देवेष्विन्द्र एव द्वितीय. । भुवो भूतये बहुभि स्तोत्रशस्त्रैराराधनीयोयं ' देवानामोजिष्ठोबलिष्ठ ' इति ऋच प्रशंसन्ति । तेनानुष्ठितमसुरकदर्थनमसुरावासोन्मूलन, क्रतूनामवनम, ' वज्रपाणि पुरुन्दर ' इत्युक्तरीत्या यज्ञवाटेषु तस्य सायुधस्य जागरूकेणावस्थान, देवसंबन्धिनी गा अपहृत्य कस्मिंश्चित् बिले गोपितवत बलनामकस्यासुरस्य निहननं, तस्मात बिलात् गवां नि·-मारणम् , इत्याद्यपदानमैन्द्रसूक्तेषु प्रतिपादितमवगम्यते । तदनन्तरं कानिचन सूक्तानि ऋभूनुद्दिश्य प्रवर्तन्ते । ऋभवो हि मनुष्या. तपसा देवत्वं प्राप्ता. । एते देवानामुपयोगाय चमसादिसोमधारणक्षमकाष्ठविशेषनिर्माणानुकूलतक्षणव्यापारकुशलस्य देवशिल्पिन त्वष्टु. शिष्या । ततश्च गायत्र्यादिभि छन्दोभिरभिष्टुतस्य आम्नायस्वरूपस्य विष्णो· (आदित्यस्य) अस्मात् भूप्रदेशात् परित प्रक्रमणम् ' इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं । समूढमस्य पांसुरे ' इति ऋचा प्रतिपाद्यते । अत्र सूर्य एव प्रात मध्याह्ने सायं च त्रिभि प्रक्रमै रोदसी व्याप्नोति— इत्यादि सूक्ष्मार्थमुपदिशति निरुक्तकारो भगवान् यास्क । इमामृचमवलंब्यैव पौराणिका. विष्णो: त्रिविक्रमावतारस्य कथामाबध्नन्तीत्यनुमातुमस्त्यवकाश· । ऐतिहासिकाना मतमिहोपेक्षितव्यमिति कण्ठतोनुशास्ति यास्क. । वेदे तु सर्वेश्वरस्य विष्णो पृथिव्यामन्तरिक्षे दिवि चाग्निरूपेण वाय्वाकारेण सूर्यात्मना चावस्थिति: सम्यक् प्रतिपादिता । भूमावन्तरिक्षे दिवि च त्रेधावस्थितं विष्णुमधिकृत्य एकैव वा महानात्मा स सूर्य इत्याचक्षते—

इति स्वाशयमवबोधयत्यनुक्रमणिकायामाचार्यः शौनकः ।

तदनन्तरं शुनःशेफेन कृच्छ्रगतेन दृष्टानि सूक्तानि श्रूयन्ते । अत्र शुनःशेफोपाख्यानमप्यवगतं भवति । तद्यथा— आसीत् पुरा कोसलेषु ऐक्ष्वाकः हरिश्चन्द्रो नाम राजा । तस्य शतं जाया बभूवुः । तासु पुत्रं न लेभे । तस्य गृहे पर्वतनारदौ कदाचिदूषतुः । स तु तौ प्रणम्य 'किं स्वित् पुत्रेण विन्दते' तन्म आचक्ष्व नारद' इत्यप्राक्षीत् । 'ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेत् जीवतो मुखम् ॥ अतो वरुणमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति' इति राजानमृषिरुपादिक्षत् । राजापि वरुणमुपससार । अचिरेणैव रोहितनामानं पुत्रं लेभे । तदा वरुणः राजानमभ्येत्य 'रोहितेन मा यजस्व' इत्युवाच । राजा तु पुत्रस्नेहाकुलः असकृन्निबध्नन्तं वरुणाय अद्य जाताशौचः, सांप्रतं दन्ता न सन्त्यस्य पशोः, दन्ताः पुनः पद्यन्ताः, क्षत्रियोऽयं पशुः संनाहं प्राप्नोतु, इति हेतूनुदाहरन् व्यलम्बत । वरुणोऽपि स्वार्थं मोक्तुं नैच्छत् । अन्ततो राजा षोडशवर्षदेशीयं रोहितमाहूय 'तात ! वरुणोऽयमपुत्रस्य मे त्वा समयबन्धेनादात् । अतस्त्वा यज्ञे पशुत्वेन हन्तुमयं निर्बध्नाति'— इत्यवोचत् । स हि नेत्युक्त्वा धनुरादायारण्यमुपतस्थौ । अथ हैक्ष्वाकं वरुणो जग्राह । तस्य होदरं जज्ञे । तदु ह रोहितः शुश्राव । आत्मनः स्थाने अन्यं यं कंचित् द्विजकुमारं पशुत्वेन दत्वा वरुणस्य सौमनस्यं सपादयितुमभिलषन् रोहितः हिमवतः परिसरारण्ये निवसन्तं, शुनःपुच्छः शुनःशेफः शुनोलाङ्गूलः इति नामधेयान्यावहता पुत्रत्रयेण भार्यया च समुपेतं दरिद्रमार्विमौसमजीगर्तं नाम मुनिमभ्येत्य, ऋषे ! शतं गा

ते दद्यामहं. तव पुत्रेष्वेकेनात्मानं निष्क्रीणामि इत्ययाचत । ऋषि शुनःशेफनामानं द्वितीय पुत्रं रोहिताय ददौ । रोहित तमादाय पितरमेत्याहमनेनात्मान निष्क्रीणामि इत्यवादीत् । तदनु शुनःशेफ यूपस्तम्भे बद्ध कान्दिशीकः क देवमुपधावानीति विष ण्णमना बभूव । सोपि महर्षिणा विश्वामित्रेणोपदिष्ट प्रथमं देवाना नेदिष्ठमग्निम्, अनन्तरं प्रसवानामीश सवितारं, तदनन्तरं राजान वरुणं विश्वेदेवानिन्द्रमुषसमाश्विनौ च ऋग्भिस्तोषयामास । सर्वेपि देवाः प्रीतमनसः बन्धनादेनं मोचयामासु । तेन प्रोक्ता आयु-ष्या. ऋच. प्रथमे मण्डले श्रयन्ते । 'इमं मे वरुण श्रुधी हवम्' इति सन्ध्यावन्दनमन्त्रेष्वेकतम अनेनैव 'अवस्युना' शुनःशे-फेन महर्षिणा वरुणप्रसादनाय प्रोक्त इत्यवगम्यते ॥

## स्थावरतत्त्वदर्शनम् ।

---

**यज्ञशर्मा**— सखे, चन्द्रपाल! सम्यगवबोधितोऽस्मि महीरुहाणा-मुत्पत्तिप्रकारम् । विशेषतो रसालानाम् ॥

**चन्द्रपालः** - मित्र! रसालाना च प्रथमप्ररोहसमय. वसन्त एवेति कृषितत्त्वविद्भिराख्यायते किल, यस्मिंश्च मलयजामोदमे दुरः पवमानो मन्दमन्दं सचरन् एतेषामभ्युदाय कल्पते । यत्र च—

मलयशिखरादाकैलास मनोभवशासनात्
भुवनवलयं जेतुं वाञ्छन् वसन्तसमीरणः ।
विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं
मनसि विमृशन् भीत शङ्के प्रयाति शनैः शनैः ॥

# शाकुन्तलसंविधानरामणीयकम् ॥

नाट्यप्रबन्धानां प्रबन्धमाधुर्यमन्यदेव ; येनात्र भूयसी रसास्वादसामग्रीसंपत्ति । रसास्वादश्च परः पुरुषार्थः सहृदयानाम् । सात्त्विकाङ्गिकवाचिकाहार्यरूपैश्चतुर्विधैरभिनयैश्चक्षुषोर्हि विषयमिहोपनीयते काव्यार्थः । उक्तं हि मालविकाग्निमित्रे 'त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते' इति । चतुर्णामप्यभिनयानामभ्यार्हितो वाचिकाभिनयो नाट्यस्य जीवातुः, यः प्रबन्धाश्रय । प्रबन्धश्च शब्दार्थमय. फलमिव त्वग्दलमयमन्तर्बहिश्च रससंभृत एव नटसामाजिकयोः कीर्तिप्रीतिहेतुर्भवेत् । भूयसा च प्रबन्धा. पृथुलबीजत्वच इव फलपाकाः प्रकामाडम्बरितशब्दार्था मृग्यरसा भवन्ति । कालिदासस्य तु काव्यं बीजत्वङ्निमुक्तमिव सहकारफलमनुपसृष्टां प्रीतिमावहतीति स्फुटमिदं काव्यरहस्यविदाम् । समग्रा हि प्रबन्धश्रीः कालिदासकृतिषु । यत्र सन्नपि कश्चिद्दोषबिन्दुर्दोषज्ञदर्शनविषयो हिमकरबिम्ब इव कलङ्कलेशो रसास्वादं नावसादयति । यथा स्वतो मधुरेषु सुवदनानां वदनेष्वयथायथमपि विहितं प्रसाधनमन्यामेव विच्छित्तिशब्दितां लक्ष्मीमादधाति । 'स्वल्पोप्यनादरन्यासो भूषणाडम्बरस्रजाम् । यः परां जनयेच्छोभां सा विच्छित्तिरुदाहृता' इति हि विच्छित्तिलक्षणम् । 'कोपेऽपि कान्तं मुखम्' इत्यादि चैवंप्रायम् । एवमेषा महाकवीनां काव्येषु काव्यश्रीः क्वचिदयथायथोपपादितेनापि वस्त्वलङ्कारविन्यासेन भूयसैव दर्शनीयतामायातीति निपुणमत्रोदाहरणं कालिदासस्य काव्यम् । अर्वाग्रामायणमहाभारताभ्यामुक्तरूपामेव काव्यश्रियमसुलभामभिसन्धायाहु.—

'द्वित्रा एव कवयो द्वित्राण्येव काव्यानि' इति । असकृदनुभूयमाना एव हि लोके विशेषा महाकवीनां काव्येषु दृश्यमानाः स्वेन चानुभवेन संवादं नीयमानाः शतशोऽपि परिचये नवनवा इव भावुकैर्भाव्यन्ते । शब्दाश्च लोकव्यवहारेष्वनारतं परिवर्तमाना एव ग्रथनाविशेषे मणय इव कामपि श्रियं श्रयन्ति । अभिनवा अपि शब्दार्थाः संघटनावैगुण्यान्निम्नोन्नतवृत्तयो दन्ता इव मुखशोभां दूषयन्ति काव्यलक्ष्मीम् । तथा हि शब्दार्थाश्रयानलङ्कारान् संघटनाश्रयांश्च गुणदोषान् विभजन्ति । देशकालवयोविद्याव्यवहारभेदादुत्तमाधममध्यमप्रकृतीनां नारीनराणा नानैव निरूप्यमाणा वेषभाषाचेष्टाप्रवृत्तयो यथालोकं काव्येषु निक्षिप्ता. किल काव्यविदां प्रीतिमुपहरन्ति । स चायमभूमिः परिसंख्यानस्य प्रमेयराशिर्महाकविप्रतिभायामेव व्युत्पत्तिविमलीकृतायां विविक्तमात्मानं दर्शयति । चर्मचक्षुषा विप्रकर्षेऽपि हि प्रतिभाचक्षुरकुण्ठप्रसरम् । जननान्तरशतोपचितसुकृत कञ्चिदेव हि पुरुषं प्रतिभादृशा दृशिमन्तमुपस्थापयति लोके विधिः । निरर्गलनिर्गलत्प्रतिभास्रोतसामपि कवीनां कस्यचिदेव रविकरशलाकेव रसापूरणस्फारीकृतप्रकाशा भवति भारती । इयमेव च काव्यश्रीर्नाम ; यया तनीयानपि वाक्यखण्डः पुनः पुनरपि विभाव्यमान. प्रत्यग्र इव रोमहर्षण· काव्यज्ञानाम् ; यया च वञ्चितानि निरङ्कुशप्रतिभाविलासविजृम्भितान्यपि भूयसां कवीनां काव्यानि पाकच्युतानीव फलानि दोषासहानां सहृदयानां नाभिलाषपूरणे प्रभवन्ति । रामायणं महाभारतं चोभयं प्रतिभारससंपदो. सहोदयोपजातं दुग्धोदपूरवद्विपुलं च मधुरं च ; यतः काव्यार्थानादाय वाङ्मयान्यपरे कवयः प्रणयन्ति । अर्वाचां च कवीनां कालि-

दासः प्रथमः ; यस्य परिच्छेदवत्यपि प्रतिभा वर्षधारेवामलपातिनी विमला चापर्युषितरसा च । अस्य हि महाकवेः काव्येषु रसभावालंकारयोजना शब्दार्थरेखा वा निपुणशिल्पिशिल्पकलायामिव विषयवशादुच्छूनतां तनुतां च दधानाऽपि बन्धुरतया रचनाया वैषम्यानुपलम्भादभिन्नकान्तिः काव्यदृशां शश्वदपि विमृदिता न यातयामा भवति । यथा हि नानाविधवसनाभरणकुसुमाङ्गरागादियोजनविरचिता नागरिकसैरन्ध्रीप्रसाधनकला वरतनोरेकामेव रूपश्रियमुपस्कृत्य समग्रयति । इदं चात्र किमपि रहस्यं काव्यरचनायाः ; यः किल लोके कामिनोः प्रथमसमागमे चक्षूरागात् प्रभृति यावदङ्गसङ्गं व्रीडाभयौत्सुक्यसंकीर्णवृत्तिर्भावव्यतिकरक्रमः। सोयमुत्तमप्रकृतिषु भवन् दर्शयितुमसुकरः कवीनाम् । भट्टबाणः प्रौढो गद्यकविर्हर्षचरिते सरस्वतीदधीचयोः प्रथमसौहृदे दधीचेन मालतीप्रेषणं तया चासंनिधौ सावित्र्याः सरस्वत्यै रहसि दधीचप्रार्थनाऽऽविष्करणमित्यादिकं नायकयोः प्रथमोपवर्णितगुणप्रकर्षस्यासदृशमिव दर्शयति । कादम्बर्यामपि प्रथमं चन्द्रापीडं दृष्टवत्या एव पुनः प्रासादमारुह्य पश्यन्त्याः प्रयत्नेन शृङ्गारचेष्टाऽऽविष्करणं पत्रलेखया च श्लिष्टवचनेन चन्द्रापीडाय कादम्बरीरागावेदनं च तथाविधम् । भवभूतेरपि मालतीमाधवे मालत्या लवङ्गिकाप्रेषणेन माधवग्रथितबकुलदामोपनायनं सशिष्यायाः कामन्दक्या महान्यत्नो देवतागृहे मकरन्दस्य मालतीवेषग्रहणं नायकयोराकस्मिकश्च समागम इत्यादिकं स्वभावाद्दवीयः । वीरचरितेऽपि सीतारामयोर्भावव्यतिकरः प्रौढवयसोरिव दर्शितः, न मुग्धयोर्गुरुगौरवयन्त्रितयोरिव । एवमन्यत्रापि यूनो प्रथमसमागमसंदर्भे किमपि विरूप एव

दृश्यते । नैवं कालिदासनिबन्धेषु । अयमेव हि संदर्भो निकषः काव्यपरीक्षायाः । यथा रघुवंशे इन्दुमतीस्वयंवरे षष्ठे सर्गे ६८ श्लोकेन 'तस्या रघोः सूनुरुपस्थितायां वृणीत वा नेति समाकुलोऽभूत् । वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥' इति प्रदर्श्य ८०, ८१, ८२, 'ततस्सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या । दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत् संवरणस्रजेव ॥ सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् । रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ तथा गतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे । आर्ये व्रजावोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श' ॥ इत्यादिना संदर्भेण नैसर्गिको वधूवरयोः हृदयसंगः प्रत्यक्षमिव दर्शितः ॥

यथा च कुमारसंभवे तृतीयसर्गे ६७, ६८, श्लोकाभ्यां 'हरस्तु किंचित् परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः । उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः । साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥' इत्युपक्षेपः, पञ्चमे च सर्गे तपसि स्थिताया गौर्यास्तापसब्रह्मचारिणा परमेश्वरेण सह सवादक्रमः, प्रियापरिवादासहतापर्यन्तेन रागातिरेकेण जिगमिषोर्गौर्यास्तादृशप्रेमदर्शिना परमेश्वरेण निरोधनं, तत्कालसदृशश्चालापः । ८४, ८५, ८६, 'इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला । स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥ तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती । मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥ अद्य-

प्रभृत्यवनताङ्गि तवास्मि दास. क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ । अह्नाय सा नियमज क्लममुत्ससर्ज क्लेश. फलेन हि पुनर्नवतां विधत्ते ॥' इति श्लोकैर्दर्शितश्चोभयोश्चित्तसमावेश., तथापि पितृपरतन्त्रतया पित्रनुज्ञापनाय सखीमुखेनेश्वरस्य निवेदनं, षष्ठे च सर्गे । (८४) इति वादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥ इति भावप्रदर्शनं च, परश्च सन्दर्भ. परस्परभावबन्धं तरुमिवाङ्कुरपल्लवशाखाप्रसवादिग्राहिणमुच्छ्राययन् व्यतीतमप्यर्थं वर्तमानमिवापरोक्षयति । यथा च मालविकाग्निमित्रे चित्रदर्शनाद्राज्ञो मालविकादर्शनाभिलाष , नृत्यदर्शनावसरे विदूषकेण प्रश्नव्याजेन मालविकाहासोत्पादनादितरेतरानुरागोदय., प्रमदवने चाशोकदोहदार्थमुपगताया राज्ञा समागमप्रकारः, समुद्रगृहे च द्वयोरभिगम., परश्च संदर्भ. क्रमशो विजृम्भमाणविस्रम्भमनुरागपोषमेव दर्शयति । यथा च विक्रमोर्वशीये असुरबन्दीग्रहान्मोचिताया उर्वश्याः स्वं रथमारोपितायाः प्रभावोपकारपरवशीकृतात्मनो गुणगौरवादेकासनवशेन यदृच्छोपनतादर्शनादितश्चानुरागोद्भव पुनः पुनः सङ्गविरहाभ्यां कामपि भूमिं गमितः । यथा वा शाकुन्तलेऽपि वृक्षसेचनप्रसक्ताना मुनिकन्यानां विस्रब्धविहारदर्शनात् 'अणसूए अदअपिणद्धेण थणवक्कलेण पिअवदाए दिढं णिअंदिदह्मि, सिढिलेहि दाव णम्' इति शकुन्तलावचने 'हला एत्थ दाव पयोहरवित्थारइत्तअं अत्तणो जोव्वणं उवालंह' इति प्रियंवदाप्रतिवचनस्य, (प्रियंवदा) 'हला अणसूए अविजाणासि किं णिमित्तं सउदला वणजोसिणिं अदिमत्तं पक्खदित्ति । (अनसूआ) ण खु विभावेमि कहेहि कहेहि (प्रियंवदा) जह वणजोसिणी अणुरूवेण

पाअवेण संगदा एव्वंणाम अहं वि अत्तणो अणुरूव वर लहेअति ।' इत्यादेश्श्लोक्तिप्रत्युक्तिक्रमस्य श्रवणादुपजातरागस्य राज्ञो मधुकर-वृत्तान्तव्यपदेशेन प्रवेशः कुमारीभिः प्रश्नप्रतिवचनव्यतिकरे श-कुन्तलाया लज्जामदनसंप्लवः परां भूमिं गमिष्यत प्रणयस्य प्रच-यक्रमादुपक्षिप्तः । तदनुरोधी चोत्तरः संदर्भः । तदिदं रसयोजनवैद-ग्ध्यं कालिदासस्याधिगुणम् , यत्रान्ये भवभूतिबाणप्रभृतयोऽपि न सि-द्धिमध्यरुक्षन् । त्रय एव च कालिदासस्य नाट्यप्रबन्धा उपलभ्यन्ते मालविकाग्निमित्रं, विक्रमोर्वशीयं, शाकुन्तलं च । तत्र मालविकाग्नि-मित्रमुत्पाद्यकथावस्तुकं धीरललिताख्येन शृङ्गारिणा नायकेनोपेतं प्रक-रणं नाम रूपकम् । अग्निमित्र एव हि पुराणे निर्दिष्टनिर्देशः । न पुनरिदं कथावस्तु रेखयाऽपि क्वचिदुन्मीलितपूर्वम् । विक्रमोर्वशीयं च महाभारतादिप्रसिद्धेतिवृत्तमपि पश्चादुर्वशीविरहसमागमादेः कविनैव योजनान्मिश्रं दिव्यनायिकाश्रयाच्च त्रोटकाख्यमुपरूपकम् । शाकुन्तलं तु प्रख्यातेतिवृत्तं धीरोदात्तनायकं नाटक रूपकेषु प्रथमम् । 'महास-त्त्वोऽतिगम्भीरः कृपावानविकत्थनः । स्थिरो निगूढाहङ्कार' इत्युक्त-धीरोदात्तलक्षणसमग्रो हि दुष्यन्तः । शकुन्तला दिव्याङ्गनाप्रसूतिर्म-हातेजसो विश्वामित्रस्य तेजोविवर्तः काश्यपस्य च संवर्धनात् सुतेति रूपलावण्यधर्मधैर्यादयो गुणाः सहजा एव ह्यस्याः । तदुभया-श्रयं ब्रह्मक्षत्रप्रभावानुभावप्रवृत्तिनिदर्शनं लोकस्यैव दर्शनाच्छ्रवणाद्वा गुणोन्नतिमादधानं वस्तुनायकादिप्रकर्षसदृशेन वाणीगुणविशेषेण च कदाचिदपि काव्यविदां हृदयान्यविजहदिदं शाकुन्तलं नाटकरत्नं समाभ्यधिकवार्तावर्जितं किमपि पदमासादयति । येनाहुः 'नाटकेषु श-कुन्तला' इति । शाकुन्तलनाम्ना चात्र नायिकाप्राधान्यं प्रतीयते । महा-

भारतेऽपि शकुन्तलोपाख्यानव्यपदेश· शकुन्तलायाः प्राधान्यमवगमयति । सा हि जन्मतो गुणतश्च विशिष्यते ; येन राजर्षेर्महाप्रभावस्यापि दुष्यन्तस्य चरित नानयाऽननुविद्धं किमप्युदाहरणपदवीमुपाश्रितम । तदिह महाभारतवदेव शाकुन्तलव्यपदेशेनेतिवृत्तमुपात्तम् । अङ्गुलीयवृत्तान्तस्तु केवलमत्र कविना स्वयं योजितः ; यदाश्रयमभिज्ञानशाकुन्तलाभिधानं नाटकस्य । अभिज्ञानवृत्तान्त एव हि षष्ठसप्तमयोरङ्कयोराश्रय· । षष्ठसप्तमौ चाङ्कौ किरीटमिव पुरुषस्य प्रबन्धस्यैव कामपि शोभामावहतः ; यतः सपीठादिव शिखराद्रिमानं प्रबन्धरत्नमिदं दर्शनीयामुन्नतिमुपयाति । ये खल्वपल्लवितमनीषा विच्छायवाचः पूर्वप्रबन्धानुहरणजीविताश्च प्राकृता कवयः, तेषा कविप्रख्याऽभिलाषपरवशानां बहुश प्रयस्यतामपि काष्ठभारैरिव पुरुषशिरांसि विरसैरवसानैर्दुर्दर्शानि काव्यानि भवन्ति । महतां तु कवीनां वाग्विलासस्तरुरिव सर्वतः पुष्पपल्लवैर्नवैश्शब्दार्थैरुपचितः प्रकामरमणीयामग्रतो लक्ष्मी गृह्णाति । कथावस्तुनो यस्मिन् पर्वणि विगलितवेद्यान्तरं दशान्तरं सहृदयहृदयान्यनुभवन्ति, तद्धि पचेलिमं रसभरनिर्भरं निगमनस्थानं कालिदासीयनाटकानाम् । विशेषतस्तु शाकुन्तलस्य । अत्र कथावस्तुविनिवेशेऽपि कवेर्वैदग्ध्यमनुचिन्तनीयम् । महाभारतात् किलेदमुद्धृतं कथावस्तु । महाभारते शकुन्तलोपाख्यानमेवमुपाख्यातं । यथा, दुष्यन्तो राजर्षिर्मृगयानुषङ्गात् कण्वाश्रमं विवेश । फलाहरणार्थं गते तु महर्षौ तस्य दुहित्रा शकुन्तलया यथावदुपपादितार्हणस्तद्गुणविशेषाक्षिप्तचेतास्तस्या एव मुखात्तदुत्पत्त्यादिवृत्तान्तमवधार्य भार्यार्थे ता स्वयं वरयामास । निजगर्भसम्भवस्य कुमारस्य पितृराज्यभागित्वेन समयेन परिणयमिच्छन्तीं प्रति-

श्रुत्य मनोरथमुपच्छन्दयंस्तां स पाणौ जग्राह । प्रतिप्रयाते च स्वनगरीं महर्षिभयज्वरार्दिते राजनि प्रत्यागतो वनान्तराद्दुहितरं व्रीडाविलक्षां यथापूर्वमनुपसर्पन्तीं पश्यन् प्रभावविदितार्थः प्रसन्न एवान्वमन्यत मुनिः । आपन्नसत्त्वा तु शकुन्तला त्रिषु वर्षेष्वतीतेषु महातेजसमसूयत कुमारम् । कृतसंस्कारश्च महर्षिणा दुर्धर्ष स बालः सर्वानेव सत्त्वान् बलेन दमयन् सर्वदमन इति तापसैः कृतव्यपदेशस्तत्रैव तपोवने विहरन्नतिष्ठत् । द्वादशवर्षं च समधिगतशस्त्रशास्त्रविज्ञानं यौवराज्ययोग्यमेनमाकलय्य काश्यपो महर्षि सपुत्रां शकुन्तलां शिष्यैर्नीयमानां पतिगृहं प्रजिघाय । नगरप्रवेशमनिच्छत्सु बहिरेव प्रतिनिवृत्तेषु कण्वशिष्येषु सपुत्रा शकुन्तला स्वयमेव राजद्वारमुपगम्य दौवारिकैर्निवेदितागमना प्रवेशिता च राजानमभिगम्य वत्स प्रणम पितरमिति पुत्रमादिदेश । किं कर्तव्यं तव वा पुत्रस्य वा तापसि मयेति चानुयुक्ता राज्ञा प्रतिश्रुतपूर्वं पुत्रस्य यौवराज्याभिषेकं स्मारयामास । जानन्नपि तमर्थमजानन्निव राजा परिग्रहमेवाप्रतिपद्यमानो धर्मपत्नीं प्रत्याचख्यौ । तयोर्दम्पत्योर्धर्माश्रये विवादे स्वचारित्रविस्रम्भान्निःशङ्कं सदसि राजानमवधूय धर्मवादिन्यां शकुन्तलायामशरीरया वाचा सत्यापिते परिणये देवदूतेनानुशिष्टः प्रतिजग्राह दुष्यन्त सपुत्रां पत्नीम् । उवाच च सदस्यान् जाने चाहमेनां परिगृहीतपूर्वां यदा युष्माकं परोक्षमावयोः सङ्गतं तदा पुत्रमस्या राज्ये निवेशयन् शङ्कनीयः स्यामिति मध्यस्थ इदानीमस्मि संवृत्तः । अशरीरया वाण्या देवदूतशासनेन चावचनीयः सम्प्रति भवद्भिरनुमोदितः कुमारं यौवराज्येऽभिषेक्ष्यामीति । ततश्च तथैवानुमतः कुमारमभ्यषेचयदिति ॥

(क्रमशः ।)

॥ श्रीः ॥

॥ श्रीमते हयग्रीवाय नमः ॥

# ॥ श्रीकृष्णाभ्युदयकाव्यम् ॥

---

जयत्युद्दण्डदोर्दण्डखण्डितारातिमण्डल ।
अपारमहिमा सोऽयमञ्जनानन्दवर्धनः ॥

निखिलजगज्जननस्थितिविलयनिदान गुणत्रयोपगतः ।
वस्तु निगमस्तुतं वो निस्तुलमेकं श्रियै चिरायास्तु ॥ २ ॥

तापिञ्छाभशरीरा सा पिञ्छापीडभूषिता जगताम् ।
कल्या मत्राणविधौ कल्याणं काऽपि देवता तनुताम् ॥ ३ ॥

संतोषं जनयेन्नस्तापहरा संगता गुणैस्ताडिताम् ।
करुणारसभरमन्थरमूर्तिः कादम्बिनी चिर पातु ॥ ४ ॥

तत्सौजन्यमहाञ्जनमतुलं सद्भिर्धृतं जयति ।
दोषच्छन्नोऽपि गुणो येनैषा जगति गोचरीभवति ॥ ५ ॥

श्रेयो भुवीहमानैः परमं कै सज्जनो न पूज्येत ।
यो लालयति हि मूर्ध्ना सर्वज्ञो बालमजः कलावन्तम् ॥ ६ ॥

रसिकहृदयंगमा चेत् श्रवणाकल्पाय कल्पते कविवाक् ।
शुक्तीनामिव गर्भे मुक्तीभूतो लघुः पयोबिन्दुः ॥ ७ ॥

रञ्जयति गुणैः सुजनं तेजस्वी साध्वसंमतोऽपि खलैः ।
जगतां प्रमोददायी घूकानामप्रियोऽपि दिवसमणिः ॥ ८ ॥

मधुराणां कविवचसामज्ञजनानादरो न दोषाय ।
अद्रवणमन्यदृषदाममृतद्युतिदीधितेर्न दोषाय ॥ ९ ॥

परगुणलवोऽपि हृदये विस्तारं भजति सर्वतो हि सताम् ।
शिशिरसरमप्रसन्ने चागाधे सरसि तैलबिन्दुरिव ॥ १० ॥

काव्यं रसवदपीह स्वदते विदुषां परिग्रहादधिकम् ।
मधुरमपि दुग्धमग्नौ तापात्पुष्णाति किमपि माधुर्यम् ॥ ११ ॥

तेभ्यो नमः कविभ्यः पूर्वेभ्यो भुवनवन्द्यचरितेभ्यः ।
वदनचरद्वाग्देवीकलनूपुरशिञ्जिताभकवितेभ्यः ॥ १२ ॥

वस्त्वपि जगत्प्रशस्तं निस्तुलमस्ताधिकं न च स्तोतुम् ।
शक्नोमि रञ्जयेयं विदुषस्तेनात्मना कृतेन कथम् ॥ १३ ॥

श्रुतयो मुनिमतयोऽपि च यन्महिमस्तुतिषु भग्नगतयः स्युः ।
तच्चरितवर्णनोद्यतमात्माऽप्यपहसति हन्त ! चपल माम् ॥ १४ ॥

केलीषु भुवनवृन्दं धूलीभिरभिकल्पयन् प्रतोलीषु ।
बाल इव विरचयन् कृतिमवहेलनभाजनं कथं न स्याम् ? ॥१५॥

क्षुण्णमपि पूर्वकविभिर्हरिचरितं वर्णयामि निजवचसा ।
रविशशिचरिते व्योमनि खद्योतो द्योतते न किं द्युतिभिः ? ॥

ये जगति सरसकवयो ये रसिका मानयन्ति ये च कवीन् ।
तेऽपि गतास्ते च गतास्तेऽपि गताः कुटिल एष हन्त ! कालिः ॥

अम्ब ! विरिञ्चिमुखाम्बुजकाननकलहंसकामिनि ! प्रसभम् ।
मद्वदनविनिर्गतापि च माधुर्यं मुञ्च मा कदापि निजम् ॥ १८ ॥

हर मर्कटेश रिपुगणमपहर जाड्यं धियस्तनोश्च रुजम् ।
धेहि च वचने पटुतां धैर्योत्साहौ प्रसादमपि हृदये ॥ १९ ॥

आसीदाशान्तराशान्तविलसदमलनिजयशश्चन्द्रिकापुञ्जरञ्जितसकललोकः, लोकोत्तरात्मविक्रमवशीकृतसकलधरापालकुलः, कुलगिरिरिव कल्याणगोत्रप्रतिष्ठापनावस्थानितवैभवः, भव इवानुकलतर्पितार्यान्तरङ्गः, तरङ्गिणीपतिरिव अनर्घरत्ननिधिः, निधीश इव पालितपुण्यजनगणः, गणेश इव नरकुञ्जरः, कुञ्जरयूथप इव अनवरतप्रवृत्तदानः, दानवारातिरिव बहुरूपोपादितजगद्धद्रोन्निद्रमहिमा, हिमालय इव सर्वमङ्गलावतारभूमिः, भूमिधर इव महाभोगी, भोगिशय इव लोकावनोन्निद्रः, उन्निद्रकमलाकर इव हंसद्विजचक्राश्रयो भ्रमरहितश्च, प्रियव्रत इव कमनीयात्मा कामसंगतिजनितकुतूहलो विजितारिश्च, किंच प्रजापतिरिवास्थितचक्राङ्कोऽपि वाक्पतिरपि स्थिरपद्मालयोऽपि न नाभिजातः, नारायण इव कृतलोकावनोऽपि पुरुषोत्तमोऽप्यपाकृतनरकभयोऽपि न बलिभङ्गकारी, हर इव विमतपुरविदारणोऽपि शंकरोऽपि वृषास्थितोऽपि न क्रतुविहन्ता, स्कन्द इव नारीमणिवल्लीसमञ्चितकरोऽपि ज्वलत्प्रतापाग्निभूरपि निहतारातिशूरोऽपि न कुमारः, कृष्ण इव सत्यभामायुतोऽपि शूराभिजनोऽपि विजयिनरप्रतिपादितसुभद्रोऽपि न पुण्यजनवैरी, दाशरथिरिवायोध्यावासमहितोऽपि अशोकसुमन्त्रसर्वार्थसिद्धिशोभितसभामण्डलोऽपि निकृत्तखरदूषणोऽपि न विश्वामित्रानुसारी, अर्जुन इव धनंजयोऽपि मार्गणविहितदानजितकर्णोऽपि धर्मनन्दनाज्ञाकरोऽपि न कृष्णाप्रियः, सुधांशुरिव कुवलयोल्लासकोऽपि ईश्वरचूडामणिरपि ह्लादनाभिख्योऽपि न कुमुदबन्धुः, दिनमणिरिव लोकबान्धवोऽपि प्रकृतिचक्रानन्दनोऽपि द्विजगणप्रार्थितोदयोऽपि न तपनः, अनन्त इव क्षमाभरणगुरुरपि अहीनोऽपि विमलरत्नाभिराममौलिरपि न बिलेशयः, पाकशासन इव महनीयस-

न्तानानन्दनसंपदपि सुधर्माधिष्ठितोऽपि जिष्णुरपि न गोत्रभित्, चित्रभानुरिव पावकोऽपि अस्वप्नगणतर्पणोऽपि नाश्रयाशः, शमन इव दण्डधरोऽपि समवर्त्यपि नान्तकः, वरुण इव प्रचेता अपि भुवनपालकोऽपि न पाशी, समीरण इव जगत्प्राणोऽपि सदागतिरपि न प्रभञ्जनः, यक्षराडिव श्रीप्रदोऽपि निधीशोऽपि न मनुष्यधर्मा, ईशान इव स्मरजेताऽपि सर्वमङ्गलोपेतोऽपि न विषमदर्शनः, किं च लक्ष्मण इव सुमित्रानन्दनः, वृकोदर इव भीमसेनः, देवव्रत इव शान्तनव भावोपेतः, पूरुरिव शर्मिष्ठातनुभुः, मुनिरिव सदाचारप्रणिहितदृष्टिः, अपि च धराधीश्वरोऽपि अधराधीश्वरः, दर्पकरूपोऽप्यदर्पकरूपः, खिलधर्मप्रतिष्ठापकोऽप्यखिलधर्मप्रतिष्ठापकः, अपि च मेरुरिव बुधानाम्, त्रिविक्रमचरणः सत्कीर्तिसुरसरितः, मलयाचलः सज्जनचन्दनानाम्, पूर्वाद्रिर्धर्मार्कमण्डलस्य, वसन्तः सत्क्रियावल्लरीणाम्, वारिधरोऽरिप्रतापग्रीष्मोष्मणाम्, ओषधीशः सत्पुरुषकैरवाणाम्, उष्णांशुर्विमतकौशिकानाम्, मूलालवालः करुणालतायाः, अभूमिर्लोकापवादानाम्, अनभिज्ञो नास्तिकाचारस्य, पुञ्जो गुणानाम्, पूर्वसुकृतपरीपाकः प्रकृतीनाम्, उदाहरणं सत्पुरुषलक्षणानाम्, उत्पातो दोषाणाम्, आस्थानं सर्वकलानाम्, अम्भोधिः सर्वराज्यलक्ष्मीसरिताम्, धुरंधरो विश्वंभरायाः, विहारालयो रमासरस्वत्योः, किं च कर्ता वेत्ता च सकलकाव्यानाम्, हर्ता भेत्ता च रिपुसंपदाम्, त्राता नेता च सकलप्रजानाम्, मन्ता यन्ता च समयाचाराणाम्, द्रष्टा यष्टा च क्रतूनाम्, आदेशो रामचन्द्रस्य, अनन्यः फल्गुनात्, प्रेमबन्धो वासुदेवस्य, प्रतिबिम्बो नृगनलनहुषययातिभरतभगीरथप्रभृतीनां पूर्वमहीभुजाम्, दैनंदिनदानधारापूरसंवर्धितसत्कीर्तिलति

काप्रतानकुसुमस्तबकाविसंवादितारकानिकाय., कायजसुन्दर., सुन्दरजलजस्यन्दिमरन्दधाराकचाकर्षणविचक्षणवचनचातुरीविस्मापितपण्डितप्रपञ्च', प्रपञ्चप्रथितशुभचरित , चरितसकलधर्म., धर्मव्यवस्थापनायत्तात्मा, आत्मविज्ञानविमलतरनिजहृदय , हृदयहारिगुणगणमहित., महितोरुविक्रमविनिर्जितविसर', विसरदप्रतिहतवैभव , वैभवाधरीकृतनिखिलप्रत्यनीक , अनीकशतपरिक्षुण्णधरावलय , धरावलयैकराज , राजराजविभूतिशोभित , शोभितस्फारानुभाव:, भावज्ञ:, अवज्ञाऽपात्रम् , पात्रं द्विजगणाशिषा प्रसरस्य, रम्यात्मकथ , कथावशेषितारिपुराजि., राजिमीडकुलमण्डनायमान , मानधन:, धनोपचयतर्पितवनीपकसहस्र , सहस्राक्षविक्रम., विक्रमोल्लासितमहिमा, हिमांशुमण्डलरुचिरवदन:, वदनावलोकनोत्कण्ठितसर्वप्रज , सर्वप्रजापालननिस्तन्द्र , राजा परीक्षिन्नाम ॥

यश्च जिष्णुना भटवर्गेण, पावकेन पुरोधोगणेन, सर्वकर्मविचारिभिश्चारै:, पुण्यजनै. सभासदै., प्रचेतसा भृत्यनिवहेन, आशुगैस्तुरङ्गमै., धनदैरुपजीविभि , सर्वज्ञैरमात्यैश्चानवरतपरिवृतो लज्जापयतीव राज्ञामखिलदिशाधीशाशावतारवर्णनमुखरमुखान् महाकवीन् ॥

यस्य च वीराशंसनेषु दुर्वारगर्वाभियातिकुलप्राणप्रभञ्जनप्रदाकुभावभीषणकरालकरवालवल्लीविदलितारातिभटसहस्रवक्ष.पीठीनिरर्गलविनिर्गलद्रुधिरपूरपानोन्मत्तभूतवेतालसमुदीर्यमाणोत्तालकिलिकिलारावमेदुरो जयति वैमानिकजनसाधुवाद. ॥

यद्भुजपरिपालिता अनुरूपवल्लभसमागमोपनतमनुभवन्ती महत्सुखमतिचिरोपनत तत्रातिनृशंसनरपतिसंपद्दुःख सर्वतोऽपि विसस्मार विश्वम्भरा ॥

यस्मिंश्च हेलया बिभ्रति भुजेन मणिवलयमिव मण्डलं भुवः, स्नेहक्षयः प्राभातिकदीपेषु, वीणा एव परिवादिन्यः, अवकीर्णता कुसुमलाजेषु, उन्मत्ततौषधिविशेषेषु, गुणभङ्गः समरेषु, वक्रता युवतीकैश्ये, कार्कश्यं कान्ताकुचमण्डलेषु, भीरुता मदनसेनासु, क्षणिकता शम्पास्वेव, राजद्वेषः कमलेषु, प्रदोषाभिव्यक्तिस्तारकासु, काव्याप्रियता गुरौ, द्विजराजतिरस्करणं स्वर्भानौ, आश्रयाशः कृष्णवर्त्मा, अबलोद्विजना झषाः, असंख्यजीवनो जलधिः, क्रूरसत्वाश्रयः परं दाव आसीत् ॥

यस्य च भ्रूणभाव एव दुर्दान्तगुरुतनयप्रयुक्तकरालास्त्रशिखिशिखासंघातेन तदुपशमनार्थोद्यतमहस्रारतेजोनिवहेन समुत्तेजित इव सकलरिपुबलविप्लोषणपटुरनवरतमपि जज्वाल प्रतापानलः ॥

यस्य च पाकारिविभूतेरनेकपाननशोभितबाह्याङ्गणस्य पराभिभूतिकरहेतेः रिपवस्तादृशा अपि पङ्कमेव प्रकटयन्ति । विमदस्य दान्तान्तःकरणस्य सुहृदयशस्यानुभावस्य उद्दामसत्वस्य संमुखमापतिता द्विषन्तस्तद्विधा अपि दन्तमेव प्रकटयन्ति विलक्षाः । जन्याभीतवर्तनस्य मूक्तिभरलसमानस्य यस्य रिपवस्तद्विधा अपि भङ्गमेव केवलं दधति । यश्च सौम्यो रथचक्रान्तविश्वंभरावलयो विततान्वयविख्यातिकराभिख्यो निजसुकृतसमासादितसुरनिलयचिरनिवाससुखः क्रतुशतविधानविहितमहेन्द्रवैभवविचित्रवीर्यप्रभवः प्रज्ञातिशयसाक्षात्कृतसकलविषयः अजातशत्रुः प्राप्तसमरविजयः तरुणिमसमुद्भिन्नतबलविक्रमसाहसश्चाभिन्न एवान्ववायमहत्तरेभ्यो भरतपूरुनहुषययातिशन्तनुधृतराष्ट्रयुधिष्ठिरफल्गुनाभिमन्युभ्यो रञ्जयामास निखिलमपि प्रकृतिमण्डलम् । यस्मै च पुरुषोत्तमाय जगति विधात्रे

लोकानामुग्राय दुर्हृदां जिष्णवे वैरिणामभङ्गुरधिषणाय कार्यसंकटेषु राज्ञे विश्वम्भरायाः मित्राय सतां प्रभञ्जनाय विरोधिवरूथिनीनामखिलदेवतामयायेव भगवते बलिमुपजह्रुश्चतुरुदधिवेलावलयितायां भुवि सर्वेऽपि राजानः ॥

तस्य च महीभृतो युगान्तरचरितविलोकनस्पृहया धरण्यां कृतावस्थानेव कचिदादियुगसंपन्महनीयराजर्षिगणचिराध्युषिता, अपहसद्भिरिव श्वेतिम्ना हेमखण्डफेनपिण्डशशिखण्डपुण्डरीकाणि अजस्रविहरमाणात्मतनयाविलोकनस्पृहानुप्राप्तस्य कल्लोलैरिव कलशपयोनिधे अभ्यन्तरलसमानमहिलाजनविलासमनोहरैः रमणीयमणिमयवातायनव्रातविलोचनविलोकितामरावतीसंपदियत्तापरिज्ञानप्रकटितहासैरिव शिखरतटप्रत्युप्तहीरमणिगणनिर्निरोधोर्ध्वप्रसृतकान्तिच्छटानिरन्तरवियदन्तरतया आत्मेश्वरान्वयगुरोरमृतांशो कलङ्कमपनोदितुमागृहीतवर्णसुधाकूर्चैं दूरप्रसारितैरिव करसहस्रैरतिविपुलपरिणाहैः सौधमण्डलैरुपचितशोभासमुदया, विशालागाधपरिखावलयपरिवीतप्रांशुप्राकारतया अनुकुर्वन्त्यपाराकूपारनीरपरिवृतां भगवती विश्वंभरा, विततगवाक्षतलसंलक्ष्यमाणवनिताजनवदनकुन्तलनयनोरोजशोभाभिरामतया अनिशमप्यक्षीणरोचिषस्तुहिनांशून् तुहिनकरसहस्रविलसेऽप्यनपास्तविस्तरणानि तिमिराणि तिमिरसमुज्जृम्भणेऽप्यनासादितव्यामीलनानि कोकनदानि अविरहितप्रियाः कोककुटुम्बिनीश्च दधाना, चपलैकमर्गप्रतिपन्नायशोमार्गमार्जनव्यसनिना पद्मभुवा निर्मिताभिरपराभिरिव रमाभिः सीमन्तिनीभिर्नितान्तरमणीया, अमरावतीव विबुधचरितापि सुधर्मोपशोभितापि न विमानवती, तेजोवतीवापगततमःप्रसरापि पावकासेविताऽप्यशुचिदूरा, संयमनीव दुष्कृतविहितशिक्षापि शास्त्रविक्रमनि-

भयापि न नरकयातनावती, दक्षावतीव प्रबलरक्षोज्ज्वलापि विविधमणिस्फुरणकर्बुरापि न कोणपख्याता, शुद्धावतीव सततसंवर्धितजीवनाधारापि गौरसुरभिक्षीरपूर्णापि न पातालतलसंनिवेशा, गन्धवतीव सदागतिप्रियापि चरद्भद्रमृगापि नाशुगमपद्रूपा, अलकेव पुष्पकाधिवासितापि स्फुटतरनरवाहद्भिरपि न कलितयक्षसबाधा. कान्तावतीव सर्वज्ञार्योपशोभिताऽपि ईश्वरकृतमाहात्म्यापि न पिशाचावासा, भोगवतीव अहीनगणभूषितापि कुण्डलिकुलरम्यापि न जिह्मगनिवासिजना, अपि चायोध्येव विख्यातमानवकुलनिवासा, मधुरेव द्योतितशूरसेना, मिथिलेव लभमानमोदजनदर्शना, माहिष्मतीव नर्मदोपशोभितोपकण्ठा, सुशीलवनितान्तरङ्गलाल्यापि कुशीलवनितान्तरङ्गलाल्या, बलोपशोभिताऽप्यबलोपचयशोभिता नगरी हस्तिनावती नाम ॥

या खल्ववगाहनागतामरसिद्धसाध्यगन्धर्वसुन्दरीबृन्दाचिकुरभरपरिगलितसुरतरुकुसुमनिकरविसरदपरिमितपरिमलमिलदमलनीरया सुरनरमुनिगणोपास्यमानतीरया भगीरथपथानुयातपूरया दुर्मोचदुरितमोचनपटीयस्या महानटजटाजूटतटीनटीभवत्कूपीटया भगवत्या जाह्नव्या परिवृतपरिसरा विमलतरमूर्तिकाकलितकाञ्चीदामावृतनितम्बेवालक्ष्यते । या चामर्षणीयदुर्योधनापराधसमुज्जृम्भितामर्षप्रकर्षपरवशसंकर्षणलाङ्गलाग्रकर्षणनिम्नीभूतैकदेशा धर्मापेततादृग्दुष्टनरपालकसमागमोपनतदुरितापनोदनायात्रगाढेव भगवती भागीरथीमालक्ष्यते ॥

तस्यां च मेरुगुहायामिव केसरी विहरमाण. स राजा सकलकलाकलापपरिलोडनव्यायामपरिकिणितमतिभिः, प्रतिक्षणप्रोल्लसत्प्रतिभाप्रकर्षप्रकटितप्रज्ञै., प्रज्ञातिशयनियतव्यवस्थापितराज्यधर्मतया अपहसद्भिरिव सुरासुरपुरोधसौ गुरुकवी, प्रकृतिरञ्जनैः, अनपायनयवि

॥ श्रीः ॥

# ॥ भाट्टसारः ॥

---

रघुवरचरणद्वन्द्वध्यानसुधास्वादनित्यतृप्तेन ।
श्रीकृष्णतातसुधिया क्रियते कुतुकेन भाट्टसारोऽयम् ॥

प्रमाणाधीनसिद्धिकतया प्रमेयस्य प्रमाणमादौ निरूप्यते। तत्र प्रमाकरणं प्रमाणम् । अनधिगताबाधितार्थज्ञानं प्रमा । स्मृतिव्यावृत्तये अनधिगतेति । भ्रमव्यावृत्तये अबाधितेति । धारावाहिकबुद्धिस्थलेऽप्युत्तरोत्तरज्ञानानां पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविषयकतया नाव्याप्तिः ; नीरूपस्यापि कालस्य रूपस्येवानुभवानुरोधेन प्रत्यक्षवेद्यत्वाभ्युपगमात् । अत एव हि किमत्र घटोऽवस्थित इति पृष्ट प्रतिब्रूते— अस्मिन् क्षणे वर्तमानतया मयोपलब्ध इति । प्रकृष्टं कारणं करणम् । अनन्यथासिद्धनियतपूर्ववृत्ति कारणम् । तत् त्रिविधम्-- उपादानासमवायिनिमित्तभेदात् । यत्र तादात्म्येन कार्यमुत्पद्यते तदुपादानम् । यथा-- तन्तवः पटस्य ; अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योश्च तादात्म्याभ्युपगमात् । तादात्म्यं च भिन्नाभिन्नत्वम् । ननु भेदाभेदौ मिथो विरुद्धौ कथमेकत्र स्यातामिति चेन्न; घटोयमित्यादिसमानाधिकृतप्रत्ययेन तयोः सहभावसिद्धेः ; अत्यन्ताभेदे अत्यन्तभेदे वा तथा प्रतीतिविरहात् । न हि घट. कलश इति घटः पट इति इति वा समानाधिकृतप्रत्ययः । उपादाने तादात्म्येन प्रत्यासन्नं कारणमसमवायिकारणम् ।

यथा तन्तुसंयोग पटस्य । यत्तु तन्तुरूपं पटरूपस्यासमवायिकारण मिति, तन्न; तन्तुरूपापेक्षयातिरिक्तस्य पटरूपस्याप्रतीते, तन्तुषु-पटभावमापन्नेषु तन्तुरूपस्यैव पटरूपतया प्रतीतेः । अत एवाति रिक्तचित्ररूपमपि नास्त्येव । तदुभयभिन्नं कारणं निमित्तकारणम् । यथा—तुरीवेमादिकं पटस्य । उक्तत्रिविधकारणजन्यत्वं भावकार्यस्यैव । अभावकार्यस्य तु निमित्तकारणमात्रजन्यत्वम्, तस्य क्वचिदपि तादात्म्याभावात् । तत्सिद्धं प्रमाकरणं प्रमाणमिति ॥

तानि च प्रमाणानि षट्— प्रत्यक्षानुमानशब्दोपमानार्था-पत्त्यनुपलब्धिभेदात् । तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम् । इन्द्रि-यार्थसंप्रयोगजन्यं ज्ञानं प्रत्यक्षम् । तत् द्विविधम्— निर्विकल्पकस विकल्पकभेदात् । वैशिष्ट्यानवगाहि ज्ञानं निर्विकल्पकम् । जात्या-दिवैशिष्ट्यावगाहि ज्ञानं सविकल्पकं । यथा— घटोऽयं नीलोऽयमि-त्यादि । ननु निर्विकल्पके किं प्रमाणमिति चेन्न; जात्यादिविशि ष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डीति ज्ञानवदि-त्यनुमानस्यैव प्रमाणत्वात् । अथ प्रत्यक्षप्रमायां किं कारण-मिति चेत्, निर्विकल्पके इन्द्रियसंप्रयोगः, सविकल्पके तु विशे-षणज्ञानरूपं निर्विकल्पकमेवेति गृहाण ॥

इन्द्रियं द्विविधम्— बाह्यमाभ्यन्तरं चेति । बाह्येन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्राणि । आभ्यन्तरं मनः । घ्राणरसनचक्षुस्त्व-गिन्द्रियाणि पृथिव्यप्तेजोवायुरूपाणि । श्रोत्रं तु दिग्रूपम् । आकाश-रूपमिति सुचरितमिश्राः । इन्द्रियार्थसंप्रयोगश्चतुर्विधः—संयोगः, सं-युक्ततादात्म्यम्, संयुक्ततादात्म्यवत्तादात्म्यम्, तादृशतादात्म्यवत्तादा-त्म्यं चेति । चक्षुरादिना घटादिद्रव्यप्रत्यक्षे संयोगः संप्रयोगः । शब्द-

स्यापि विभुद्रव्यत्वाभ्युपगमात् तत्रापि संयोग एव संप्रयोगः । ननु श्रोत्रस्य दिगात्मकस्याकाशात्मकस्य वा विभुत्वेन क्रियाविरहात् विभुना शब्देन कथं सयोग इति चेन्न, विभुद्वयस्य अजसंयोगाभ्युपगमात् । कण्ठताल्वादिव्यापारस्य तज्जन्यध्वनेर्वा व्यञ्जकत्वाभ्युपगमान्न सर्वदा शब्दसाक्षात्कारप्रसङ्गः ; वर्णस्यैव नित्यत्वाभ्युपगमात् । गुणकर्मगोत्वादिप्रत्यक्षे संयुक्ततादात्म्यम् । गुणत्वादिप्रत्यक्षे संयुक्ततादात्म्यवत्तादात्म्यम् । गुणत्वादिगतसत्ताप्रत्यक्षे उक्ततादात्म्यवत्तादात्म्यम् ॥

## इति प्रत्यक्षनिरूपणम् ॥

---

## अथानुमाननिरूपणम् ॥

अनुमितिकरणमनुमानम् । व्याप्तिज्ञानजन्यं ज्ञानमनुमिति । व्याप्तिश्चाशेषसाधनाश्रयाश्रितसाध्यसंबन्ध । स च व्यभिचारज्ञानाभावसहायेन भूयो दर्शनेन गृह्यते । व्याप्तिज्ञानं च पक्षधर्मताज्ञानसहकृतमनुमितिं जनयति । व्याप्तिपक्षधर्मताज्ञाने क्वचित्साधनवाक्याधीने । साधनवाक्यं च प्रतिज्ञाहेतूदाहरणत्रयम्; उदाहरणोपनयनिगमनत्रयं वा; न तु पञ्चावयवम् । तत्र पर्वतो वह्निमानिति प्रतिज्ञा । धूमवत्त्वादिति हेतु. । यो यो धूमवान् स वह्निमान्, यथा—महानस इति उदाहरणम् । धूमवांश्चाय पर्वत इत्युपनयः । तस्मादयमपि वह्निमानिति निगमनम् । तच्चानुमानमन्वयिरूपमेकमेव, न तु केवलव्यतिरेकिरूपम्; साध्याभावे हेत्वभावव्याप्यत्वस्य हेतुना साध्यानुमितावनुपयोगात् व्यतिरेकव्याप्तिग्रहदशायां साध्यप्रमितेरर्थापत्तिरूपत्वात् । अत एव नान्वयव्यतिरेकिरूपमपि ॥

अनुमानदोषो द्विविध.— प्रतिज्ञादोषो हेतुदोषश्च । प्रतिज्ञा-विरोधादय प्रतिज्ञादोषाः । तत्र प्रतिज्ञाविरोध· स्ववाग्विरोधः । स च त्रिविध.— उच्चारणधर्मधर्मिभेदात् । आद्यो यथा— यावज्जीवमहं मौनीति । अत्र स्वपक्ष प्रतिज्ञोक्तिमात्रेणैव बाध्यते । द्वितीयो यथा— सर्वं वाक्यं मृषेति । अत्र सर्वान्तर्गतस्य स्ववचनस्य मृषात्वे इतरेषां वाक्यानां सत्यत्वसिद्ध्या स्वपक्षबाध· । तृतीयो यथा— वन्ध्या मे जननीति । अत्र जननीति धर्मिनिर्देशेन स्वपक्षबाधः । अधिक वार्तिके द्रष्टव्यम् ॥

हेतुदोषोऽपि त्रिविध — असिद्धिरनैकान्तिकत्वं बाधकत्वं चेति । तत्रासिद्धि पञ्चधा— स्वरूपासिद्धिसंबन्धासिद्धिव्यतिरेकासिद्ध्याश्रयासिद्धिव्याप्त्यसिद्धिभेदात् । यथा— बुद्धो धर्मवेदी सर्वज्ञत्वादिति स्वरूपासिद्धि । न हि सर्वज्ञत्वस्वरूपं क्वचिदस्ति, ईश्वरस्यापि सर्वज्ञत्वनिराकरणादिति केचित् । वस्तुतस्तु शशशृङ्गादिहेतुके स्वरूपासिद्धिर्बोध्या । वह्निरदाहकः शीतत्वादिति सबन्धासिद्धि· ; शैत्यस्य वह्निसंबन्धाभावात् । गोशब्दः सास्नादिमद्वचन गोशब्दत्वादिति व्यतिरेकासिद्धिः ; न हि धर्मिव्यतिरेकेण गोशब्दत्वं नाम किंचिदस्ति । नित्यमाकाशम् अनवयवद्रव्यत्वादिति आकाशानङ्गीकर्तृसौत्रान्तिकं प्रत्याश्रयासिद्धिः । वायुराकाशानन्यः मूर्तत्वादिति व्याप्त्यसिद्धि· ; मूर्तत्वस्याकाशव्याप्त्यभावात् ॥

अनैकान्तिकत्वं द्विविधम्— सव्यभिचारं सप्रतिसाधनं च । तत्र सव्यभिचार यथा — नित्य शब्द , अमूर्तत्वादिति ; नित्यत्वशून्येषु कर्मादिषु अमूर्तत्वसत्त्वात् । सप्रतिसाधनं यथा— अप्रत्य-

क्षो वायुः, द्रव्यत्वे सत्यरूपत्वात्; प्रत्यक्षो वायु, महत्त्वे सति स्पर्शवत्त्वादिति । अत्र द्वयमप्यनिर्णायकम्; किंतु संशयहेतुः; उभयोरप्यगृह्यमाणबलाबलत्वात् । बाधको यथा— नित्यः शब्दः कृतकत्वादिति । अत्र कृतकत्वं नित्यत्वाभावसाधकतया बाधकम् ॥

## इत्यनुमाननिरूपणम् ॥

---

## अथ शब्दनिरूपणम् ॥

अथ शब्दो निरूप्यते । शाब्दप्रमाकरणं शब्दप्रमाणम् । शाब्दप्रमा च शब्दजन्यतात्पर्यविषयाबाधितार्थसंसर्गानुभवः । अत्र शब्दस्तज्ज्ञानं वा, पदार्थस्तज्ज्ञानं वा करणम् । वाक्यार्थज्ञानं फलम् । आकाङ्क्षा, योग्यताज्ञानम्, आसक्तिः, तात्पर्यज्ञानं चेति चत्वारि सहकारिकारणानि । तत्र पदार्थाना परस्परापेक्षाविषयत्वमाकाङ्क्षा, क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाश्चापेक्षाविषयत्वात् । अपेक्षाशून्यतादशायामपि शाब्दबोधाद् योग्यत्वमुपात्तम् । तच्चापेक्षाविषयतावच्छेदकधर्मवत्त्वम् । जिज्ञासात्मकापेक्षाविरहदशायामपि तद्विषयतावच्छेदकक्रियात्वकारकत्वादिधर्मसद्भावान्न दोषः । योग्यता च तात्पर्यविषयसंसर्गाबाधः । यथा— पयसा सिञ्चेदित्यादौ । अग्निना सिञ्चेदित्यादौ तदभावान्न योग्यता । 'स प्रजापतिरात्मनो वपामुदखिदत्' इत्यादावपि तात्पर्यविषयतूपरपशुप्राशस्त्याबाधात् योग्यतोपपत्तिः । पदजन्यपदार्थोपस्थितिरासक्तिः । मानान्तरोपस्थापितपदार्थानामन्वयबोधविरहात् पदजन्येति । अत एव द्वारमित्यादौ पिधेहीति पदाध्याहारः । एवमिषेत्वेत्यादौ छिनद्मीति पदाध्या-

हार । यद्यपि लिङ्गादिविषया पदजन्योपस्थितिविषयस्यान्वयबोध-प्रसङ्ग.; तथापि वृत्त्या पदजन्यत्वस्य विवक्षितत्वान्न दोष. ॥

वृत्तिस्त्रिविधा—शक्तिः, लक्षणा, गौणी चेति । तत्र शक्ति. पदानामर्थेषु मुख्या वृत्ति । यथा— घटपदस्य घटत्वजातौ । सा च पदार्थान्तरम् । तद्विषयोऽर्थ शक्य इत्युच्यते । तत्र जातेरेव शक्यत्वम, न तु व्यक्तीनां, आनन्त्यात् । कथं तर्हि गवादिपदाद्व्यक्तिलाभ इति चेत्, जातेर्व्यक्तिसमानवित्तिवेद्यत्वादिति ब्रूम । अथवा लक्षणया आक्षेपाद्वा व्यक्तिलाभ इति । बोध्यसंबन्धो लक्षणा । सा च पदस्येव वाक्यस्यापि । यथा— गङ्गाया घोष इत्यादौ गङ्गादिपदस्य तीरे, 'वायुर्वै क्षेपिष्ठा' इत्याद्यर्थवादवाक्यस्य च प्राशस्त्ये । सा द्विविधा— केवललक्षणा लक्षितलक्षणा चेति । साक्षात्सम्बन्धरूपा केवला, यथा— गङ्गाया घोष इत्यादौ प्रवाहसंयोग. । परंपरासंबन्धरूपा लक्षितलक्षणा, यथा द्विरेफादिपदस्य भ्रमरे । तत्र हि द्विरेफपदबोध्यस्य रेफद्वयस्य भ्रमरे स्वघटितपदवाच्यत्वरूप परंपरासंबन्ध एव । पुनरपि लक्षणा द्विविधा—जहल्लक्षणा अजहल्लक्षणा चेति । यत्र वाच्यार्थस्याभानम, सा जहती । यथा—गङ्गायां घोष इत्यादौ केवलतीरे । गङ्गातीरे लक्षणायां तु अजहल्लक्षणैवेति केचित् । पदार्थान्तरेणानन्वयात्तत्रापि जहत्येवेत्यन्ये । यत्र वाच्यार्थस्य भानम्, सा अजहती । यथा छत्रिणो यान्तीति । तत्र हि छत्र्यच्छत्रिसाधारणैकसार्थवाहित्वावच्छिन्ने लक्षणा । लक्ष्यमाणगुणसंबन्धरूपा वृत्तिर्गौणी । यथा— सिंहो माणवक इत्यत्र सिंहशब्दस्य माणवके । तत्र हि सिंहशब्दलक्ष्यस्य सिंहगतशौर्यस्य . स्वसदृशशौर्यरूपसबन्धात् माणवकबोध । खपुष्पं

भवत्सिद्धान्त इत्यत्रापि खपुष्पादिगताप्रामाणिकत्वादिसदृशाप्रामाणिकत्ववत्त्वं सिद्धान्तेऽस्तीति गौणीनिर्वाह ; अमतोऽपि शब्दजन्यज्ञानविषयत्वाङ्गीकारात् ; भावरूपधर्मानाधारत्वेऽपि अभावरूपधर्माधारत्वाङ्गीकाराच्च । तात्पर्यं च तदर्थप्रतीतिप्रयोजनकत्वम् । तच्च न तदर्थप्रतीतिगोचरवक्त्रिच्छारूपम , वेदे अपौरुषेये तदसंभवात् । किं तु तदन्यार्थप्रतीतीच्छया अनुच्चरितत्वे सति तदर्थ प्रतीतिजननस्वरूपयोग्यत्वं तादृशप्रतीतिजनकतावच्छेदकशक्तिमत्त्वरूपम्; कारणेषु सर्वत्र कार्यानुकूलशक्त्यङ्गीकारात् । यदा लवणबोधतात्पर्येण सैन्धवमानयेत्युक्तम्, तदापि अश्वबोधस्वरूपयोग्यताया अनपायात् अश्वतात्पर्यवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यम् । यद्यपि ईदृशतात्पर्यम् आर्थवादिकयथाश्रुतार्थसाधारणमिति तत्र तात्पर्याविषयत्वव्यवहारानुपपत्ति ; तथापि न्याययुक्तार्थप्रतीतिजननस्वरूपयोग्यत्वमेव वैदिकवाक्ये तात्पर्यमित्यङ्गीकारान्न दोष । ईदृशतात्पर्यनिर्णयस्य न्यायनिर्णयाधीनतया तन्निर्णयाय मीमांसाप्रवृत्ति । अलौकिक एव वा तत्प्रतीतीच्छासमानाकारः वेदवाक्यनिष्ठः वेदे तात्पर्यम् । तन्निर्णयश्च मीमांसया । लोके तु तत्प्रतीतिगोचरवक्त्रिच्छैव तत् । तच्च प्रकरणादिना ज्ञेयम् । ईश्वरेच्छैव वा वेदे तात्पर्यमित्यपि शक्यं वक्तुम् ॥

तच्च शब्दप्रमाणं द्विविधम्--पौरुषेयमपौरुषेयं च । पौरुषेयमाप्तवाक्यम्, अपौरुषेयं वेदवाक्यम् । तच्च द्विविधम्—मन्त्रब्राह्मण भेदात् । अभियुक्तानां मन्त्रपदवाच्यत्वप्रकारकनिश्चयविषयो मन्त्र । मन्त्रपदवाच्यतावच्छेदकश्चाखण्डोपाधि । मन्त्रभिन्नवेदत्वम्, अखण्डोपाधिर्वा ब्राह्मणत्वम् । यत्तु विधायकत्वं ब्राह्मणत्वमिति, तन्न ;

मन्त्रकाण्डसमाम्नाते 'वसन्ताय कपिञ्जलानालभेत' इति मन्त्रेऽतिप्रसङ्गात् । ब्राह्मणं द्विविधम्— विध्यर्थवादभेदात् । प्रवर्तनानिवर्तनान्यतरबोधकं वाक्यं विधिः । प्रवर्तनानिवर्तने प्रवृत्तिनिवृत्तिजनकव्यापारौ । तौ च लोके अयमत्र प्रवर्ततामयमस्मान्निवर्ततामित्याकारकपुरुषाशयरूपौ । वेदे तु तदसंभवात् लिङादिनिष्ठौ उक्तपुरुषाशयसमानाकारौ अलौकिकौ धर्मौ ; वेदस्थलिङादिप्रेरितो यजे इति व्यवहारात् । तत्र नञ्समभिव्याहाररहितलिङादिना प्रवर्तना, तत्सहितलिङादिना च निवर्तनाभिधीयते । शक्यतावच्छेदकस्तु इच्छाऽलौकिकधर्मोभयसाधारणो विषयिताविशेषः ।

विधिश्चतुर्विध —— उत्पत्तिविनियोगप्रयोगाधिकारविधिभेदात् । तत्र कर्मस्वरूपबोधको विधिरुत्पत्तिविधिः । कर्मस्वरूपबोधकत्वं च कर्मस्वरूपनिष्ठाज्ञातज्ञाप्यत्वशब्दितविधेयताख्यविषयताविशेषशालिबोधतात्पर्यकत्वम् । भवति चेदम् 'अग्निहोत्रं जुहोति' इत्यादौ ; तेन कर्मस्वरूपस्यैवाज्ञातस्य ज्ञापनात् । इष्टसाधनताबोधको विधिर्विनियोगविधिः । यथा—— 'अग्निष्टोमे प्रवृणक्ति' इति । अनेन हि प्रवर्ग्यस्य अग्निष्टोमोपकाररूपेष्टसाधनता अज्ञाता ज्ञाप्यते । एवम् 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्याद्यपि ग्राह्यम् । तत्र हि स्वर्गसाधनता अज्ञाता ज्ञाप्यते ; परं तु न विनियोगमात्ररूपम् । कृतिसाध्यत्वबोधको विधिः प्रयोगविधिः । यथा—— अस्मिन् काले अस्मिन् देशे साङ्गप्रधानं कुर्यादित्येवं रूपः । अधिकारबोधको विधिरधिकारविधिः । यथा—— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । क्वचिदेकस्य विधिद्वयरूपत्वं विधित्रयरूपत्वं विधिचतुष्टयरूपत्वं च संभवति । यथा—— 'समिधो यजति' इत्यस्य उत्पत्तिविनियोगोभयपरत्वम्, प्रयोगा-

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे ज्येष्ठमासः । [संचि. ३.

## सुभाषितानि ॥



विमलकलाश्रयभास्व-
द्बुधधिषणोज्ज्वलरसोद्भवानुगताः ।
विलसन्ति यस्य गावः
स कविर्भुवने जयत्यधिकम् ॥ १ ॥

सुवर्णश्रीरम्या ललितपदविन्यासमधुरा
विचित्रालङ्कारा विविधरसभावोज्ज्वलगुणा ।
विराजत्सद्वृत्ता विलसदनुभावैकचतुरा
रसज्ञानां हर्षं विरचयति कान्तेव कविता ॥ २ ॥

रसभरनि[illegible]नां दर्शनादेव नूनं
प्रभवति रसिकानां कोऽपि चेतोविकारः ।
प्रथमरसनिदाने जायमाने सुधांशौ
द्रवति हि सरलान्तःप्रक्रमश्चन्द्रकान्तः ॥ ३ ॥

चक्रवर्ती श्रीवेङ्कटाचार्यः ।

# शिवलीलार्णवविमर्शः ॥

अनन्तरं तृतीये सर्गे इन्द्रस्य वृत्रवधजनितहत्यया विद्रावणं तत्स्थाने अयथावदनुष्ठिताश्वमेधस्य नहुषस्य चाभिषेचनमनुवर्णयन् क्रतूनां यथाविध्यननुष्ठाने सत्त्वोद्रेको न भवेत्, पशुविशसनं च हिंसायामेव पर्यवस्येदित्यादि निरूपयन्, नहुषस्य दुर्वृत्तवर्णनद्वारा आत्मना सम्यगुपासितानामवितीर्णफलानां निर्दयानां सुराणां दनुजैर्दण्डनं शंसन् वैरनिर्यातनं करोतीवासौ दीक्षितः ॥

ततश्चेन्द्रस्य देवगुरुणा पाशुपतव्रतचर्योपदेशं, कदम्बवनीं यदृच्छया समागतस्य तस्य सुन्दरलिङ्गप्रसादात्तमोऽपनयनं, तदनुरोधेन विश्वकर्मणा अद्भुततमस्य देवालयस्य निर्माणं च सरसमुपपादयन् कदम्बवनेश्वरस्य सेवाया ब्रह्महत्यादिमहापातकनाशनशक्तिमुपदिशन् स्वयमपि निर्मलतरान्तःकरणश्चतुर्थं सर्गं समारभते ॥

अथ चतुर्थे अगस्त्यशापाद् भुवि भ्राम्यतोऽभ्रमातङ्गस्य चेष्टितान्यतिमधुरं वर्णयन्

'मलिनो निर्ममज्जास्मिन्नुन्ममज्जाथनिर्मलः ।
प्रागभूत्केवलो भौमः सार्वभौमोऽथ दन्तिनाम् ॥'

इति कदम्बकान्तारे हेमपद्मिन्यामवगाहनेन तस्य निर्मलीकरणं, द्रमिडान्वयमूर्धन्येन कुलशेखरेण मधुरानगरनिर्माणं च सरसमुद्गृणाति ॥

पञ्चमे मलयध्वजस्य कुलशेखरकृत उपदेशो राज्यतन्त्रनिष्णातानामत्यन्तं हृदयंगमः शुकनासोपदेशमनुकरोति ॥

षष्ठे मलयध्वजेनागस्त्यनियोगादनुष्ठिते हयमेधे समागतानां चतुस्तन्त्रप्रवर्तकाना महर्षीणां सभायामन्योन्यवादकेलीरसानुभववर्णनं सहृदयान् विनोति । तथा हि—

यद्यात्यन्तिकसुखदुःखहानिरूपं
कैवल्यं कथमशपद्भवानहल्याम् ।
तादृक्षामुपलदशां श्रयेति कोपा-
दित्यूचुः कतिचन गौतमं मुनीन्द्राः ॥ ४० ॥

कं दोषं कथयत संप्रसक्तदुःख-
व्यावृत्ति फलमुपगच्छतां पुरो नः ।
अज्ञानक्षतिरुपले तवापि किं ने-
त्याचख्युः प्रतिपदमक्षपादशिष्याः ॥ ४१ ॥

अज्ञानाद्यदि परिकल्पितं जगत्स्या-
दज्ञानां प्रथमगणेय ईश्वरः स्यात् ।
निःसीमा तव हि मतेऽस्य मूढतेति
व्यासं प्रत्यकुषत केऽपि पूर्वपक्षम् ॥ ४२ ॥

अज्ञानं प्रकृतिमपेक्ष्य विश्वमेत-
त्सर्वज्ञे सृजति भवेऽपि यत्त्वयोक्तम् ।
अज्ञानं तदिदमनङ्कुशं तवैवे-
त्याचख्युः सदसि तु बादरायणीयाः ॥ ४३ ॥

जातिश्चेद्भवति पदेषु साधुभावो
भाषायां श्रुतिषु च स द्विधा कथं स्यात् ।
गेहे गौर्वनभुवि गर्दभः किमु स्या-
दित्युच्चैरपजहसुः परे पदज्ञान् ॥ ४४ ॥

अन्येऽन्ये श्रुतिषु जगत्सु चापि शब्दा-
स्तद्भेदं निपुणमजानतां कृते व ।
अस्माभिः स्फुटमनुशिष्टमात्तमौना
वर्तध्वं पदपदवी दवीयसी वः ॥ ४५ ॥

अस्मद्व्याकरणगृहीतशक्तियोगा-
नस्मासु प्रथममिमान् प्रयुज्य शब्दान् ।
युक्ताऽदीयत गुरुदक्षिणा किलेति
प्रत्यूचुः प्रथमविपश्चितो विपक्षान ॥ ४६ ॥

हिंसातो यदि दुरितं क्रतुष्वपि स्या-
त्पुण्यं किं न भवति पारदारिकाणाम् ।
उत्सन्नं किल कुलमुद्धरन्त्यमीति
व्याजह्नुः कपिलमते कलङ्कमेके ॥ ४७ ॥

शास्त्रं चेत्किमपि तथाऽस्ति साधयामो
दुष्कृत्यैरपि सुकृतानि काऽत्र भीतिः ।
यूयं देवरवरणे यथा गृणीथे-
त्याहुः स प्रतिवचनानि तत्त्वनिष्ठाः ॥ ४८ ॥

योगाख्यं वदसि यमङ्गिनं समाधिं
तं ब्रूषे ननु कथमङ्गमष्टमं च ।
अङ्गाङ्गिव्यतिकरदुःस्थितं मतं ते
को गृह्णात्विति जगदुः परे फणीन्द्रम् ॥ ४९ ॥

सामान्यं किमिह क इष्यते विशेषः
को योगः क इव समाधिरित्यबुद्ध्वा ।

अर्वाचां व्यवहरतामय प्रलापः
माधीयानिति जहसुः पतञ्जलीयाः ॥ ५० ॥

आयास्यन्त्यनुपदमत्र हव्यहेतो-
र्नन्वास्मिन्महति मखे सुराः समस्ताः ।
तान्सर्वानपलपितास्यहो कथं वे-
त्याचख्युः कतिचन जैमिनि मुनीन्द्राः ॥ ५१ ॥

ये ह्युच्चावचमवजानते प्रपञ्चं
मिथ्येति त्रिभुवनदेशिका महान्तः ।
तच्छिष्या वयमपि शक्तितो वदामे-
त्याहुस्तान्प्रति चतुरास्तु पूर्वतन्त्रे ॥" ॥ ५२ ॥

एवंविधा वादकेलयो वर्ण्यमानास्तत्तन्मतसिद्धान्तज्ञानमुपजनयन्त्यनुवाचकानामित्यत्र न कापि संशीतिर्भावुकानाम् ॥

"प्रत्यक्षं विबुधगणेष्वदत्सु हव्यं
साकूतस्मितमवलोकित सदस्यैः ।
सिद्धान्तं स दिविषदामविग्रहत्वं
व्याचख्यौ कलहविपर्ययं महर्षिः ॥" ॥ ६२ ॥

इत्यादियज्ञमहिमानमनुवर्णयन् याज्ञिकोऽसौ महाकविरावर्जयति मानसं रसिकानाम् ॥

(क्रमशः)

॥ श्रीः ॥

# ॥ भारवेर्जीवनचरितम् ॥

---

## "भारवेरर्थगौरवम्"

इह जगति विदितपूर्वैव खलु इयं सुप्रसिद्धा महाकविसूक्तिः सर्वैरपि संस्कृतभाषाभिज्ञैः सहृदयैः । सुव्यक्तमेव खल्विदमपि सर्वेषां यत्पूर्वोक्तश्लोकोदाहरणभूतो महाकविः श्रीभारविः कर्ता किरातार्जुनीयनामकस्य महाकाव्यस्येति । परं तु अयं महाकविः कस्मिन्देशे कस्मिन् काले कस्य वा महीपतेरास्थाने न्यवात्सीत्? कस्य वा महात्मनः प्रसादादस्य विद्याधिगमः? कस्मिन् वंशे अयं समुत्पन्नः? कीदृशे वा अस्य वंशप्रशस्तिः? कति वा ग्रन्था अनेन व्यरचिषत? केषु शास्त्रेष्वस्य पाण्डिती? के वा अस्य समकालिकाः कवयः? उत के वा पूर्वकालिकाः? इत्याद्या विषयाः सम्यगस्माभिर्निश्चेतुं न शक्यन्ते । किं तु शक्यन्त एव किंचिदनुमातुम् । अयमेको महान् साधारणो दोषः प्रायेण सर्वेषां संस्कृतमहाकवीनाम्— यत् स्वकृतेषु प्रबन्धेषु स्वकीयकालवंशचारित्रादिविशदीकरणे मौनावलम्बनमिति। श्रीहर्षबाणभवभूत्यादयः कतिचिदेव महाकवयः स्वस्ववंशप्रशस्त्यादिकं नैषधीयहर्षचरितकादम्बरीमालतीमाधवादिग्रन्थेषु संग्रहेण विवव्रुः । अन्ये च तद्विषये निरादरा बभूवुः । कुत इति वयं न जानीमः ।

आसीत् खलु सकलकविकुलशिरोमणिर्महाकविः श्रीकालिदासः । तादृशस्य द्वितीयवाल्मीकेर्महाकवेः कालिदासस्य चारित्रं विज्ञातुं कालं च निर्णेतुं पाश्चात्या भरतखण्डवास्तव्याश्च विमर्शकाः

पण्डिता एतावत्पर्यन्तं बहुधा श्राम्यन्तोपि तस्य महाकवेः कालं चरित्रादिकं च याथातथ्येन स्थिरीकर्तुं नैवाशक्नुवन् । किं तु कालिदास इति नामधेयमेव परं संतोषदायकं मन्वानाः अमन्दमानन्दमविन्दन्त रसिकावतंसाः सर्वदेशीया विमर्शकाः । अस्य महाकवेर्विषये यद्यत् वक्तव्यं तत्सर्वमपि तदीयकालचारित्रादिनिरूपणावसरे विस्तरेण विवरीवरिष्याम ॥

प्रकृते तु निजवंशप्रशस्त्यादिकमवर्णितवतां महाकविपुङ्गवानामन्यतमोयं भारविः । अथापि महाकवीनां कालादिनिर्णयविषये उपायद्वितयमेव उपलभ्यते विमर्शकानाम् । तच्चान्तरङ्गहेतुप्रदर्शनं (Internal evidence) बहिरङ्गहेतुप्रदर्शनं (External evidence) चेति व्यवस्थितम् । अन्यतरपरिशीलनम्, अथवा उभयपरिशीलनं चान्तरा न काप्युपायान्तरमुपलभ्यते विमर्शकानां कविकालादिस्थिरीकरण इति सुप्रसिद्ध एवायं विषयः । अपि च अयमेव हि सर्वैरपि विमर्शकैरङ्गीकृत अनुसृतश्च पन्था. । ततोऽत्रापि ताभ्यामेवोपायाभ्यां महाकवेर्भारवे. कालादिकं निर्णेतुं वयमपि यथामति किंचित् प्रयतामहे । श्रूयते हि लोकोक्तिः "महाजनो येन गत· स पन्थाः" इति ॥

## भारवेः चरित्रम् ॥

श्रीभारविकृतत्वेनेदानीमुपलभ्यमाने किरातार्जुनीयमहाकाव्ये अस्य महाकवेर्वास्तवचारित्रनिर्णायकाः हेतवः प्रत्यक्षेण अनुमित्या वा अन्विष्यमाणा अपि यत्र क्वापि नोपलभ्यन्ते । यद्यन्येषु एतन्महाकविकृतेषु प्रबन्धेषु निश्चायका हेतव स्युरिति संभाव्यते, तर्हि तादृशाः प्रबन्धाः सन्ति वा उत नेति बलवान् विशयः ।

अथापि किरातार्जुनीयद्वितीयसर्गवर्तिनं "सहसा विदधीत न क्रियामविवेक परमापदां पदम्" इति श्लोकमधिकृत्य किमप्युपाख्यानं सुप्रसिद्ध वर्तते प्रायेण सर्वेष्वपि देशेषु । तेनोपाख्यानेनास्य महाकवेश्चरित्र किंचिदिवानुमातु शक्यते । तथाहि—

अस्य महाकवेरचरमे वयसि वर्तमानस्य पितरौ परलोकमयासिष्टाम् । ततः प्रभृति आत्मीयमातुलेन पोष्यमाण क्रमेण दशवर्षदेशीयो बभूव । तदानी शिक्षकयोर्मातापित्रोरभावेन स्वैरं तत इतः संचरणेन वृथा कालं यापयन्तममुं बालक विलोक्य, दयार्द्रहृदयो मातुलः पितृविहीनमेनं स्वयं शासितुमसहमान कस्यचित् भट्टाचार्यस्य सन्निधौ विद्याभ्यासाय प्रेषयामास । अतिक्रान्तेष्वेवं पञ्चषवर्षेषु भारविः साहित्यविद्यायामुत्तीर्णो बभूव । तत. शास्त्राणि पठितुमारेभे । तदानीं शास्त्रमधीयानेषु विद्यार्थिषु अयं सूक्ष्मग्राहीति, कुशाग्रबुद्धिरिति, असमानसाहितीनिपुण इति. कविताचातुरीधुरीण इति च परितः प्रथा काप्युदियाय । एवं स्थिते सर्वेपि तत्प्रान्तदेशीयाः श्रोत्रिया धरणीसुरा अस्य महामेधावितां साहित्यविद्यानिपुणतां शास्त्राभ्यसनचातुरी, कवितारसमधुरिमाणं च विज्ञाय अहमहमिकया स्वकीया कन्यका अस्मै प्रदातुमभिलषन्तः, अस्य विद्यागुरोः सन्निधिमेत्य भूयो भूय पुरुषकारमभ्यर्थयन्तः अस्यैव कन्यकाप्रदानं कन्यकोत्पत्तेरनुत्तमं प्रयोजनं मन्वाना अस्य महामेधाविनो भारवेर्जामातृत्वेन स्वीकरणे अनवधिकमादरं प्रादर्शयन् । अयं भारविस्तु तदानीं षोडशे वयसि वर्तमानः, विद्याग्रहणतत्परः, लोकतन्त्रानिष्णातश्च । अपि चायं कन्यकापरिशीलनादिकृत्येषु लज्जालुः । न ह्येतत्कालिका बालका इव पूर्वकालिका विद्या-

र्थित· कन्यकापरिशीलने, अनन्यसापेक्षं पाणिग्रहणादिकृत्यनिर्वर्तने चातीव खलु स्वतन्त्राः । परं तु केवल परायत्ता इत्येव वक्तव्यम् । ततो भारविः आत्मनो विद्यागुरोराज्ञया तेनैव परिशीलिता कुलशीलादिसंपन्नां सर्वैरपि प्रकारैरात्मनोऽनुरूपा सुरूपां कामपि कन्यकामुपयेमे । अत एव हि अय महाकवि स्वाभिलषितां कुलाङ्गनागुण संततिमेव प्रथमसर्गे—

गुणानुरक्तामनुरक्तसाधन·
कुलाभिमानी कुलजा नराधिपः ।
परैस्त्वदन्यः क इवापहारयेत्
मनोरमामात्मवधूमिव श्रियम् ॥ ३१ ॥

इति श्लोके आत्मवधूदृष्टान्तव्याजेन 'गुरुणानुरक्ताम्' 'कुलजाम्' 'मनोरमाम्' इति पदैर्विशदीकुर्वन्, 'अनुरक्तसाधनः' 'कुलाभिमानी' इति पदाभ्यां स्वस्य कुलाभिमानितां परिणयस्यात्मीयविद्यागुरुपुरुषकारसाधनतां च निपुणमावेदयतीति अनिर्वचनीयमानन्दमनुभवन्ति रसिकावतंसाः विमर्शकाः ॥

परिणयानन्तर चिरं गुरुकुले उषित्वा सर्वेषु शास्त्रेषु क्रमशो महतीं पाण्डितीं समपादयत् । अस्य महाकवेः केषु शास्त्रेषु विशेषतः पांडित्यमित्यंशस्तु पांडित्यनिर्णीतिप्रकरणे सम्यक् मीमांस्यते । विद्यापरिसमाप्तेरनन्तरं स्वनिकेतनमासाद्य तानि तानि शास्त्राणि विद्यार्थिनोऽध्यापयन्, चिरं गुरुकुलवासमारचय्य महता परिश्रमेण संपादितानि न्यायव्याकरणशास्त्राणि अधीतिप्रचारणाभ्या प्रतिवासरमभिवर्धयन्, प्रबन्धरचनाभिश्च अयत्नलब्धामात्मीया कवितांशक्तिमुत्तेजयन् स्वावसथ एव चिरं न्यवात्सीत् । उपार्जितानां वित्तानां

त्याग इवाधीतानां शास्त्राणां शिष्येषु प्रचारणमेव हि सम्यक् तेषा परिपोषणोपायः ॥

एवं गतेषु कतिपयवत्सरेषु अस्य महाकवेः सहधर्मचारिणी स्वगृहमाजगाम । क्रमेण कुटुम्बमपि ववृधे पुत्रैः पुत्रिकाभिश्च । आशैशवात् दरिद्र एव खल्वयं महाकविः । वंशपारम्परीतः समागतं पित्रा वा संपादितं वित्तं केदारादिकं वा नासीत् । तत्कालस्य वरशुल्कादिविदूरतया भारवेः श्वशुर. न किमपि शुल्करूपेण दत्तवान्, परं तु एकां कन्यकामेव । प्रतिवर्षं वर्धमानेऽपि कुटुम्बे याचनावृत्तिं लघुरिति, राजसेवामसिधारावलेहनमिति, सामान्यजनसेवां हीनसेवेति च मन्वानो यथालाभसंतुष्ट यत्र कुत्रापि संचरणमसहमानः स्वावसथ एव स्थित्वा पाठप्रवचनादिभिः प्रबन्धरचनाभिश्च कालं यापयन्नवर्तत महाकविपुंगव । महाशयाः! विलोकयत, श्वश्रूस्नुषाभावसंबन्धवर्तिन्योरपि लक्ष्मीसरस्वत्यो· परस्परसौहार्दमन्योन्याश्रितजनपक्षपात च, यत· यो हि सरस्वत्या प्रसाद्यते, स परित्यज्यते श्रिया । यो हि सरस्वतीं समाश्रित्य वर्तते स पुरुषो भवति सुवर्णविराजमान । किंच स एव परित्यक्त. श्रिया भवति सुवर्णविहीन· । इदमतीव विषादस्थानं यत् श्रीसरस्वत्योरन्योन्यप्रतिकूलभावेन तदाश्रिता जना नष्टभाजो भवन्ति । आस्तामेतत् । एवं 'कविता यद्यस्ति राज्येन किम्', इत्युक्तरीत्या केवलकविता धनेनैव परितुष्यत्यस्मिन महाकवौ अस्य सहधर्मचारिणी दारिद्र्यपीडां सोढुमक्षमा अन्यापदेशवचनैः सोत्प्रासवचोभिश्च प्रतिकलमस्य महाकवेः मनोविकलतामुत्पादयन्ती वर्तते स्म ॥

लोके केनापि वोढुमशक्यः खलु दारिद्र्यभारः । दारिद्र्यान्म-

रणमेव खलु सुखतर जीवलोकस्य, यतो मरणमल्पमेव• क्लेशमुपजयति, दारिद्र्यं तु यावज्जीवमनन्तं दु खमुत्पादयति । तथाचोक्तं मृच्छकटिके—

"दारिद्र्यन्मरणाद्वा मरण मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरण दारिद्र्यमनन्तकं दु खम् ॥"

अपि च—

उत्तिष्ठ क्षणमुद्वह प्रियसखे दारिद्र्यभार मम
श्रांतस्तावदहं चिर मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वेव तूष्णीं स्थित. ॥

तिष्ठन्तु पुरुषा । स्त्रिय दारिद्र्यमिति वार्तामपि श्रोतुं नोत्सहते, किमु वक्तव्य तदनुभोक्तु ता न सहंत इति । तत्रापि विशेषेण स्त्रीणां दुःसहः खलु रिक्तगृहिष्णुषात्वनरकः । तथा हि—

"न केशेषु स्नेहो न च नयनयोरंजनकथा
न वा वीटी वक्त्रे न च कुचतटे चन्दनरसः ।
न चाल्पोऽप्याकल्पो न च सुवसनं नैव कुसुमं
स्नुषात्वं पापानां फलमधनगेहेषु सुदृशाम् ॥ १ ॥

अंसौ चेदुदकुम्भभारकिणितावङ्घ्री पुनर्गोमय-
स्फायन्नास्यमलीमसौ करतल घासच्छिदाकर्कशम् ।
पाकाग्न्युत्थितधूममेलनगलद्बाष्पाविले लोचने
कष्टं रिक्तगृहिस्नुषात्वनरक. स्त्रीणामहो ! दु सह ॥"

(आत्रेयवेंकटाध्वरी ।)

दारिद्र्यतोऽपि तीव्रतरां वेदनामुत्पादयन्त्याः सहधर्मचारिण्यास्तादृशानि निन्दागर्भितानि सोल्लुण्ठनवचनानि भूयो भूयः समाकर्ण्य विदीर्णहृदयो गृहे क्षणमेकमपि स्थातुमशक्नुवन् सुदीर्घमालोच्य महीपालावलोकनेन पर्याप्तं वित्तं संपिपादयिषु. स्थिरीचकार देशयात्रां महाकविर्भारविः । अस्य महाकवेराजन्मनः अनभिज्ञातदेशयात्राप्रचारतया, अननुभूतदेशाटनपरिश्रमतया अननुसृतमहीपालतया अपरिचितमहीपालवल्लभसमार्जनोपायतया च के वा देशाः पर्यटनीया., कियद्दूरं वा गन्तव्यम्, के वा भूपालाः अनुसर्तव्याः, कीदृशा वा तद्वल्लभसमार्जनोपायाः इत्यादिपरिचिन्तयन्, 'पुरतो गर्त. पश्चात् कूपः', इति न्यायेन गृहे स्थातुं बहिर्गन्तु वा नैव शशाकायं कविकुलोत्तंसः ॥

(क्रमश·)

# भूगोलशास्त्रम् ॥

---

भानुमण्डलात् गृहीतं सर्वमप्यौष्ण्यं मही नात्मन्येव निदधाति । किन्तु तादृशस्य औष्ण्यस्य कंचिदंश वायुमण्डल नयति । येन भुवो भागेन अधिकमौष्ण्यं गृहीतं तेन औष्ण्यस्याधिकांशः वायुमण्डलं नीयते । मितमौष्ण्य गृहीतेन भूभागेन मितमेवौष्ण्यं बहिर्नीयते । अत कारणात् निरक्षप्रदेशस्थं वायुमण्डलं नितान्तमुष्णं भवति । ततः परेषु भुव प्रदेशेषु किंचित् किंचित् औष्ण्यस्य न्यूनता संदृश्यते । एवं क्रमेण औष्ण्यं न्यूनीभवति । ध्रुवप्रदेशयोः सुतरामौष्ण्यस्यैवाभावात् सततं जलकणैर्जडीकृतः प्राणिनां शरीरसंकोचहेतुः नितान्त शीत. समीरणो वाति । इममेवाशयं

मनसि निधाय शैत्यस्य औष्ण्यस्य च तारतम्यात् पञ्चधा विभज्यते धरामण्डलमिति पूर्वमेवानुवर्णितमस्माभिः । निरक्षप्रदेशात् ध्रुवाभिमुखमतिजवेन प्रसरतां प्रभञ्जनानां गतिं भूखण्डमध्यवर्तिनो महान्तः कुलाचलाः निरुन्धन्ति । उत्तरध्रुवस्य नातिदूरस्थे 'सैबेरिया' देशे सदा एकान्तशीतो वायुर्वाति । क्वचित् नगरे 'फ्रान्स'देशान्तर्गत (France) पारिस्नगरवत् निदाघेऽपि न भानोः संतापः संजायते । यत्र अनावृतेष्वपि बहिःप्रदेशेषु अतिमधुरमधुरसंपूर्णफलस्तबकनिरन्तराः मृद्वीकलताः प्ररोहन्ति । यत्र च वर्षासु 'सेण्ट् पीटर्स् बर्ग्' (रष्षियादेशे) नगर इव शैत्यस्याधिक्यमनुभूयते । एवमतिशिशिराणां प्रदेशानां समीपे यदि पूर्वं वर्णितेषु समुद्रजलप्रवाहेष्वेकः प्रवहेत्, तर्हि तादृशप्रदेशस्य शैत्यमौष्ण्यं च प्राणिनामनुभवयोग्यं समीक्रियते समुद्रजलप्रवाहसमीरणेनेत्यवगन्तव्यम् ॥

धरामण्डले तत्र तत्र विपर्यासेनोपलभ्यमानस्य औष्ण्यस्य यानि कारणानि वर्णितानि, प्रतिवर्षं वसन्तादीनां ऋतूनामुद्भवेऽपि तान्येव कारणानि निरूपयन्ति गोलतत्त्वविमर्शकाः । पतङ्गमण्डलं हि ग्रहपथयात्रायां दक्षिणतः षण्मासेषु उत्तरतः षण्मासेषु च दृश्यते । अतः किल संवत्सरमखिलं द्विधा विभज्य, निरक्षस्य दक्षिणभागस्थिते सूर्ये दक्षिणायनमिति, उत्तरभागस्थिते तूत्तरायणमिति च व्यवहरन्त्यभिज्ञाः । उक्तं ह्याचार्यविष्णुगुप्तेन—

"उदगयनं मकरादावृतवः शिशिरादयश्च सूर्यवशात् ।
द्विभवनकालसमाना दक्षिणमयनं च कर्कटकात् ॥" इति ।

यदा दिवसकरमण्डलं निरक्षस्य दक्षिणे भागे वर्तते, तदा निरक्षस्य उत्तरप्रदेशेभ्यः अतिदूरे भवति । तथा च तत्रातिदीर्घा

निशा ह्रस्वश्च भवत्यहर्गण· । अत्र हि निदानमनुवर्णित यत् सूर्यस्य किरणाः यत्र वक्रमार्गेण पतन्ति, तत्र औष्ण्यस्य न्यूनता, किरणाश्चातिदूरात् पतन्तीति । अतस्तत्र शिशिरर्तुः संप्रवर्तते । यदा पुन· किंचित् किंचिदिव भानुमण्डलमुत्तराभिमुखमायाति, तदा सूर्यस्य किरणा· प्रायेण ऋजुनैव पथा नातिदूराश्च संचरन्ते । तदाहोरात्रस्य कालः सम विभक्तो भवति । अथ क्रमेण फाल्गुनस्य प्रथमे पादे (about the 3rd week of March) पतङ्गमण्डलं निरक्षप्रदेशमागच्छति, ततः प्रस्थाय क्रमेण यदा भानुरुत्तरां दिशामायाति तदा तत्रत्यभुवो भाग· अधिकमौष्ण्य प्रकाशं च लभते । ततो रविमण्डलं खग्रहपथे उत्तरा कोटिं ज्येष्ठमासस्य प्रथमे पादे (about the 1st week of June) अधिगच्छति, तदा औत्तराणां घर्मः । पुनरपीद ज्योतिश्चक्रं भागान्तरेण दाक्षिणाभिमुख गन्तुमुपक्रमते । प्रौष्ठपदस्य प्रथमे पादे (about the 20th of September) निरक्षप्रदेशमायाति, यदा पुनरप्यहोरात्राणामायामः समो भवति । ततो भानुः मार्गशीर्षस्य प्रथम पादे (aboth the 23rd of December) खग्रहपथस्य दक्षिणं कोणमायाति यदा उत्तरस्यां दिशि शिशिरस्य प्रादुर्भावः संदृश्येत । एवमेवानुलोमविलोमाभ्या सूक्ष्मया दृष्ट्या निर्णये ऋतवः षट् संपद्यन्ते । उक्तं हि ब्राह्मस्फुटसिद्धान्ते ।

"द्वौ द्वौ मासौ मकरादृतवः षट् सूर्यगतिवशाद्योज्याः ।
शिशिरवसन्तग्रीष्मवर्षाशरद सहेमन्ता. ॥" इति ।

इत्थं हि विभक्त· कालो भगवता पराशरेण—

"यावता कालेन विकृतमक्षरमुच्चार्यते, स निमेषः । निमेषद्वयं त्रुटि· । त्रुटिद्वयं लवः । लवद्वयं क्षणः । दश क्षणाः काष्ठा । दश-

काष्ठाः कला । दशकला नाडिका । नाडिकाद्वयं मुहूर्त. । त्रिंशन्मुहूर्ता दिनम् । दिनानां त्रिंशता मासः । द्वौ मासौ ऋतु । ऋतुभिः षड्भिर्वर्षं भवति । " इति । दिनस्य मासस्य अनयो. वर्षस्य च प्रादुर्भावप्रकारे इतोऽप्यधिकं ज्योति शास्त्रतोऽवधेयमिति विस्तरभिया विरम्यते । सूर्यमण्डलस्य गतिवैचित्र्येण, ऋतूना भेदात् देशानामवस्थानभेदात्, अक्षरेखाणा व्यत्ययाच्च धरातले तत्र तत्र कालोऽपि भिद्यत । तथाचाभियुक्ता.—

" उदयो यो लङ्कायां सोऽस्तमय सवितुरेव सिद्धपुरे ।
यमकोट्यां मध्याह्नं रोमकविषयेऽर्द्धरात्रं च ।।" इति ।

किं बहुनोक्तेन ? कालस्य परिणतिं परिच्छेत्तु न वयं प्रभवाम इत्यलं प्रसक्तानुप्रसक्तेन प्रस्तावेन ।

' अप्यर्णवस्य पुरुषः प्रतरन् कदाचि-
दासादयेदनिलवेगवशेन पारम् ।
न त्वस्य कालपुरुषाख्यमहार्णवस्य
गच्छेत् कदाचिदनृषिर्मनसापि पारम् ॥

अथ वायो स्वरूपं महावात्यादीनामाविर्भावनिदानं च किंचिदिवालोचयाम । यथा जलं औष्णेनाभिवृद्धं लघूक्रियते, तथैव औष्ण्येन वायुरपि लघूकृतस्मन्नपचीयते । लघूकृतो वायुर्नितान्तजवेन उत्पुलुत्य विहायसि गच्छति । जलकणिकाभिर्जडीकृतः समीरण मन्दं मन्दं लतादिकमान्दोलयन् वृक्षादींश्च प्रचालयन् पृथिव्यामेव वाति । यदा पुनरेकस्मिन् प्रदेशे वायुरौष्ण्येन लघूकृत सन् उद्गच्छति, तं प्रदेशमाक्रमितुं प्रदेशान्तरात् सद्य एव शिशिरवातो महता जवेनायाति । अतो वायोर्नैसर्गिकी गमनागमनक्रिया सिद्धा

यतः सदागतिरित्युच्यतेऽभियुक्तैः । किंच सूर्याचन्द्रमसोराकर्षणेनापि वायुस्कन्धस्य चलनं संभवतीति केचन मन्यन्ते । वायोर्गमनवेगो हि तदा तदा विपर्यस्तो दृश्यते । यदा पुनः समीरणः मुहूर्ते क्रोशद्वयदूरं प्रसरति, तदा मन्दानिल इत्यभिधीयते । यदा तु मुहूर्ते पञ्चविंशतिक्रोशदूरं आघोषेण सह वाति, तदा वात्येत्युच्यते । यदि मुहूर्ते चत्वारिंशत् अथवा पञ्चाशत्क्रोशदूरमपि प्रबलेन जवेन तरुषण्डान्युन्मूलयन् वाति, तर्हि "चक्रवात" अथवा "वातावर्तः" इत्यभिधीयते ॥

अहनि सूर्यातपेन सर्वमपि वस्तुजातं नितान्तं सन्तापमधिगच्छति । भुवस्तलं हि तरणिकिरणैः अतिजवेन संतप्यते । समुद्रस्योपरितलं तु पृथिवीतलापेक्षया चिरेणैव संतापमेति । तदा भूतलोपरि वर्तमानो वायुः पूर्वमनुवर्णितप्रकारेण औष्ण्यवशात् लघूकृतः सन्नुपचीयते । तथा अभिवृद्धो वायुः महता जवेन समुद्राभिमुखं प्रधावति । तथा महीतलात् महोदधिमनुप्रविष्टस्य वायोः स्थानं संपूरयितुं समुद्रतलवर्ती शीतः पवनः महीतलाभिमुखः प्रसरति । अत एव समुद्रतीरोपकण्ठे अवस्थितेषु नगरेषु दिवसस्य मध्यभागेऽपि न तावान् संतापो यावानुपलभ्यते नगरान्तरेषु । अयं च जलनिधिजलकलशजडीकृतः पवनः दिवसस्य मध्यादारभ्य आसायं महीतलं शिशिरयन् प्रवाति । अस्तं गते पूषणि, समुद्रतलापेक्षया भुवस्तलं जवेन शिशिरीभवति । तदा भूतलात् शीतो वायुः समुद्राभिमुखं वाति । अत एव कारणात् सुखाभिलाषिणो जनाः सायं मन्दानिलसंसेवनाय समुद्रतीरं गच्छन्ति ॥

(क्रमशः)

उपवीज्यमानाम्, तत्र तत्र यथार्हं निवेशितैः कैश्चिद्रत्नमयैः कैश्चित्कनकविकृतैः कैश्चिद्रूप्योपाहितैः कैश्चिद्दन्तशलाकासंघटितैः कैश्चिन्नानारूपदारुविशेषनिर्मितैः अतिश्लक्ष्णमहार्घचीनांशुकावच्छन्नसंनिवेशैः महार्हैरासनैर्भूषितमध्यभागाम्, उज्ज्वलकाञ्चनरत्नमयानां विटङ्कनिर्यूहद्वारकवाटवातायनानां प्रभाभिरविज्ञेयदिनरजनीसंविभागाम्, कौरवचमूमिव गाङ्गेयजनितपरभागाम्, धरामिव महीभृत्कुलावस्थानगम्भीराम्, मायामिव विचित्रदर्शनाम्, धार्मिकनरपालसंपदमिवानाधृष्याम्, मानससरसीमिव राजहंसमण्डलमनोहराम्, समरभुवमिव कापुरुषदुर्गमाम्, कमलवनवाटीमिवोल्लसच्छ्रियम्, उत्तरवेदीमिव विनियुक्तमुद्राम्, प्रवर्ग्यक्रियामिव महावीराधिष्ठिताम्, सवनचर्यामिव गोत्रशस्त्रबहुलाम्, अनल्पपरिणाहामतिरमणीयां सभां प्रविश्य, तस्याश्च मध्यभागावस्थापितं विलसदतिबहुलमणिरुचिनिचयमेचकितं कुट्टिमविन्यस्तैः केतकिचरणाङ्कितैश्चतुर्भिरपि पादैरुद्भासितदिग्भागं समन्ततः प्रसृतरत्नप्रभामण्डलतया दिशि दिशि दर्शितेन्द्रचापसहस्रं पर्यन्तनिरन्तरव्यालम्बिमौक्तिकहारजालकेन हिरण्मयचतुःस्तम्भमण्डपिकाग्रबद्धेन निर्मलदुकूलवितानेन शिखरतलचञ्चद्राकासुधाकरमण्डलमिव कनकशिखरिणि सिंहासनमध्यामांचक्रे ॥

अनन्तरं च समागतो राजा, प्रविवेश सभामध्यम्, अध्यरुक्षत् भद्रासनम्, अन्वशादधिकारिपुरुषानिति बृन्देबृन्दे च प्रवादैर्बाह्यजनानां जनितसंभ्रमा, केचित् त्वरिततरसूतकशाग्रप्रहाररोषोद्वल्गत्तुरङ्गैः शताङ्गैः, केचिदाधोरणाङ्कुशपातवेदनावधूनितवदनैः कटितटविगलन्मदाम्बुधाराधुनीनामुपरि निरन्तरपरिभ्रमतां मधुलिहां झङ्कारद्विगुणितबृंहितैर्दन्तावलैः, केचित् पार्ष्णिघातपरिनोदनकलितरयविशेष-

धूर्वहैर्वाहैः, केचिदयथायथविन्यासस्खलितगतिभिः पदैः, केचित् दृप्यद्बलीवर्दसमवबद्धाभिः शकटीभिः, केचिदान्दोलिकाभिश्च राजसभोचितैर्वसनोष्णीषकञ्चुकावच्छन्नमूर्तय आजग्मुः सभां गुरवः पुरोहिता राजानो राजपुत्रा अमात्याः श्रेणीमुख्याः प्रणिधयो नानादेशागताः सेनापतय सबलाध्यक्षाः सहस्रप्रमुखाश्च सर्वेऽपि सभास्तारा. ॥

तदानीं च नवजलदध्वानगम्भीरेण चक्रघोषेण रथानां, फीट्कारेण करटिनां, हर्षहेषितेन वाजिनां, चरणतलपरिघट्टनेन पदातीनां, प्रवेशसमर्दस्खलनजनितेन हारकेयूरघणघणात्कारेण वीराणां, नृपापदानमेदुरेण जयशब्दकोलाहलेन बन्दिनां प्रचलितेव सा सभा मुहूर्तमलक्ष्यत । ततश्च प्रणतोत्थितेषु यथार्हमलंकुर्वाणेष्वासनानि राजगौरवान्मुदितवदनेषु नृपाननिबद्धलक्ष्येषु चित्रगतेष्विव उत्कीर्णेष्विव समाधिनिरूढेष्विव निःशब्दचेष्टेषु सभासत्सु, भूपतिरपि भावावेदननिपुणया दृशैव तान् यथार्हं संमानयामास । तदानीं च वाच्यमानेषु नानादेशपुरग्रामाधिकारिप्रहितेषु पत्रेषु, चिन्त्यमानेषु योगक्षेमेषु प्रजानाम्, निर्णीयमानेषु अपराधोचितेषु दण्डेषु, व्यवस्थाप्यमानेषु धर्मेषु, प्रस्तूयमानेषु अरिमित्रोदासीनानां चिकीर्षितेषु, मीमांस्यमानेषु यथाकालं यथार्हं च गुणेषु, संमन्त्र्यमाणेषु रक्षणविधानेषु राज्याङ्गानाम्, निवेद्यमानेषु निदर्शनविधया पूर्वराजर्षिचरितेषु, दीयमानेषु यथागुणं कृतकार्येभ्यः पारितोषिकेषु, विचार्यमाणायां राजनीतौ, विलिख्यमानेषु शासनेषु, विज्ञाप्यमानेषु मन्त्रिणां मतेषु राजकार्यमयी सा सभा समपद्यत ॥

अत्रान्तरे कौसुम्भोष्णीषपल्लवावच्छन्नमौलिः आप्रपदीनेनारु-

णकञ्चुकेनावच्छन्नतनुः आमूलपल्लवित इव तरुः करधृतकनकवेत्र-दण्ड. सविद्युल्लत इव सान्ध्यो वारिवाहः द्वाराध्यक्ष. ससंभ्रममुपसृत्य धरातलन्यस्तजानुयुगल प्रणिपत्य राजान व्यजिज्ञपत्— "देव! दक्षिणेन गङ्गायमुनयो· संगमं धर्मारण्यनिवासिनो मुनय· काङ्क्षन्तो देवस्य दर्शनं द्वारि प्रतिपालयन्ते देवाज्ञाम् । अत्र देव प्रमाणम्" इति । तत· प्रवेश्यतामविलम्बितेनेति राज्ञा नियुक्तः प्रतीहारी चोत्थाय उदीर्य जयवचनं त्वरितगतिरगात् । ततो नरपतिरपि ससंभ्रममवतीर्य भद्रासनादिङ्गितवेदिभिरर्घ्याञ्चितकरैः पाद्यकुण्डिकावलम्बिभिः धृतमधुपर्कै· पुरोयायिभि ब्राह्मणैः ऋत्विग्भि. पुरोहितैराचार्यैश्चोपदर्शितसरणिः राजभिरमात्यैरन्यैश्चानुगम्यमान तापसाभिमुखमगच्छत् ॥

तदानी च इत इतो भगवन्त इति प्रतिहार्या प्रवेश्यमानान्, मूर्ध्नि बद्धावशिष्टाभिर्लम्बमानाभिरुत्तप्तसुवर्णसवर्णाभिर्जटाभिर्दूरप्रसृताभिर्दीधितिभिरुद्भासितदशदिश इवोष्णरश्मीन्, अग्निहोत्रधूमपटलधूसरवल्कलसंवीतान्, प्रकटतेजःपुञ्जदुर्निरीक्षरूपान्, कलि महिम्नाऽश्रद्दधानैर्द्विजातिभिस्तत्र तत्र क्रियमाणमात्मानुपस्थानं राज्ञे निवेदयितुमागतान् संघशोऽग्नीनिवाग्निहोत्रिणाम्, 'हन्त हताः स्मो वयम् । महतीयमुपागता विपदस्मान्; येनास्मिन् काले विक्रीणन्ति नो निःशङ्कं ब्रह्मबन्धव. । अध्यापयन्ति नो वृषलान् । अतिवर्तन्ते स्वमतेनैव नः' इत्यब्रह्मण्यमुद्घोषयितु राजन्युपागतान् मूर्तिमत इव वेदान्, अतिनृशंसकलिहतकसमुपनतबाधासहिष्णुतया परिक्रम्य सर्वामपि वसुन्धरां क्वाप्यनवाप्य क्षेमं राजानमेव शरणमुपागतान् परिक्षीणानिव धर्मान्, कलिबलाल्लोभोपहतमतिभिरतिमलीमस-

करणैः अश्रद्दधानैर्द्विजातिभिरुपपादितात्मवैशसं विज्ञापयितुमुपागतान् हीयमानान् मन्त्रैरन्नैर्दक्षिणाभिः कृशतरान् यज्ञानिव विप्रवेषप्रतिच्छन्नान्, 'हन्त! महदिदमुपास्थितं दुर्भिक्षमिदानीम्; येनाद्य न हूयन्तेऽस्मन्मुखेषु मन्त्रोपस्कृतानि हवींषि । कथमेवमसंभाविता वय योजयामः श्रेयसा लोकम्? सर्वथा नान्यदस्ति परायणं विनास्मान्नरपतेः, यो बिभर्ति योगक्षेमौ लोकानाम्' इति नृपान्तिकमुपागतान् बुभुक्षितानिव बार्हिर्मुखान्, अतिचिरसंभृतस्य तपोहुतवहस्य धूमपटलेनेव उत्तरीकृतेन कृष्णमृगचर्मणाऽवच्छन्नशरीरान्, दुश्चरतपःक्लेशकृशतरशरोपलक्ष्यमाणनाडीसहस्रतया लताप्रतानवेल्लितानिव सुरतरून्, कांश्चित् स्फटिकाक्षवलयवलयितकर्णपुटतया शरदभ्रपटलमण्डलितमार्तण्डबिम्बानुकारीणि वदनान्युद्वहतः, कांश्चिद्रुद्राक्षवलयपरिवर्तनव्यग्राग्रहस्ततया परितो बम्भ्रम्यमाणभ्रमरनिकरपरिवृतानि कमलानीव करतलानि बिभ्राणान्, अनुगम्यमानशिष्यगणतया अनुगतप्रमथानिव रुद्रान्, अनवरतमन्त्रावर्तनचलदधरपुटतया अन्तश्चलितशफरविघट्टनस्फुरितदलानि कमलानीव मुखान्युद्वहन्तः, कपिलकूर्चसंहतिपिहितवक्षःस्थलतया बहिः प्रसृताभिरात्मसमारोपितानामग्नीनामिव ज्वालाभिरवभासमानान्, सुरशाखिन इव वल्कलसंवेष्टितान्, दिनकरकिरणानिवापाकृततमःप्रसरान्, वासन्तिकरसालानिव सफलशाखामण्डितान्, प्रावृड्दिवसानिव शान्तसकलतापान्, महारथानिव शस्त्रबलविधूताराातिवर्गान्, अमरानिव परिपीतसोमभागान्, हंसानिवोपोढब्रह्मचर्यान्, सततनियमितेन्द्रियग्रामतया अतिदूरागमेऽप्यनुच्छ्वसतः, किं च निदाघदिवसान् विषयाभिष्वङ्गपङ्कानाम्, पारदृश्वनो निगमानाम्, आवासान् शान्तेः,

आलयान् दयायाः, राशींस्तपसाम् , स्थानानि महिम्नाम् , अभिज्ञान् मोहविकाराणाम्, अविदुषो मिथ्यालापानाम, अशरण्यान् पञ्चशरमार्गणानाम्, अनवकाशान् अविद्याविलसितानाम्, नियममयानिव विद्यामयानिव व्रतमयानिव संतोषमयानिव सत्वमयानिव आचारमयानिव वैराग्यमयानिव ब्रह्ममयानिव तापसान् ददर्श । अवलोक्यैव विनयप्रह्वस्त्वरितगतिरुपसृत्य दर्शितभक्तिर्दूरत एव प्रणनाम । ततः 'स्वस्ति सोमान्वयाय भवते' इति सममेवोदीरिताशीर्व्याहारान् सर्वानपि तान् सोपचार प्रवेश्य सभा यथार्हमासनान्यादिदेश । तेषु चोपविष्टेषूपविष्टेभ्यस्तेभ्यः प्रत्येकं पाद्यमर्घ्यमाचमनीयं मधुपर्कं च निवेद्य प्रत्येकं गाश्च समर्पयामास । ततः सपन्नभाषणमुखरमुखैस्तैरनुज्ञातो राजा स्वयमासनमधितस्थौ ॥

अनन्तरं च गुरुतरहिमशिखरिशिखरशिलास्फालनविप्रकीर्णैः सर्वतः प्रसृतैरिव गङ्गास्रोतोभिः विकीर्यमाणैः, प्रत्यग्रविकसितैरिव कमलदलै, सूचयद्भिः प्रसादम्, द्योतयद्भिः सौजन्यम्, स्फुटीकुर्वद्भिः प्रेमप्रकर्षम्, व्यञ्जयद्भि प्रमोदम, उपपादयद्भिः गौरवं कटाक्षैराप्याययन्निवानन्दयन्निव कृतार्थयन्निव अनुनयन्निव अनुयुञ्जन्निव समस्तानपि तान् सभास्तारान् प्रकृतिगम्भीरेण सजलजलधरनिनादशङ्किनोमुन्मस्तकप्रमोदभरविस्तृतबर्हाणामाबद्धताण्डवानामासन्नप्रमदावनकलापिनामुद्गतकण्ठपालीप्रसृताभिः केकाभिरुपपादितस्थानश्रुतिसहकारेण समासन्नभवनवलभीकुहरजनितप्रतिनिनदतया अनूद्यमानेनेव संनिहिताभिर्गृहदेवताभि, धर्मचर्यानटीलास्यारम्भकरजरवेण विवेकनरपतिप्रस्थानदुन्दुभिध्वानेन अत्यासन्नकलिविनाशकर्णेजपेन भूकम्पध्वनिना पूरयता श्रवणकुहराणि अभिनन्दयता हृदयानि मुद्र-

यता वदनानि जनानां मोचयताऽव्यग्रभावं क्षणमुद्भावयताभिमुख्यमुपपादयता गौरवं गम्भीरमधुरेण स्वरेण विमलदशनप्रभानुरञ्जितया दर्शयन्त्यान्तःशुद्धिमुचितान्वयानुबद्धया मनोहरग्रथनयेव मौक्तिकहारयष्टया महाकविसाहित्येवादुष्टगुणवच्छब्दार्थशक्तिमूलरसभाववस्तुध्वनिभूषितया गौतममुनिमनीषयेव पक्षहेतुपरामर्शानुमानकलितसाध्यनिश्चयया अनुज्झितस्थानस्वरया सुगतगमकया संगतविवेकला समग्रामलयशोऽभिगतया प्रपञ्चयन्त्या रागं गीतकलयेव गिरा अभाणीत्—

'स्वागत भगवद्भ्यः? पालितास्तत्रभवता चरणरजःसंपर्केण नो गृहाः। कृतार्थीकृतस्तीर्थभूतानामुपगमादन्वयेन सहात्मा। तर्पिता पितरः। उपासिता वृद्धाः। पूजिता गुरवः। सुहुतानि अग्निहोत्राणि। स्विष्टा इष्टयः। स्वाचीर्णानि व्रतानि। स्वर्चिता देवता। समुल्लसितं सौभाग्येन। पल्लवितं सपदा। विलसित पुण्येन। विकसितं माहात्म्येन। उल्लसितं गौरवेण। अपसृतमभव्येन। अनाशि दुरितेन। अभेदि मोहबन्धेन। अपि च, प्रसन्नाः कुलदेवताः। पूर्णा नो मनोरथाः। अत्र च सुचिर विचारयन्नपि नोपगच्छामि तनीयोऽपि कारणमन्यत् प्रकृतिगम्भीरादनुभावाद्भगवताम्; यदत्र बहुलदोषकलङ्कक्षालनविमलतरहृदयमणिदर्पणतलसंक्रान्तपरतत्वाः उद्वहन्तो निरवधि शममनपायकरुणारसपूरमेदुरया वहन्त्या समभावं भूतेषु दृशैव केवलं सूचयन्तः परमनुग्रहं निर्वापयन्तस्तापम्, किं बहुना घटयन्तः सर्वामपि संपदं भवन्तो महाभागाः दुर्वाराभिमानपिहितदृष्टिषु दर्शयन्त्येवमनुग्रहमस्मादृशेषु। क नूपशान्ततापसगणाचरितानि पुण्यारण्यानि? क नु प्राकृतजनबहुमतोऽयं नगरनिवासः? क नु नि-

यतवृत्तिस्तपस्विनाम् ? क वा अव्यवस्थितविषयविषमा मजसभोगोपसक्ति ? क नु ब्रह्मैकान्तो व्यासङ्ग. ? क वा विविधलौकिकविषयविरसोऽस्मादृशा व्याहार ? । सर्वथाऽस्मदनुजिघृक्षैवात्रकारणं भगवतां यदाजग्मुरिमं देशम् ॥

जानामि सततसमुपचितनिरुपधिपरितोषा वीतरागभयक्लेशतृष्णाभिमाना पूर्णकामा भगवन्त ऊरीकुर्वन्ति न केनाप्यर्थिभावम्, तथापि सूचयति विशेषं कंचनागमनमितः संभूय तत्रभवताम् । कच्चित् सुखावहा आश्रमाः ? । कच्चिन्न बाध्यन्ते श्वापदैराश्रमसत्वानि ? । कच्चिन्निर्विघ्ना यथाकालमग्निहोत्रविधय. ? कच्चिदिज्यन्ते पर्वसु देवाः ? कच्चित् तर्प्यन्ते पितरः पिण्डपितृयज्ञमुखाभि. श्राद्धभक्तिभिः? कच्चित्स्ववगाहानि तीर्थोदकानि ? । कच्चिन्निरन्तराया संस्था ? । कच्चिन्नापकुर्वन्ति तपस्विभ्यश्छिद्रान्वेषीणि बहुलमायाऽविज्ञेयगतीनि रक्षांसि ? । कच्चित् पूज्यन्ते यथाकालमुपागता अतिथय ? । कच्चित् शुश्रूषन्ते व शिष्याः ? कच्चित्संप्रचार्यन्ते यथर्तु चातुर्मास्यानि ? । कच्चिदिज्यन्ते नवाग्रयणेन ? । कच्चित्प्रतायन्ते यथाविधि चायनर्तुव्यावृत्तिषु सूयसवेषु च पशुबन्धा ? । कच्चिच्चीयन्तेऽग्नय ? । कच्चिन्निष्प्रत्यूहा व स्वाध्याया ? । कच्चिन्निरन्तरायाणि वस्तपांसि ? । कच्चित्फलिनो व आश्रमतरव ? । कच्चित्सपन्नफलकुसुमा व आश्रमलताः ? कच्चित् प्रवर्तन्ते नीवाराणि ? कच्चित्सुलभानि स्वादूनि कन्दमूलफलानि ? कच्चिन्न निर्बध्यन्ते षडधिकेनाप्यंशेन काननिकेतास्तपस्विजना । कच्चिन्न नाश्यन्ते कलमानि ? न दूष्यन्ते कमलसरांसि ? न भज्यन्ते विटपिनः नोन्मूल्यन्ते वा कुसुमलताः मदोद्धतप्रचारैः करटिभि ? ॥

अद्य च प्रचलपक्ष्ममालैरभित परिभ्रमत्तारकैः लक्ष्यातिवर्ति-तनयनैरुपलक्षितानि काननकासारविक्षोभितानि कमलसरांसीव वद-नान्येन सूचयन्त्युपस्थितमत्याहितं कमपि ; यदाकुलीकरोत्यगणितगु-रुतरतप क्लेशान् तपोवननिवासिनो भगवतः, यदर्थं प्राप्ताश्चातीत्य दवीयो वर्त्मैतावती भूमिम् । तद्यदि नामैतदनुयोज्यं मादृशि, यदि वा जानते प्रतिक्रियाचरणचणमिमं जनम्, उपलाल्यो वा मदनुनय , अनुरुध्यते मत्प्रश्रय • अनुग्राह्यो वाऽयं भक्तिप्रवणो लोक , तदनु-योगेन कृतार्थीक्रियमाणमिच्छाम्यात्मानम् । सत्यं प्रतिजानामि दुर्व-हामप्यनभिभवामपि लोकविद्विष्टामपि स्वजनाहितामपि सुतसहज-कलत्रयोगक्षेमविरोधिनीमपि कोशोन्मूलनीमपि– किंबहुना– आत्मान-र्थकारिणीमपि उल्लङ्घयेयं न कदाप्याज्ञा भगवताम् । सर्वमपीदमर्था-यैव ब्राह्मणानां मम राज्यं बलानि कोशः विक्रमः शौर्यं शस्त्राणि आत्मा चेति ॥'

ततस्तादृशेन नरपतिवचनेन संमानिता इव लालिता इव तर्पिता इव हर्षिता इव प्रोत्साहिता इव प्रेरिता इव समुपनतविस्र-म्भास्ते मुनय. प्रेमावेशविस्तारितै· सूचयद्भिरिवाविलम्बितमेवार्थसिद्धिं वीक्षणैरभ्युक्षन्त इव तीर्थजलबिन्दुभिः उत्तेजयन्त इव ओजोविक्रम बलानि विलोक्य राजानं सस्मितमवोचन् — 'देव! युक्तमिदं द्विज-राजाभिजनस्य ते राज्ञ यदेवमविज्ञातलोकचर्याक्रमेषु पत्रफलमूलकु-सुमैकान्तसन्तोषेषु वनालयेषु तपस्विष्वस्मास्वपि एवमुपदर्श्यते औदा-र्यम् । भवता खल्वेवंविधेन भूषितं कुलं पौरवम्, यज्जनुषो राजर्षयो धारयन्त्यभयायैवार्तानां शस्त्राणि । अपि ते समृद्धानि राज्याङ्गानि? अपि प्रियन्ते तुभ्यमाचार्याः? अपि पूज्यन्ते गुरवः? अपि

ननु स्वर्गस्य कथं भावनायां विशेषणता, समासघटकपूर्वपदार्थस्य समासघटकपदार्थे विशेषणतयान्वयायोगादिति चेन्न, स्वर्गकामपदस्य स्वर्गे प्रथमायाश्च कर्मत्वे लक्षणाङ्गीकारात्, स्वर्गकामपदं यथाश्रुतमेव; द्वितीयान्तस्वर्गादिपदाध्याहार इत्यपि वदन्ति ॥

ननु वेदस्य वाक्यसमूहतया भारतादिवत् पौरुषेयत्वमावश्यकम्; अत एव काठकादिसमाख्याप्युपपद्यते । इत्थं च तदन्तर्गत विधेरपि पौरुषेयतया पुरुषदोषाणां भ्रमप्रमादविप्रलिप्साकरणापाटवानामनिवार्यतया कथं तस्य प्रामाण्यसंभव इति चेदुच्यते— न हि वेदस्य पौरुषेयत्वसंभवः, कर्तृस्मरणाभावात् । न चान्धकूपादिवत् अनादरेण कर्तृस्मरणाभावोपपत्तिरिति वाच्यम्; अद्य यावन्महीयसा आदरेण परिपाल्यमानस्य वेदस्य कर्तृसत्त्वे तत्र अनादरायोगेन तत्स्मरणावश्यंभावात् । काठकादिसमाख्या तु प्रवचननिमित्तैव । इत्थं च वेदस्यापौरुषेयत्वे सिद्धे तदन्तर्गतचोदनापरपर्यायविधेरपि अपौरुषेयतया पुरुषदोषासंस्पर्शात् प्रामाण्यमुपपद्यत इति ॥

इति प्रथमाध्यायस्य प्रथमः पादः ।

---

## अथ द्वितीयः पादः ॥

द्वितीयेन पादेनार्थवादमन्त्रयोर्धर्मप्रामाण्यनिरूपणम् । तथाहि— 'वायुर्वै क्षेपिष्ठा—' 'अश्रु जँहि' इत्याद्यर्थवादानां किं धर्माधर्मयोः प्रामाण्यमस्ति, उत नेति विशये, तैः कस्यचिदर्थस्याविधानादनिषेधाच्च न तेषां तयोः प्रामाण्यं संभवतीति प्राप्ते उच्यते— अध्ययनविधिवशेन कृत्स्नस्यापि स्वाध्यायस्य प्रयोजनवदर्थपरत्वसिद्ध्या आर्थवादिकयथाश्रुतार्थस्य च निष्प्रयोजनतया

विधिनिषेधापेक्षितप्राशस्त्याप्राशस्त्यरूपप्रयोजनवदर्थे अर्थवादाना ल क्षणामाश्रित्य संनिहितविधिनिषेधाभ्यामेकवाक्यतायाः स्वीकरणीयतया तेषां धर्माधर्मयोः प्रामाण्यमुपपद्यते । ननु कथं विधिनिषेधयोः प्राशस्त्याप्राशस्त्यापेक्षेति चेदित्थम्— नञ्समभिव्याहाररहितलिङादिना प्रवर्तनारूपायाः तत्समभिव्याहृतलिङादिना च निवर्तनारूपायाः शाब्दभावनाया अभिधानात् तस्याश्च भावनास्वाभाव्यादंशत्रयाकाङ्क्षाया प्रवर्तनायां प्रवृत्तिरूपार्थभावनायाः निवर्तनायां नञुपस्थाप्यतदभावस्य च भाव्यत्वेनान्वयः । लिङादिज्ञानम्, लिङादिशक्तिज्ञानम्, प्रवर्तनादिज्ञानमेव वा करणम्, स्वरूपसत्योः प्रवर्तनानिवर्तनयो प्रवृत्तिनिवृत्त्यप्रयोजकत्वात् । करणत्वं च भावनाभाव्यनिष्पादकत्वम् । इह च भाव्ये प्रवृत्तिनिवृत्ती; तन्निष्पादकत्वं च लिङादिज्ञानस्याक्षतम् । परं तु उक्तकरणस्य शाब्दबोधे न भानम्, बोधकपदाभावात् । प्राशस्त्याप्राशस्त्ययोश्च इतिकर्तव्यतात्वेनान्वयः । प्रवर्तनाज्ञानेन प्रवृत्तौ जननीयाया प्राशस्त्यज्ञानस्य, निवर्तनाज्ञानेन निवृत्तौ जननीयायाम् अप्राशस्त्यज्ञानस्य च सहकारित्वात् । 'यजेत स्वर्गकामः,' 'न सुरां पिबेत्' इत्याभ्या हि यागसुरापानयोः स्वर्गनरकसाधनत्वावगमेऽपि यागे तात्कालिकदुःखाधिकसुखजनकत्वरूपप्राशस्त्यज्ञानमन्तरा स्वर्गे उत्कटरागरूपा रुचिः, तात्कालिकदुःखमविगणय्य यागे प्रवृत्तिर्वा, सुरापाने तात्कालिकसुखाधिकदुःखजनकत्वरूपाप्राशस्त्यज्ञानमन्तरा नरके उत्कटद्वेषरूपा अरुचिः, तात्कालिकसुखमविगणय्य सुरापानान्निवृत्तिर्वा, नैव जायत इत्यनुभवसिद्धमेव । अतः प्रवर्तनानिवर्तनारूपाभ्यां विधिनिषेधाभ्यां स्वसाध्यप्रवृत्तिनिवृ-

त्तिसिद्धये उक्तरूपप्राशस्त्याप्राशस्त्ये आकाङ्क्षिते एवेति ।• तत्र प्राशस्त्यस्य स्वज्ञानाधीनोत्कटरागजन्यत्वसंबन्धेन अप्राशस्त्यस्य च स्वज्ञानाधीनोत्कटद्वेषप्रयोज्याभावप्रतियोगित्वसंबन्धेनाख्यानार्थकृतावन्वय. । नरकसाधनताज्ञानसहितनरकद्वेषस्य कृतिरूपप्रवृत्तौ प्रतिबन्धकतया कृत्यभावस्य द्वेषप्रयोज्यत्वम् । तत्सिद्धमर्थवादानां विध्येकवाक्यत्वम् । तच्च तदर्थान्वितस्वार्थबोधकत्वम् । तद् द्विविधम्—पदैकवाक्यत्वम् , वाक्यैकवाक्यत्वं चेति । तदर्थान्वितस्वार्थो यदि स्वजन्योपस्थितिविषयः, तदा पदैकवाक्यत्वम् ; यथा अर्थवादानाम् , तत्र प्राशस्त्यस्य तथात्वात् । तदर्थान्वितस्वार्थो यदि स्वजन्यशाब्दबोधविषयः, तदा वाक्यैकवाक्यत्वम् , यथा वक्ष्यमाणम् 'समिधो यजति' इत्यादिवाक्यानां दर्शपूर्णमासविध्येकवाक्यत्वम् । तदुक्तम्— 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते' इति । यद्यपि विधेः प्रवर्तकत्वान्यथानुपपत्त्यैव विधेयस्य प्राशस्त्यावगमः संभवति, तथाप्यर्थवादाम्नानबलादर्थवादैरेव प्राशस्त्यं ज्ञातव्यमिति नियमाङ्गीकारान्न वैयर्थ्यम् । उक्तनियमस्य च दृष्टप्रयोजनासंभवात् अदृष्टमेव प्रयोजनम् । तस्य च क्रतुजन्यापूर्वे उपयोग., अवघातनियमजन्यापूर्ववत् । इत्थं च तादृशनियमादृष्टप्रयोजकीभूतप्राशस्त्यस्यापि धर्मरूपतया अर्थवादानां धर्मप्रामाण्योपपत्तिः । केचित्तु—धर्मानुष्ठानोपयोगिज्ञानजनकत्वमेव धर्मप्रामाण्यम् । एवमधर्मनिवृत्त्युपयोगिज्ञानजनकत्वमधर्मप्रामाण्यम् । इत्थं च उक्तरीत्या प्राशस्त्याप्राशस्त्यज्ञानयोर्धर्माधर्मप्रवृत्तिनिवृत्त्युपयोगितया अर्थवादानां धर्माधर्मप्रामाण्योपपत्तिरित्याहुः । तत्सिद्धमर्थवादानां धर्माधर्मयोः प्रामाण्यम् ॥

एवं मन्त्राणामपि धर्मप्रामाण्यं संभवति । ननु यद्यपि तेषां प्रयोगकालार्थस्मरणं दृष्टमेव फलम् । न च ध्यानाद्युपायान्तरेणापि स्मरणसंभवात् मन्त्रवैयर्थ्यमिति वाच्यम्, मन्त्राम्नानबलेन मन्त्रै-रेव स्मृत्वानुष्ठाने फलसिद्धि:, नान्यथेति नियमकल्पनात् । नियमस्य दृष्टफलासंभवेन अदृष्टफलकत्वाङ्गीकारेऽपि मन्त्राणामनु ष्ठानौपयिकार्थस्मरणरूपदृष्टफलसंभवात् न तत्परित्यागो युक्त: । ततश्च यथार्थज्ञानजनकत्वं तेषां संभवति । तथापि तावता न धर्म-प्रामाण्यनिर्वाह इति चेदुच्यते । शाब्दबोधजनकज्ञानविषयपदाना-मिव तज्जनकोपस्थितिविषयपदार्थानामपि शाब्दबोधे करणत्वमङ्गीक्रि-यते । इत्थं च 'उरु प्रथस्व' इति पुरोडाशं प्रथयति । 'इमा-मगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादिषु मन्त्रविनियो-जकवाक्येषु मन्त्राणा पदार्थविधया शाब्दबोधकरणत्वसत्वात् धर्म-प्रामाण्योपपत्ति: ॥

## इति प्रथमाध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

तृतीयपादे स्मृत्याचारयो: धर्मप्रामाण्यनिरूपणम् । तथाहि शिष्टत्रैवर्णिकपरिगृहीतानां मन्वादिस्मृतीनां वेदमूलकत्वमेव न भ्रा-न्त्यादिमूलकत्वम्; भ्रान्तिहेतुभूतदोषस्य अद्य यावत् तदज्ञानस्य च क-ल्पने गौरवात् । मन्वादीनां त्रैवर्णिकतया वेददर्शनसंभवाच्च । अत: प्रमाणानि मन्वादिस्मृतय: । नन्वेवं सति 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतिविरुद्धाया: "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतेरपि प्रामाण्यं स्यादिति चेन्न; स्मृते श्रुतिमूलकतयैव प्रामाण्यस्योक्ततया

श्रुतिविरोधे प्रामाण्यासंभवात् । एवं वसन्तोत्सवाद्याचाराणां स्मृतिमूलकतया प्रामाण्यम् । अत एव स्मृतिविरोधे तेषां न प्रामाण्यम्, यथा मातुलसुतापरिणयाद्याचारस्य "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्" इति स्मृतिविरुद्धतया न प्रामाण्यमिति ॥

## इति प्रथमाध्यायस्य तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

चतुर्थपादे नामधेयवाक्यशेषसामर्थ्यानां धर्मप्रामाण्यनिरूपणम् । तथाहि— नामधेयत्वं चतुर्भिः प्रकारैः यौगिकवाक्यभेदतत्प्रख्यतद्व्यपदेशरूपैर्भवति । यथा 'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भित्पदं गुणविधिपरं कर्मनामधेयं वेति विशये नामधेयत्वे प्रयोजनविरहेण गुणविधिपरत्वमेव युक्तम्; तथा सति तद्गुणेन यागानुष्ठानरूपप्रवृत्तिविशेषपरत्वसंभवात् । न च उद्भिन्नामकगुणाप्रसिद्ध्या नैतद्युक्तमिति वाच्यम्; उद्भिद्यते फलमनेनेति व्युत्पत्त्या कर्मणीव उद्भिद्यते भूमिरनेनेति व्युत्पत्त्या खनित्रादौ गुणेऽपि प्रवृत्तिसंभवात् । इति प्राप्ते, कर्मनामधेयत्वेनैव उपपत्तौ गौरवापादकगुणविधित्वाश्रयणं न युक्तम् तथाहि— विधिप्रकाराः षट् । तत्र धात्वर्थमात्रविधिराद्यः । यथा 'अग्निहोत्रं जुहोति' इति । इदमेव कर्मोत्पत्तिवाक्यमित्युच्यते । अत्र चाग्निहोत्रहोमेन इष्टं भावयेदिति बोधः । विधिसमभिव्याहारे धात्वर्थस्य करणतयैवान्वयस्य प्रागुक्तत्वेन इष्टसामान्यस्यैव कर्मोत्पत्तिवाक्ये भावनायां भाव्यत्वेन अन्वयबोधात् ॥ अन्योद्देशेन धात्वर्थविधिर्द्वितीयः । यथा 'अग्नि-

होत्रं जुहुयात् स्वर्गकामः' इति । इदमेव फलवाक्यमित्युच्यते । अत्राग्निहोत्रहोमेन स्वर्गं भावयेत् इति बोधः । अत्र भाव्यसमर्पकपदान्तरसापेक्षतया जघन्यत्वम्; विलम्बितप्रतीतिजनकत्वात् ॥ धात्वर्थोद्देशेन अन्यविधिस्तृतीयः । यथा 'दध्ना जुहोति' इति । इदमेव गुणवाक्यमित्युच्यते । अत्र दध्ना होमं भावयेदिति बोधः । फलवाक्येन धात्वर्थस्य इष्टसाधनत्वावगत्या इष्टत्वसंभवात् तस्य भाव्यत्वोपपत्तेः । विधिसमभिव्याहारे भावनाया इष्टभाव्यकत्वनियमादेव हि कर्मोत्पत्तिवाक्ये धात्वर्थस्य भाव्यत्वानुपपत्तिः । अत्र च विधिशक्तेः अज्ञातज्ञापकत्वादिरूपायाः भिन्नपदोपात्ते संक्रमात् ततोऽपि जघन्यत्वम् ॥ अन्योद्देशेनान्यविधिश्चतुर्थः । यथा "दध्नेन्द्रियकामस्य जुहुयात्" इति । इदमेव गुणकामवाक्यमिति फलाय गुणविधिरिति चोच्यते । अत्र धात्वर्थस्योद्देश्यतयाऽपि भावनान्वयविरहात् ततोऽपि जघन्यत्वम् । अत्र हि दध्ना इन्द्रियं भावयेदित्येव वाक्यार्थः । तत्र पुरुषकृतिसाध्यकिंचिद्व्यापारसंबन्धमनापन्नस्य दध्यादेः सिद्धस्य गुणस्य फलसाधनत्वे विधिवैयर्थ्यप्रसङ्गः । गुणसत्त्वेन पुरुषप्रवृत्तिमन्तरेणैव फलोत्पत्तिसंभवात् । अतो गुणसंबन्धिव्यापाराकाङ्क्षारूपाश्रयाकाङ्क्षायां प्रकरणात् होम एव तथा प्रतीयते इति प्रकारणप्राप्तहोमानुवादकः । साधुत्वमात्रार्थो धातुः, 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति स्मृते· केवलाख्यातस्य प्रयोगानर्हत्वात् । प्राञ्चस्तु धात्वर्थहोमस्य करणतासंबन्धेन दध्यादौ विशेषणतयान्वयः । यद्वा तृतीयान्तपदोपस्थाप्यदधिनिष्ठकरणतायाः भावनायां करणत्वेनान्वयः । करणतायां च होमादेर्निरूपितत्वसंबन्धेन तादृशकरणतायाः निरूपाकाकाङ्क्षैवाश्रया-

काङ्क्षेत्याहुः ।। गुणविशिष्टधात्वर्थविधिः पञ्चमः । यथा 'सोमेन यजेत' इदमेव सगुणकर्मोत्पत्तिवाक्यमित्युच्यते । अत्र हि सोमशब्दस्य मत्वर्थलक्षणया सोमवत्परत्वेन सोमवता यागेन इष्टं भावयेदिति वाक्यार्थः । स्फुटीभविष्यति चेदमुपरिष्टात् । ततश्च विशेषणविध्यन्तरस्य मत्वर्थलक्षणायाश्च कल्पनीयतया ततोऽपि जघन्यत्वम् । अन्योद्देशेन विशिष्टविधिः षष्ठः । यथा "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" इति । तत्र तद्धितेनावगतस्य देवस्वमित्यादिव्यवहारगम्यद्रव्यदेवतासंबन्धस्य यागादन्येनानुत्पत्तेः यागेनैवोत्पत्तिर्वाच्या । देवतोद्देशपूर्वकद्रव्यत्यागस्य यागरूपत्वात् तस्य विधानमन्तरेणासिद्ध्या तद्विधायकवाक्यान्तरादर्शनेन उक्तवाक्यस्यैव तद्विधाने तात्पर्यस्य वाच्यतया तात्पर्यानुपपत्त्या धातोर्यागे लक्षणा । द्वितीया च करणत्वलाक्षणिकी । द्रव्यदेवतयोरन्यत्राविनियुक्ततया 'व्रीहीन् प्रोक्षति' इत्यादाविव संस्कार्यत्वासंभवेन शक्यार्थभूतसाध्यत्वबोधकत्वानुपपत्तेः । चर्वादिशब्दः वक्ष्यमाणरीत्या मत्वर्थलक्षणया तद्वत्पर । ततश्च चर्वादिमता यागेन ब्रह्मवर्चसं भावयेदिति वाक्यार्थः संपद्यते । अत्र फलपदस्याप्यपेक्षिततया ततोऽपि जघन्यत्वम् ।।

इत्थं च "उद्भिदा यजेत" इत्यत्र उद्भित्पदस्य गुणविधिपरत्वे उद्भिद्वता यागेन पशून् भावयेदिति वाक्यार्थस्य समाश्रयणीयतया षष्ठविधिप्रकारापत्तिः । नामत्वे तु द्वितीयविधिप्रकार इति नामत्वमेव युक्तम् । न च नामत्वे वैयर्थ्यम् । संकल्पादौ सार्थकत्वात् । न च फलोद्देशेन यागविधानं यागोद्देशेन च गुणविधानम् इति संभवात् विशिष्टविधिमत्वर्थलक्षणाश्रयणं किमर्थमिति वाच्यम्,

विरुद्धत्रिकद्वयसामावेशेन वैरूप्यनिबन्धनवाक्यभेदप्रसङ्गात् । तथा हि—उद्देश्यत्वानुवाद्यत्वप्रधानत्वत्रयस्य उपादेयत्वविधेयत्वगुणत्वत्रयस्य चानुभवानुरोधेन एकवाक्ये एकस्मिन् वस्तुनि समावेशासंभवात् तत्समावेशे वाक्यभेद आवश्यकः । तत्र उद्देश्यत्वं कृत्युद्देश्यतया विधिविषयत्वम् । उपादेयत्व कृतिविधेयतया विधिविषयत्वम् । विधेयत्वम् अज्ञातज्ञापनविषयत्वं प्रमाणान्तराप्रमितवस्तुनिष्ठविषयताविशेषरूपम् अनुवाद्यत्वं • ज्ञातज्ञापनविषयत्व तदतिरिक्तविषयतारूपम् । अङ्गत्वं गुणत्वम् । अङ्गित्वं प्रधानत्वम् । इत्थं च गुणविधित्वे विशिष्टविध्याश्रयणस्य मत्वर्थलक्षणायाश्चावश्यकतेति युक्तमुद्भिदादिपदं यौगिकत्वेन कर्मनामधेयमिति । एवं "चित्रया यजेत पशुकामः" इत्यत्र चित्रापदमपि कर्मनामधेयम् । दधिमधुघृतमित्यादिवाक्यविहितप्रकृतयागस्य चित्रद्रव्यकत्वात् । स्त्रीलिङ्गस्य च इष्टयभिप्रायत्वात् । न तु प्राप्ताग्नीषोमीययागानुवादेन चित्रत्वस्त्रीत्वोभयविधायकम्, वाक्यभेदप्रसङ्गात् । सौर्यं चरुं निर्वपेदित्यादौ तु यागस्यापि प्रमाणान्तरेणाप्राप्ततया द्रव्यदेवतोभयविशिष्टस्य यागस्यएकस्यैव विधानात् न वाक्यभेदः । तदुक्तम्— 'प्राप्ते कर्मणि नानेको विधातु शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥' इति । एवमग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दः तत्प्रख्यन्यायेन कर्मनामधेयम् । तत्प्रख्यन्यायो नाम गुणप्रापकशास्त्रान्तरसद्भावः । अग्निहोत्रहोमे हि 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति' इति विहितमन्त्रवर्णेन देवता प्राप्नोति । मन्त्रलिङ्गादीनां देवतासंबन्धबोधकत्वात् । तदुक्तम्— 'तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः । देवतासंगतिस्तत्र दुर्बलं तूत्तरोत्तरम् ॥' इति

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकल परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे आषाढमासः । [संचि. ४.

## सुभाषितानि ॥



अस्तं यातो दिनमणिरसौ क्षीणचन्द्रा तमिस्रा
तारा मुक्तामणय इव च स्वप्रभां भावयन्ति ।
दीपालोकः सविधविषयव्यञ्जनालब्धवर्णो
रुद्धस्वैरप्रसरविकला दृष्टयो विप्लवन्ते ॥ १ ॥

ज्योत्स्नाक्षोदं प्रदिशसि दिशां पूरयस्यम्बुराशिं
सान्द्रामोदान्यथ च तनुषे कैरवेन्दीवराणि ।
चन्द्र! श्रीमंस्तदपि बलवानेष दोषोदयस्ते
यत्संप्राप्ते भवदुपचये हीयते पद्मलक्ष्मी· ॥ २ ॥

नद्यो वारिभरैर्नवाम्बरपरिक्षेपैरिवाच्छादिता
नीताः सिन्धुपतिं समग्रहरितच्छायाः कृता वीरुधः ।
तेजो दूरनिरस्तमम्बरमणेः क्वेन्दुः कुतस्तारका.
सोऽयं लब्धसमुच्छ्रयः सुसदृशं धाराधरो गर्जति ॥ ३ ॥

शतावधानं श्रीनिवासाचार्यः ।

॥ श्रीः ॥

# ॥ वाक्यतत्वम् ॥

---

## ( अवतरणिका ।)

नेदमविदितं विद्वन्मणीनां यत् सर्वास्वपि भाषासु सारभूता सारतरसंपूर्णलक्षणपरिष्कृता च गैर्वाणीति । सा च स्वयं मनोहारिण्यपि कामिनीव कनकसूत्रकटककुण्डलादिभूषणजालेन पाणिनीयसूत्रमुक्ताकलापेनालंकृता रञ्जयति मानसं विबुधानाम् । भाषामेतामनायासेन बोधयितुं चिरादाश्रीयते काचन रीतिः कुशलैराचार्यैः । परं तु, भाषान्तराणामिव अस्या बोधने लक्ष्यलक्षणयोः समकाल एवाध्यापनसरणिर्नाङ्गीक्रियते पाठकैः । नायं दोषः किल पण्डितप्रकाण्डानाम् । किं तु, एतावतापि कालेन दवीयस्यां पदपदव्यामन्तरेणातिपरिश्रमं संचरितुं न कोऽपि मार्गः प्रदर्शितः पूर्वैराचार्यैः । क्रमेण काव्यान्यधीत्य तदनन्तरमेव बालाः लक्षणग्रन्थान् पठितुं प्रभवन्ति । तदापि पाठनीयेषु व्याकरणग्रन्थेषु श्रीमद्भिः भट्टोजिदीक्षितैर्विरचिता सिद्धान्तकौमुद्येव प्रधानभूता । वैयाकरणसमयगन्धमप्यनाघ्राय कौमुदीं पठितुमुपक्रममाणानां बालानां महान् क्लेशः संजायत इति नायं नवीनो विषय. । तादृशं क्लेशं श्लथयितुकामेन श्रीमता अनन्तनारायणशास्त्रिणा विरचितोऽयं वाक्यतत्वग्रन्थः गीर्वाणभाषायां प्रथमं प्रविशतां विद्यार्थिनामत्यन्तोपकाराय कल्पत इत्यत्र न कापि विप्रतिपत्तिः । अस्मिन् वाक्यस्वरूपम्, तद्भेदः, तदुपयुक्तसुप्तिङन्तपदस्वरूपम्, कारकविभक्त्युपपदविभक्तितदर्थाश्च निरूपिताः । व-

चन— लकारार्थ— पुरुषार्थाः प्रदर्शिताः । अत्यावश्यकाः सर्वनामविशेषार्थाः प्रयोगविभागाश्च सम्यग्विविच्य विस्तरेण वर्णिताः । पदानामर्थबोधिकास्तिस्रो वृत्तयः, तात्पर्यग्राहकाणि लिङ्गानि संयोगादीनि च स्पष्टमुपवर्णितानि । विद्यार्थिभिरवश्यं ज्ञेयानि अन्वय— क्रम— पदौचित्यानि सरलेन समीचीनेन च पथा निर्दिष्टानि । सरसवाक्यप्रयोगे हेयतया अवगन्तव्या दोषा निरूपिताः । संस्कृतभाषामधिजिगांसमानानां बालानां तत्तत्स्वरूपबोधकानि सरलानि तत्र तत्र प्रदर्शितान्युदाहरणानि कस्मै न रोचेरन्? विभक्त्यर्था अपि 'न लोकाव्ययनिष्ठा' इत्याद्यपवादसूत्रार्थानपोह्य लकारार्थवत् उत्सर्गसूत्रार्थमात्रप्रदर्शनेन वर्णिताश्चेत्, व्युत्पित्सूनां बालानां परिश्रममितोऽपि व्यपनेतुं प्रभवेयुः । तथापि 'न ह्यपूपस्य घृतमयत्वे रुचिर्विहन्येत' इतिवत् 'न लोकाव्यय' इत्याद्यपवादसूत्रार्थप्रदर्शनेऽपि सरसता न विहन्येत, नाप्यौत्सुक्यं भज्येत । अथवा अध्यापकाः प्रथममपवादसूत्रार्थानपोह्य उत्सर्गसूत्रार्थान् पाठयित्वा तदनन्तरं यदि अपवादसूत्रार्थान् बोधयेयुः, तदा तेऽपि बालानां सुगमा एव भवेयुः । साहित्यन्यायशब्दशास्त्राणि पिपठिषतां विद्यार्थिनां ग्रन्थस्यास्य पठनेन तेषां शास्त्राणां मर्यादा ईदृशीति स्फुटीभवेत् । बालानामत्यन्तोपकारकं ग्रन्थमिमं विरचितवतः शास्त्रिवर्यस्य परिश्रमः देवभाषाभिमानिभिः सर्वैरपि बहुमन्येत सफलीक्रियेत चेति दृढं प्रतीम. ॥

———❀———

# भारवेर्जीवनचरितम् ॥

किमित्यहं वर्णयामि तात्कालिकीं महाकवेरस्य भारवेरवस्थाम् । यदि यत्र कुत्रापि अगच्छन्नय गृह एव तिष्ठेत्, तदा एकत. आकिंचन्य-पीडा, अपरतः पत्नीशापवचनानि । इदं गृहे दुश्चरितम् । गृहात् बहिस्तु, अयं कूपकूर्म इति, पाण्डितीविधुर इति, लोकज्ञानविहीन इति, महाभीतिशालीति च, केचिद्रहसि केचित्प्रकाशं च यथेच्छं कथ येयुर्विवेकविधुरा· पामरजना. । व्यवहरन्तु नाम ते स्वैरम्, यतस्ते विवेकविदूराः । अद्भुतमेतत्— यत्प्राज्ञा विवेकिनोऽपि तानेवानु-कुर्वन्ति । अयमतीव चिन्तनीयोंऽशः । सन्तो नार्हन्ति खलु जन्म-सहस्रेऽपि परप्रत्ययनेयबुद्धीना समवाये प्रवेष्टुम् । उक्तं हि महाक-विशिरोमणिना श्रीकालिदासेन मालविकाग्निमित्रे—

'सन्त परीक्ष्यान्यतरद्भजन्ते
मूढ· परप्रत्ययनेयबुद्धिः ॥' इति ।

अथ यदि महाराजसंदर्शनाय यतेत, तदा इतोऽपि महत्तरा अनर्थपरंपरा । तथा हि—राजानः प्रायेण स्वयमपण्डिता इति, तदा स्थानकवय. तदास्थानपंडिताश्च परवचःप्रशंसासमयेषु वाचंयमा इति च सुप्रसिद्धमेव खलु सर्वेषा प्राज्ञावतंसानाम् । उक्तं हि हर्षचरित्रे श्रीबाणभट्टेनापि—

'कपिरचपल·, कविरमत्सरः, वणिगतस्करः, राजसूनुरदुर्वि-नीतश्च जगति दुर्लभः ॥' इति ॥

राजवल्लभास्तु अव्यवस्थितचित्ता·; अत एव तेषां प्रसादोऽपि भयंकर. प्राणिनाम् । कि बहुना—

यं यं नृपोऽनुरागेण संमानयति संसदि ।
तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥

एवं बहुप्रकारैः कलुषितमानसोऽपि, "उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी" इति महाकविभवभूत्युक्तरीतिमनुरुन्धानः,

'मार्जारो लभते न मञ्जुलशुकालापेन कौतूहलम्
कस्तूरीहरिणस्य सौरभभरैः सिंहो न संतुष्यति ।
प्रीतिर्नास्ति मयूरताण्डवशतैर्व्याधस्य दुष्टे सदा
व्याप्तायां भुवि सन्ति केऽपि विरला सन्तो गुणग्राहिणः ॥

इति श्रीजगन्नाथपण्डितरायवचःपरिपाटीं प्रमाणीकुर्वन्, विपुलाया धरण्याम् अस्मिन् कलौ युगेऽपि महीपतयः तद्वल्लभाः तदास्थानास्थिताः कवयः पण्डिता वा मामादर्तुं संमानयितुम् मदीयां कवनशक्तिं प्रशंसितुम् पाण्डितीमभिनन्दितुं च यत्र कुत्रापि गुणग्राहिणः सन्तो न सन्ति वा? अपि तु सन्त्येवेति निश्चिन्वन्, अनन्यसाधारण्यामात्मीयप्रज्ञायामेव भारं निवेश्य धीरतामवलम्ब्य च प्रतस्थे विद्वत्कविसार्वभौमः पृथिवीपतीनां संदर्शनाय ॥

(क्रमशः)

॥ श्रीः ॥

# ॥ विजयिनी ॥

## प्रथम आश्वासः ॥

आसीत्पुरा खलु सुरासुराजय्या, विन्ध्यपर्वतस्योत्तरस्यां दिशि प्रसृताभोगा, महीधरसान्निध्येन सुलभारोग्यसम्पत्तिमती, स्वा-

सर्वदा जनैरवालोकि ।

राजापि पुर्या अस्या. कलहेऽस्मिन्माध्यस्थ्यवृत्तिमवलम्ब्य समये च तान्संबोध्य कलिनिवारणाय कृतप्रयत्नो बभूव । अथापि नैनावमात्यौ स्वभुजगुरुमदौ तमश्रौष्टाम् । अन्ततश्च कलहोऽयमीदृशीं दशामगात्; यदस्यां नगर्यां कार्तवीर्यपक्षपातिनः केचन, महावीर्यपक्षपातिनश्च कतिपये, इति भेद. सर्वत· प्रसृतः । काले काले चोभयपक्षपातिनां जनानां कार्यवशान्मध्येमार्गं मिलितानां भाषणप्रसङ्गोऽपि रुधिरप्रवाहे पर्यणसीत् । यदि कश्चन सन्धये यतितुमाभिलष्यंस्तान् शमयितुं प्रयतति, सर्वोऽप्यस्योद्यमोऽमूभ्यां विफलीक्रियते । अन्ततश्च न कोऽति कार्येऽस्मिन् बद्धश्रद्धो बभूव ।

एकदा शारदया ज्योत्स्न्ययायत्तीकृते गगनमण्डले, नलिनीचुम्बनसुखानुभाविकिरणे सम्पूर्णशीतकिरणे, अनागमाद्धेमन्तस्य कुमुदिनीवनसश्रीके उद्यानसरसि, अप्राप्तनिदाघत्वादनष्टहरिततृणासूद्यानभूमिकासु, अतिक्रान्तवर्षासमयत्वाच्छुष्कप्रायासूपवनवेदिकासु, पुष्पसमयप्रथां वसन्तस्य यापयितुमिव कृतप्रयत्नेषु तरुलतासमुदयेषु कृत्रिमभवनविहारोत्सुकः सस्त्रीकः कार्तवीर्यपक्षीयो जनः, आमलकीसमीपावासलाभमिषेण स्वामिना सहोद्याने सममिलत् ।

नेदं विशेषतः कौतुकावहम्, यत्साधारणस्य जनस्य केवलं महिलावर्गदिदृक्षयैव तत्र मेलनं नाम । अथापि न च प्रणयपरवशस्य जनस्य शक्यमिदमवेक्षितुं यत्कार्यमकार्यं वेदमिति न सोत्रांशतोऽपि दोषास्पदम् । साधारणकक्षास्थः सर्वोऽपि जनः सामान्यतः, विशेषकक्षास्थितश्च जनो रमणीसमुदाये सचक्षुस्फारं दत्तदृष्टिः सर्वतोऽप्यवालोक्यते । इमामेवाभ्युपगत्य सरणिम्, कार्तवी-

र्याणां समाजे वयस्यैर्दयितासमूहनिरीक्षणे प्रवर्तितमना रत्नाकरः साकमेकतमेन तेषाम् अनाहूतोऽपि वेषान्तरं कृत्वोद्यानमगमत् ॥

नैव किलेद् कथनीयम्, यन्मनोनुरूपं कार्यं घटयितुमाहितोद्यमोऽपि नर प्राय उद्देशाननुरूपेण फलेन धात्रा योज्यते। रत्नाकरवयस्यो भट्टराजोऽपि रत्नाकरस्य प्रथमसङ्कल्पितां प्रणयिनीमशोकिनीं तदननुरूपां मन्यमानस्तस्यामनुरक्तं रत्नाकरमानसमधिकरमणीयानां रमणीनां दर्शनेन परावर्तयितुकामो रत्नाकरमुद्यानगमनेनोपच्छन्दयामास। यद्यपि महाविक्रान्तपक्षीयत्वाद्रत्नाकरभट्टराजयोर्महदिद सङ्कट यदरिसमूहे असहायेनैकेन वा सहायेन सह गमनम्, अथापि रमणीदर्शनस्पृहावद्भ्यां रत्नाकरभट्टराजाभ्यां नैवेदमालोचितम् ॥

सुधावर्षिभिरमृतांशुमयूखैरखिलोऽपि भूभागो रजतवर्णतां नीत । सर्वोऽप्याहूतो जन उद्यानरामणीयकनिरीक्षणे बद्धादरः, कुत्रचन कृत्रिमजलाशयमण्डनानि अभिनवविकसनसश्रीकाणि राजतान्यपि भृङ्गैर्दूषितसच्चरित्रैरिव दुर्जनैः कृष्णवर्णता प्रापितानि कुमुदानि विलोकयन्नात्मान विनोदयामास । कुत्रचिच्च कृत्रिमवनभूमिषु विरूढानि बालतृणानि पारसीकजेन महावस्त्रेण समानरामणीयकानीति विभावयन्, तैराच्छन्नेषु भूभागेषु सौन्दर्यभङ्गभीत्या पदं निधातुमनिच्छन् जनः शुक्लवालुकाप्रक्षेपणमृदुना हिमकरपादोपवर्धितशौक्ल्येनैव पथा मन्दगमनस्पृहावान् बभूव । एकतश्च कश्चन परिश्रान्तोऽसमर्थश्च गमनसमकालमुद्यानसौन्दर्यनिरीक्षणे, उपवनमध्यस्थापितानां रम्याणां मञ्चानामेकतम आत्मनो देहयष्टिं निक्षिपन् दलदरविन्दमधुपानलोलुपो मिलिन्द इव किमपि मञ्जु गुञ्जन्नास्ते, अन्यतश्चान्दो-

लनक्रीडासक्तो रमणीजनः विटपविलम्बिरज्जुबद्धासु वैन्यपुष्पालङ्कृतरज्जुभागासु आन्दोलिकासु आरूढो मधुरतमेनात्मन आलापेनावर्जितसकललोकास्तिष्ठति ॥

अत्रान्तरे वयस्यानुगतो धृतान्यवेषत्वादज्ञेयप्रथमस्वरूपो रत्नाकरस्तत्रागमदभूच्च कार्तवीर्यप्रधानपुरुषेण संमानितः । अवसिते च कुशलप्रश्नादिके समुदाचारे कार्तवीर्यप्रधानपुरुषो महाबाहुः उपवनशोभानिरीक्षणेन यथेच्छमात्मानं विनोदयतां महाभागाविति तावुभौ व्यजिज्ञपत् । रत्नाकरभट्टराजावपि अधिगतक्रीडनकाविव बालकौ तत्रोद्यान इतस्ततोऽभ्राम्यताम् । भ्रमन्तौ च तौ विविधरमणीक्रीडाकृष्टमानसौ कुत्रचिदान्दोलनाधिरूढस्य कुत्रचन मृदङ्गादिवादित्रसमूहकन्दलितस्य तद्वादनादिनात्मानं रञ्जयतश्च क्वचिदप्सरसामपि नाट्यमङ्गविक्षेपादिकं चोपशिक्षयतः स्त्रीजनस्य दर्शनेनात्मानं धन्यम्मन्यौ भ्रेमतुः ॥

अत्रान्तरे विविधसुन्दरीरत्नावलीमध्यरत्नायमानम्, स्वसौन्दर्यगर्वखर्वीकृतामराङ्गनम्, वदनविधुतुच्छीकृतशारदीयसुधांशुबिम्बम्, एकत्रैव त्रिभुवनसौन्दर्यदिदृक्षुणा विधिनाखिलेन धीकौशलेन विनिर्मितमिति जनै· सम्भाव्यमानम्, दुरधिगम्यं जनै, दुष्प्राप्यं वसुधातले, प्रत्यादेशो भुवनरामणीयकस्य, विजयिनीनामधेयं किमपि प्रमदारत्नं दयिताजननिरीक्षणावधूतचेतसो रत्नाकरस्य दृष्टिविषयतामगमत् ॥

रमणीवदनविधुकरस्नातश्च स तत्क्षण एव किमिदमपरं सुधांशुबिम्बं वसुधासञ्चारनिबद्धकौतुकं पृथिव्यामपि सौन्दर्यसारभूतेऽस्मिन्नुद्याने सञ्चरणेनात्मानं विनोदयितुमागतमाहोस्विदवलाहकसान्निध्या

शरत्समर्यत्वात्सुधाधवलवारिधरसान्निध्या वा शम्पा ? किमुत शरत्काल सौन्दर्यनिरीक्षणकुतुकी सहस्रकर एवात्मन उष्णकिरणत्वेनोपवनसुषमानाशमाशङ्कमानस्तिग्मकिरणलक्ष्मीमपहायैवात्र समागत इति, अथ वा रोहिणीनायकोऽय रजनीपतिरस्मान् सदोपेक्षत इति समुपजातसापत्न्यक्रोधेन तारकागणेनात्मकान्त्या तद्विडम्बनसाधनं वसुधातले विनिर्मितमिति चिन्तननिमग्नस्वान्तः, कृतकृत्योऽभूवमहमिति सन्तुष्टान्तरङ्गेण जितं च कुसुमशरेण त्रिभुवनविजयिनेति खिद्यमानचेतसा भट्टराजेन सामोदखेदं वीक्ष्यमाणः, किमयं लोको ब्रूयादित्येवंविधां निरस्यैव त्रपां विजयिनीमुखात्क्षणमपि दृशमनाकर्षंस्तत्रैवावतस्थे ।

रत्नाकरमित्र भट्टराजोऽपि वयस्यस्य जडस्येवोन्मत्तस्येवाप्रतिबुद्धस्येव शोचनीयामवस्थां समीक्षमाणस्तस्या हेतुत्वेनात्मानमपराधिनमाशङ्कमानस्तं तत्रैव विहातुमशक्नुवंस्तदैव च विजयिनीभ्रातरं विजयवर्माणमागच्छन्तमवालोक्यारातिपराभूतिभीत्याक्रान्तस्वान्तो रत्नाकरमुपवनत्यागस्य कृत उपदेष्टुमारभत । सोऽवादीत् ‘ अयि रत्नाकर, अधीताखिलविद्यस्याभिजातस्य ते मादृक्षेणाल्पेन परिचारकसदृशेन कृत उपदेशः केवलं बालकृतमातामहोपदेशसमानतामावहेत् । तथापि ज्ञातिरिय बान्धवोऽयं गुरुबन्धुरयमित्येतादृशेन जीवलोकसाधारणलघिम्नायत्तीकृतान्तरिन्द्रियोऽहं प्रसङ्गतः कृतोऽल्पोऽप्युपदेशोऽपथान्नरं निवर्तयितुमलमित्यभियुक्तोक्तिमवलम्ब्यैवास्मिन्कर्मणि बद्धश्रद्धोऽभूवम् । क्व च तान्यशोकिनीप्रदत्तानि वचनानि ! क्व चेयं समापत्तिदृष्टाविज्ञातकुलशीलादिशालिन्याः कन्यकायाः केवलमवलोकनेन मनसश्चञ्चलता । न चेदमुचितं ते यत्प्रतिज्ञातस्य भङ्गो नाम । कोऽयं ते व्यामोहो यदरातिकुलसम्भवेयं

बालिकास्मादृशैरनुपभोग्येत्यचिन्तयतः । क्व च तत्तादृशं प्रलपितं यन्न मे मानसमशोकिन्याः परावर्तयितुं शक्यमित्येतादृशं ! क्व च प्रथम-सन्दर्शनमात्रविलुप्तधैर्यमधुनातनं ते मन. । कामं पश्यतस्त्वां ' कामी पश्यति कुत्सितां स्त्रियमहो कामस्य हि प्रेयसीम् ' इत्यभियुक्तोक्तं मे स्मरणसरणिमुपयाति —' इत्येतादृशमन्यदपि मृषामृषा वोक्त्वा स भट्टराजो रत्नाकरोत्तरमाशासानो विरतिमयासीत् ॥

तत्क्षणं चातीतार्धरात्रत्वात् सकलजीवलोकानन्दवितरणव्रते कुमुदिनीबान्धवे दोषाकरेऽस्तगिरिशिखरगमनमिषेणापरामप्याशामपरं च जीवलोकमात्मनो दर्शनेनानन्दयितुं समारब्धप्रयत्ने, दिवसव्यापारखिन्नत्वाद्दुर्गतेष्वपि निद्रालिङ्गनपरेषु, श्रान्तकलकलेषु च प्राणिसमुदायेषु रत्नाकरदृष्टिपातप्रणयिनी विजयिनी सह रमणीजनेन कथं कथमपि गृहगमनस्पृहावती बभूव । रत्नाकरोऽपि विजयिनीमय जीवितं निश्चिन्वानोऽनादृत्य भट्टराजोपदेशं तदनुसरणोत्सुकोऽभूत् । साऽपि वारंवारं परावृत्त्य पश्यन्ती रत्नाकरमात्मनोऽनुसरणायेव प्रोत्साहयामास । एवमुभावपि तौ विजयिनीप्रासादमगच्छताम् । तयोरेकतरा च विसर्जिताखिलपरिजना रत्नाकरदिदृक्षया सौधशिखरमारुरोह । शरदाकाशविमले सौधेऽपरमुदित रमणीवदनशीतरश्मिमवलोकितुकामो रत्नाकरोऽपि आत्मनो मनोविनोदनायोपवनभूमिमलमकार्षीत् ।

" मनसिजेषुगोचराणां न रात्रिर्नातपो नाप्तजनलज्जा न च गुरुजनेष्वादर ' इति सार्वजनीनेयं प्रथा रत्नाकरसदृक्षेष्वप्यवितथेति नेदं महदाश्चर्यजनकम् । विजयिनीवदनं विविधाभिरुपमायोपमाभिस्तस्मिन्नेव समधिका रुच दधानस्तेनैवात्मानं प्रीणयन्नष्टधन इव कदर्य. तत्र तत्र बहुश. परिबभ्राम । उन्मत्तस्येव परिभ्रमतश्च तस्य

कालेन कियता विधुपरिवेषं विडम्बयतो गवाक्षात्सानन्दं सस्पृहं सोत्कण्ठं च विगतनिमेषया तिरस्कृतोत्फुल्लेन्दीवरया दृशा वारंवारं रत्नाकरमवलोकयन्नगाद्दृष्टिपथं विजयिनीवदनचन्द्रमा. ॥

अनुपदमेव हरिणलाञ्छनालोकसमुपजातामोदेन प्रवृद्धोर्मिप्रदर्शिताभ्युद्गमनक्रियेण रत्नाकरेणेव रत्नाकरेण 'प्रकटीकृता विविधाः शृङ्गारचेष्टास्तद्दर्शनोद्भूतकुसुमचापाधीनायाः पुनः पुनस्तन्निरीक्षण आबद्धकौतुकाया विजयिन्या नयनसरणिमगमन् । सापि तद्विकारदर्शनद्विगुणितपुष्पबाणावेशा पुनस्तन्मुखावलोकिनी तन्मयमिव सकलं जीवलोकं पश्यन्ती इन्द्रजालिकाभिभूतेव भुजगी तदनुसरणसरणिनिक्षिप्तदृष्टिरभूत् । विभातप्रायामवलोक्य रजनीं सुधांशुरिव गगनतलं रत्नाकरोऽप्युद्यानत्यागबद्धमतिर्बभूव तच्च कथं कथमपि निर्वर्तयामास ॥

---

## द्वितीय आश्वासः ॥

---

ऐन्द्या आशायाः प्रसाधनं भगवान् सहस्ररश्मिमाली भास्करः उदयगिरिशिखरमारुरुक्षुर्भुवनप्रबोधनसाधनानां वयसामारावमिषेण विभातगीतगानोद्यतो वन्दिपुत्र इव बाभाति । निशायां सुखमनुभूतनिद्रो जीवलोकस्तत्परिणामं प्रसन्नत्वरूपं प्रदर्शयितुं कृतोद्यम इव स्वप्रसादं तरुलतापल्लवसमुदयेषु प्रथमं प्रकटीचकार । अपरस्य तेजोगोलस्योदयेनात्मनः शाश्वतिकीं पराभूतिं मनसा दधानानीव तारकाणि अस्तगमनमेवात्र श्रेयान् पन्था इति निश्चित्येव तत्क्रियासाधनसमुत्सुकानि बभूवुः ॥

(क्रमशः)

# शाकुन्तलसंविधानरामणीयकम् ॥

भावनीयो भावुकानाम् । चतुर्थे चाङ्के नायिकागतमेव केवलं विरहौत्सुक्य प्रदर्शितम् । तदपि कालविलम्बप्रतिसन्धानमात्रनिमित्तम् । शकुन्तलाया अपि दुर्वासःशापानवधारणादपायशङ्काविरहेण काष्ठागतं न भवति । अन्यतश्च, शापविस्मृतप्रणयस्य प्रत्युत कैव कथा नायकस्य विरहोत्कण्ठाया । तथाविधयोश्च समागमोपनिबन्धो रसं पाकात् प्रच्यावयेत् । यत उक्तमनेनैव कविरत्नेन— 'तप्तेन तप्तमिव संघटनाय योग्यम्' इति 'यदेवोपनतं दुःखात् सुखं तद्रसवत्तरम् । निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः' इति च । यदि च कविना दुर्वासःशापो विस्मरणहेतुर्नोपादायिष्यत, तदा तथाविधप्रियाप्रणयेनानुपदमेव राज्ञा यानसेनादिपरिकरोपनीतायाः शुद्धान्तप्रवेशनमात्रेणेतिवृत्तस्य समाप्तेश्चतुर्थ एवाङ्को नावातरिष्यत् । यदपि प्रियतमायाः सदसि परुषवचनैरवधूननं रसभङ्गायेति, तत्रापीदमस्त्यवधारणीयम्— न ह्यत्र शकुन्तलानभिसम्रहे मनागपि राज्ञो वैरस्यं गम्यते । विस्मरणादेव हि शापनिमित्तात् परपरिग्रहभीरुणा धार्मिकेन रागवतैव सता राजर्षिणा कथमपि रमणीयादपि विषयान्मनः प्रतिवार्यते । जननान्तरानुभव इव च प्रियाप्रणयो विगलितेत्थंभावो वासनाशेषः परिग्रहपरिहारयोश्चित्तमनवस्थयन्नवधारणविसंष्ठुलं राजानं विप्लावयति । तथा हि 'अहिणवमहुलोलुवो तुमं तह परिचुम्बिअ चूदमञ्जरिं । कमलवसदिमत्तणिव्वुदो महुअर विह्मरिदोऽसि णं कहं ॥' इति हंसपदिकागीतिनिशमने सति, "किं नु खलु गीतमेवंविधार्थमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽ-

स्मि ।" इति कृतचिन्तः. पश्चात् 'अथवा । रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः । तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि' इति स्वेनैवाश्वस्तोऽपि तया चिन्तयाऽन्तरविमुक्त इति स्फुटीकृतम् 'इति पर्याकुलस्तिष्ठति' इत्यनेन । अङ्कान्ते च निष्क्रान्तायां शकुन्तलायां 'शापव्यवहितस्मृति शकुन्तलागतमेव चिन्तयति' इति गूढानुराग त्वमेव दर्शितम् । उपस्थितायाः शकुन्तलाया. प्रथमदर्शनेऽपि 'का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या । मध्ये तपोधनाना किसलयमिव पाण्डुपत्राणाम् ॥' इत्यनेनाविविक्तविवेको रागोदय. सूचितः । अथ च 'इदमुपनतमेव रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन् । भ्रमर इव विभाते कुन्दमन्तस्तुषार न च खलु परिभोक्तुं नापि शक्नोमि हातुम् ॥' इति च विशदाव-भासविप्लुतं विरहोत्कण्ठ्यमेव स्पष्टीकृतम् । एव 'सदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथाह्यनया । मय्येव विस्मरणदारुणचित्तवृत्तौ वृत्तं रह.प्रणयमप्रतिपद्यमाने । भेदाद्भ्रुवो. कुटिलयोरतिलोहिताक्ष्या भग्नं शरासनमिवातिरुषा स्मरस्य' इत्या दिकं च रसातिशयमेव धर्मलोपसंशयप्रतिरुद्धप्रसरं गमयति । एवमादिभिरनुभावै राज्ञश्चित्तसमवस्थां जानतैव हि पुरोधसा स्वगृहं शकुन्तला निनीषिता । अनुमतं चेदं राज्ञा । ततश्च ज्ञायते संस्का रमात्रावस्थो राज्ञः शकुन्तलाप्रणयोऽस्त्येव, न तु निःशेषप्रमुषित इति । दृष्टे चाभिज्ञाने निवृत्तशापस्य सपदि संस्कारोद्बोधादनुस्मरणं गूढानुरागसधुक्षणाद्रतिमेव परां कोटिमारोपयति । प्रकृतीनां च शकुन्तलाया तपोवनादुपगताया स्वबन्धुभिरुपनीताया न चारित्र-

लोपशङ्कावसरः । प्रभोरनवक्लृप्तिदुःस्थामवस्थां शकुन्तलायाश्च स्वात्मप्रत्ययनिष्कम्पा वृत्तिमवलोक्य स्वामिन्येव प्रमादातिशङ्केति च तेनैव प्रकरणेन स्फुटीभवति । पुरोहितगृहगामिन्याश्चाप्सरस्तीर्थोपान्ते तेजोमयदिव्यवनितापरिग्रहस्तामेव सभावनामवस्थापयति । षष्ठाङ्के चोपनिबद्धो विप्रलम्भातिभार पूर्वरसमेवाविच्छेदेन बहुलीं कुर्वन् समागमस्य महतीं शोभामुपनयति ॥

यदिह धनमित्रस्य श्रेष्ठिनो व्यसनप्रसङ्गादापन्नसत्त्वाया प्रेयस्याः परित्यागानुशयेन प्रवृद्धेन मूर्च्छनं राज्ञः, यच्च मातलिसमास्कन्दितस्य विदूषकस्यार्तप्रलापेन तेजोऽभिभवासहतया महापुरुषसुलभया क्षोभात् प्रतिबोधः, तदेतदखिलमतीव रसनीयमनुभूयते । उत्तररामचरितादिषु शश्वन्मोहप्रतिबोधौ लघुनैव हेतुनोपनिबद्धौ महापुरुषगुणाननुगुणौ सहृदयानां रसास्वादं मनाग्विकलयत एव । मारीचाश्रमे पुत्रदर्शने पुत्रस्य क्षत्रियत्वपुरुवंश्यत्वयोस्तत्पितुर्धर्मपत्नीपरित्यागित्वे मातुः शकुन्तलाभिधाने वा विदितेष्वपि सर्वोपाधिव्यभिचारातिशङ्कयाऽन्तर्गतोत्कण्ठाऽतिशयप्रदर्शनं लोकानुभवसंवादादतितरां हृदयङ्गमम् । उत्तररामचरिते रामस्य कुशलवानुदर्शने विकर्तनकुमारच्छायाया स्वसादृश्यस्य सीतासमानतायाश्चात्मनैवावधारणमनुत्सुकस्य तटस्थस्येव विस्रब्धमनुसन्धानं प्रतिभाति । अन्ततश्चात्र शकुन्तलासङ्गमप्रकार कश्यपमुखाच्छापपरिज्ञानं च किमपि सहृदयसंवेदनीयं तत्त्वान्तरम् ॥

अत्र नायिकासमागमस्य प्रथमं तपोवने पश्चाच्च मारीचाश्रमे देवभूमौ वृत्ततया विदूषकव्यापारस्य परिमितः प्रसङ्गः । तत्र द्वितीयाङ्के राज्ञ एकाकिनस्तपोवनावस्थानं संविधातु मृगयाविनिवर्तनाय

च देवीशासनापदेशेन सेनाप्रतिप्रेषणप्रस्तावाय च चक्षुःप्रीतिमन-सङ्कल्पर्वारूढस्य शकुन्तलाश्रयस्य राजानुरागस्य प्रदर्शनाय च विदूषकस्य नर्मसचिवस्य प्रवेश उपक्षिप्तः । पञ्चमाङ्कारम्भे च हंसपदिकागीतप्रसङ्गेन शकुन्तलादर्शनात् पूर्वं तिरोहितविवेका सौषुप्तिकविस्फुरणसधर्मिणीं भूतपूर्वप्रणयप्रतिपत्तिमुत्तरप्रबन्धार्थव्यापिनीमुपक्षेप्तुं नर्मसचिववृत्तान्तः स्तोकमवतारितः । षष्ठे चाङ्के व्यक्तिं गतस्य शकुन्तलाविप्रलम्भस्य विनोदोपायस्य च रूपं निरूपयितुं भूयः प्रियासङ्गहेतोस्त्रिदिवारोहणस्य मातलिप्रवेशेनोपोद्घातमारचयितुं विरुद्धरसेनामर्षेण विरहविषादं व्यवधातु च विदूषकवृत्तान्तनिवेशः परां शोभामावहति ॥

अथ नाटके शकुन्तलासख्यौ चानसूयाप्रियंवदे रूपशीलविज्ञानादिगुणशालिन्यौ दर्शिते । यथा तृतीयाङ्के "हला सउंदले अणब्भन्तराखु वअं मअणगदस्स उत्तंदस्स । किंदु जारिसी इदिहासणिबन्धणेसु कामअमाणाणं समवत्था सुणीअदि तारिसिं दे पेक्खामि" इति प्रियंवदावचनतो युगपदेव शीलविज्ञाने दर्शिते । चतुर्थाङ्के च 'सहि अणुपजुत्तभूसणो अअं जणो । तह वि चित्तकम्मपरिअएण दाणिं दे अंगेसु आहरणविणिओअं करेमो" इत्यनेन कलाकौशलमाविष्कृतम् । तयोश्चानसूया वयसा यवीयसी ऋजुभाषिणी च, प्रियंवदा तु मनाग्ज्यायसी वक्रोक्तिशीला च । तदिदमसङ्करेण तत्रालापव्यतिकरे स्फुटमवसीयते । शकुन्तलायाश्च श्लोकरचनालेखनादिप्रस्तावेन विद्याविनीतत्वं व्यक्तमेव ॥

(क्रमशः)

संमान्यन्ते पुरोधसः? अप्यनामयं सावरोधस्य सबन्धुमित्रानुजीविजनस्य? अपि धर्म एव बद्धा ते मतिः? अप्युपास्यते वृद्धजनस्त्वया—' इति । अथ 'सर्वमेतदुपपन्नमेव, भगवतामागमनादद्य सविशेषतामुपनीतम्' इति प्रत्युदीरिते राज्ञा सर्व एव तापसास्तूष्णीमभवन् ॥

ततस्तेषु जराधवलितशिरोरुहो वेत्ता सकलश्रुतीतिहासपुराणानाम् अभिज्ञः परावराणां कालत्रयदर्शी अनेकावभृथपरिपूतमूर्तिः दीर्घतपा नाम कुलपति राजानमुवाच— 'राजन्! त्वया खल्वधीतानि शास्त्राणि । ज्ञातानि विज्ञेयानि । विदितानि वेदितव्यानि । कृतानि कर्तव्यानि । दत्तानि देयानि । विनमिता उद्धताः । निरस्ता अरातयः । निर्वापितो रिपुप्रतापोष्मा । विजिता सागरद्वीपभूषणा वसुमती । निःसपत्नीकृतमाधिराज्यम् । भूषितः पौरवोऽन्वयः । अपि च, अखिललोकरञ्जनैः गुणैर्देवस्य विस्मारिताः पूर्वराजर्षिगुणाः । तथाप्यापतितं महदत्याहितम्; येन विसर्पता सान्ध्येनेव तमसा विलुप्यमानदर्शना भवन्तमेव नाथमुपागताः स्मः । आचक्षते हि पुराणविदः— 'यदा खलु चातुर्वर्ण्यमननुरक्तमात्मोचितेषु धर्मेषु सर्वतो विप्लवमुपयाति, तदा धर्मविलोपनो भुवनं प्रवेक्ष्यति कलिः' इति । जानीमः साधुप्रज्ञया स एवाभूत्काल इति । तथाहि— अद्य तु न यथापूर्वमभिवाञ्छन्ति तप आश्रमवासिनः । नाबध्नन्ति स्पृहां स्वाध्यायेषु । दधति नाग्निहोत्रेषु श्रद्धाम् । न निस्पृहा विषयोपभोगेषु । न सेवन्ते गुरून् । नोपासन्ते वर्णेषु परानवरा । बहुमन्वते द्विजातयः क्षात्रं धर्मम्, क्षत्रिया अर्थजीविकाम्, वैश्या अपि शौद्रीं वृत्तिम् । शूद्रा अपि काङ्क्षन्त आधिक्यं त्रैवर्णिकेभ्य आकलयन्ति शाश्वतं

धर्मम् । तथाहि केचित् वर्तयन्ति वार्ताभि·, केचिदवलम्बन्ते बाहुजन्मनां वृत्तिं काङ्क्षन्त. पालयितुं प्रजा । केचिदग्रजन्मान इवारभन्ते कर्माणि । केचिदभ्यस्यन्ति साङ्गं योगम् । केचिच्चरन्ति तपः । साधयन्ति मन्त्रान् । केचिदपदिशन्ति पारिव्राज्यम् । केचिद्धारयन्ति द्विजातीनां चिह्नानि । किं बहुना ? अधीयन्तो ब्रह्मविद्यां ब्राह्मणानपि शिष्यभावेन योजयन्ति । हन्त ! कि ब्रूमो वयम् ? द्विजातयोऽपि लोभमोहविलुप्तबुद्धयो निर्लज्जमुल्लङ्घयन्ति शाश्वती मर्यादां धर्माणाम् । तथाहि— केचित् विक्रीणन्ति निगमान् । केचिदुपदिशन्ति श्रुतीर्वृषलानाम् । केचन शस्त्रग्रहणदारुणवृत्तयो घ्नन्ति प्राणिनः । केचन गृहीततुलादण्डा विक्रीणन्ति घृततैलगुडकम्बलादीनि । केचिज्जीवन्ति माहिषकवृत्त्या । केचिदभ्युपगतश्ववृत्तयो जीवन्ति गाणक्येन । केचित् परिशीलितगीतकला उद्वहन्ते वेश्याचार्यकम् । परिभ्रमन्ति वेशवाटम् । केचिच्च लास्योपदेशगुरवो वारयुवतीना नर्तयन्ति सभासु करविधृतकांस्या नर्तकीः । केचिदुपगम्य दासभावं शुश्रूषन्ते क्षत्रियविट्शूद्रान् । किं च सर्वेऽप्यन्तर्नास्तिका दर्शयन्ति सूत्रेणैव ब्राह्मण्यम् । अश्रद्दधानाश्च विडम्बयन्ति सावहेलन कर्माणि श्रुतिस्मृतिविहितानि । अपि च 'द्विजार्थायैव विहितानि श्राद्धानि । परेताः खलु पितृपितामहादयः आत्मकर्मैकान्ता गतीरुपगच्छन्ति । केदं तादृशानुद्दिश्य तद्बन्धुभिरस्मिन् क्रियमाणं श्राद्धकर्म ? क ते पितरः ? किं च अज्ञजनप्रतारणानि अर्थविलयकराणि इष्टापूर्तानि । मोहविलसितान्यात्मोद्वेजनान्येव व्रतोपवासादीनि । तद्भवति यद्भावि । न तद्भवत्यन्यथा कर्मणा' इति प्रलपन्ति निरङ्कुशवचस. । केचिदुपेक्ष्य ब्राह्मण्यं, विहाय स्वाध्यायं, परित्यज्य श्रुतिस्मृति·

चोदितानि चिरंतनसकलमहर्षिगणाचरितानि यज्ञमुखानि कर्माणि, केवलं नानातन्त्रविहितानूरीकुर्वाणा धर्मान् दधानाश्च तदनुबद्धां महतीं श्रद्धाम्, समुद्वहन्तस्तत्तल्लिङ्गानि पाषण्डीभूता., किं च बहुमन्वानाः श्रुतिनिषिद्धान्यपि कर्माणि प्रार्थयन्ति मान्यतामाधिक्यं च ब्राह्मणेषु । स्वयमपि मिथ्याभिजात्यसंभावनादूषिताश्च न भुञ्जतेऽन्न श्रोत्रियाणाम् । न भोजयन्ति च ब्राह्मणान् । किं च सांकेतिकमुद्वहन्तो नानाविधमाहात्म्यं नाभिवादयन्त्यभिवाद्यान् । न पूजयन्ति पूज्यान् । कि बहुना? अधीतसाङ्गवेदानपि स्विष्टसकलक्रतूनपि स्वनुष्ठितवैधकर्मणोऽपि न पूजयन्ति श्रोत्रियान् । कि च न जानीम., केवलं तु भगवद्भक्तिप्रशंसैकान्तानि शूद्रकिरातश्वपाकफुल्कसादिषु ब्राह्मणाधिक्यबोधकानि अर्थवादरूपाणि कानिचित्पुराणवचनानि प्रमाणान्याकलयन्त. पूजयन्ति विविधैरुपचारैः शूद्रयोनीनपि । किं बहुना? दारुलोहशिलामयीरेवोपासमानास्त्यक्तादराः श्रुतिविहितेषु वर्णाश्रमोचितेषु कर्मसु नटा इव भक्तभूमिकां वहन्तश्चरन्ति । किं च क्षुल्लका इव जायन्ते मनुष्याः । विटपिनो वीरुधश्च न वहन्ति चार्तवीं फलकुसुमसमृद्धिम् । न फलन्ति सस्यानि । न दर्शयन्ति गुणानोषधयः । न सारवती पृथिवी । न वर्षति कालेषु पर्जन्य. । दुहन्त्यल्पतरमेव गाव । अभ्यसूयन्ति कालोपगतेभ्योऽतिथिभ्यो गृहमेधिनः । विद्विषन्ति पितॄन् पुत्राः । अभिचरन्ति भ्रातरः सगर्भ्यान् । अतिचरन्ति गृहिण्यः पतीन् । अपलपन्ति विपश्चितः शास्त्राणि । अधिक्षिपन्ति गुरून् शिष्याः । किं चाभिभूयन्ते म्लेच्छबर्बरकिरातवृषलै. अल्पवीर्या राजान. । तदेवमतिदुष्टचेष्टाशतोपदेशदेशिकेन सर्वतोमुखं प्रसरता कलिना बलवदभिपीड्य-

मानां भूतधात्रीं हन्यमानं धर्मं च त्रातुमर्हति देवः' इति ॥

राजाप्याकर्ण्य समस्तमपि तत्तापसभाषितं तत्क्षणमेव क्षुभितहृदयः किमप्यन्तर्ध्यायन् स्तम्भित इव जडीभूत इव विह्वल इव विषण्णवदनो मुहूर्तमिव तूष्णीं स्थित्वा चिन्तातिरेकशून्यीकृतया पारिप्लवया दृष्ट्या अन्तिक एव महार्हासनोपविष्टम्, कोविदं श्रुतीनाम्, अभिज्ञं साङ्गस्य सरहस्यस्य धनुर्वेदस्य, अखिलकलाकलापकर्कशधिषणं निरस्ताशेषरिपुवर्गं शस्त्रैः शास्त्रैश्च, विद्योतितब्रह्मक्षत्रं वाण्या तूण्या च, प्रख्यातं ब्रह्मणा शर्मणा च, किं च भेत्तारं सन्देहानां बलव्यूहानां च, धुरंधरं चमूमुखानां मखानां च, साधितपरलोकं ब्रह्मचर्येण वीर्येण च, कार्तिकेयमिव शरजन्मानम्, जामदग्न्यमिव परायणं दिव्यास्त्रग्रामस्य, वाचस्पतिमिव सकलनीतिशास्त्रनिष्ठगरिष्ठम्, प्रज्ञातिशयपरिज्ञातपरावरम्, गुरुं कुरुपाण्डवानाम्, श्रेष्ठं सर्वामात्यमण्डलस्य, वरिष्ठं प्रज्ञावतां गौतमं शारद्वतं ददर्श ॥

सोऽपि विज्ञाय नरपतिहृदयमीषत् स्मयमान इव प्रत्युवाच— 'आयुष्मन्! न पश्याम्यत्राल्पमपि विस्मये कारणम् । विदितपूर्व एवायमर्थः कालत्रयदर्शिभिर्महर्षिभिः; यदनपायमहिमवति निदाने मङ्गलानामवतार्य भारं विश्वंभरायाः परं धामोपगतवति भगवति वासुदेवे, तस्यैवायुधेष्विव तमेवानुगतेष्वप्रतिहतवीर्येषु भवतः पितामहेषु, कुरुक्षेत्रप्रवृत्ततादृग्दारुणसमरोज्जृम्भितनिशितशस्त्रधाराजलक्षालितकलुषेषु दिवमारूढेषु अन्येष्वपि राजर्षिषु आक्रामति भुवनं कलिरिति । कालो हि बलीयान् दुर्विभाव्यमहिमा विकारयति भावान् । श्रावयत्यश्राव्यान् । अनुभावयत्यसंभाव्यानि । दर्शयत्यदृश्यानि । उपपादयत्याचिन्त्यानि ।

चेष्टयत्यात्मोचितमेव प्राणिनः । अयं खल्वजय्यो विक्रमैः । अच्छेद्यः शस्त्रैः । अदाह्योऽस्त्रैः । असाध्यो बुद्ध्या । किं च स्वयमनपायो विनाशयति लोकम् । स्वयमसक्तो घटयति च जन्तून्, स्वयमेकरूपः आश्वासयति दुःखितम्, दुःखापयति सुखितम् । श्रुतमेवेदमायुष्मता-- यदपि प्रवृद्धकौरवकुलविनाशमहोत्पातः सकलराजन्यबलगहनधूमकेतुर्विग्रहवान् कलिरेव राजा सुयोधनोऽनुनीयमानोऽपि पितृभ्याम्, आबोध्यमानोऽपि अखिलधर्मवेदिभिः शान्तनवबाह्लीकसोमदत्तप्रभृतिभिर्वृद्धजनैः, प्रार्थ्यमानोऽपि विदुरसंजयाभ्याम्, विज्ञापितोऽपि कुलक्रमागतैर्वृद्धामात्यैः, अनुशासितोऽपि आचार्येण भारद्वाजेन मया च, ग्राहितोऽपि भाविनमर्थं महर्षिभिः, धिक्कृतोऽपि जामदग्न्येन, परिसान्त्वितोऽपि सर्वज्ञेन भगवता बादरायणेन, किं बहुना? बलवदनुशासितोऽपि सनिदर्शनैः सेतिहासैः सप्रशंसैः ससान्त्वनैः सप्रणयैः सोपालम्भैः सावधीरणैः सभर्त्सनैः सकुत्सनैः सकोपैः सप्रसादैः, अपि च, सकलसुरनरमुनिमंमतैः अखिलराजलोकपूजितैः शमोपगतैः जगद्भद्रोन्निद्रैः गुणदोषोपन्यासमेदुरैः वचनैः, संकल्पकल्पितजगता भुवनमङ्गलावतारेण धर्मव्यवस्थापनधीरेण विश्वाधिकवैभवेनापि शमायैव कुरुपाण्डवानामूरीकृतदौत्येन विश्वरूपिणा चराचरगुरुणा हरिणा, अपि च स्वयं विजानन्नपि दुर्जयतां पाण्डवानाम्, चिन्तयन्नप्यासन्नमखिलावनिपालबलक्षयम्, धारयन्नप्येकान्तविजयं पार्थानाम्, पश्यन्नपि कृष्णनाथतां रिपूणाम्, निश्चिन्वानोऽप्युपगतमात्मविनाशम्, बुध्यन्नपि जगतां भवाभवकारणं भगवन्तं वासुदेवं न रोचयामास शमं, नैच्छच्च निशितसूच्यग्रविद्धमात्रामपि भुवं दातुं ज्ञातिभ्यः । हन्त!

वयं वा तस्मिन् काले जानन्तोऽपि भाविनमर्थमनुसृताः स्मो बालिशा इव बालिशं राजानं धार्तराष्ट्रमेव । अन्यच्च परिज्ञात-सकलधर्मः प्रथितबलपौरुष शूरजनसंमतः सुतप्ततपाः चरित-ब्रह्मचर्यो वेदवेदाङ्गतत्त्वज्ञो दिव्यास्त्रराशिः आचार्यतनयो भागि-नेयो मम व्यपदिशन् सकलसुरासुरनरपूजितं कुलमाङ्गिरसं वि-लुप्तविवेक कलिनैव निर्घृण शूरजनविगर्हितमतिनृशंस तादृ-क् सौप्तिक वधमकार्षीत् । किं च गर्भनिषण्णाय भवतेऽप्यद्रुह्यत । स खलु कलिरिदानीमुत्तेजितशक्तिर्दैवेन स्वयमतिदारुणप्रसरो वि पर्यासयति जगदेव । तथापि प्रयतितव्यमापदि यथाशक्ति शक्तिमता पुरुषेण । नापचीयते खल्वर्थ. ममुचितपौरुषकालसाधनसंविभागच-तुराणाम् । त्वं च समग्रबलपौरुषसाधनो गृहीतसकलास्त्रस्तरुणश्चा-पसारय कलिं विक्रमेण । शिक्षयापथप्रवृत्तं लोकम् । स्थापय धर्मम् । पालय पृथिवीम् । रञ्जय प्रजाः ।'— इत्युक्त्वा विरराम ॥

ततो नरपतिरपि गुरुवचनेन वर्धितोत्साहः प्रस्थास्यमानो दिग्विजयाय बलोद्योजनाय सेनापतीनादिदेश । तेऽप्यनुल्लङ्घ्यतया नरपतिशासनस्य तत्क्षणप्रतिकार्यतया चोपगतस्य धर्मोपप्लवस्य उपला-श्यतया च मुनिजनानुयोगस्य बलाध्यक्षान्नियोजयामासुः । अत्रान्तरे कुशलकरधृतदण्डकोणाभिताड्यमानगभीरभेरीनिर्ह्रादमेदुरितो बलवदा-र्यमाणकाहलीनिनादानुगतो मधुरतरसुषिररवसमवष्टब्धषड्जश्रुति-मनोहरः, तत्समयसमुदञ्चितसमुचितरागकलाविशेषप्रपञ्चप्रकटितः तत्तद्ग्राममूर्छनारमणीयः पटुपटहनिस्वानस्फुटीकृतविविधलयगतिः आ-वेदयन्वियन्मध्यमध्यारूढमम्बरमणिमखिलजनावधानदायी मुहूर्तवि-रतिवाद्यमानघण्टारवानुगतो मध्याह्नशङ्खध्वनिरुदातिष्ठत् ॥

राजाऽपि तमाकर्ण्य 'समागतः स्नानसमयः' इति उत्थाय निजासनात् सहैव गुरुणा विनयमधुरेण निसर्गगम्भीरेण वचसा निमन्त्र्यातिथ्याय सर्वानपि तांस्तापसान् ऋत्विग्गणानुगतानात्मनोऽग्निशरणाय प्रेषयामास । अनन्तरमभ्यन्तरप्रवेशोन्मुखे राजनि सर्वाऽपि सा सभा समुच्चचाल । तदानीं चोच्चैर्निगद्यमानविविधनृपापदानमुखरमुखानां मधुरगीतिमुच्चैर्गायतां जयजीववादकोलाहलेन वन्दिनाम्, अपसरणावधानविनयविबोधनगम्भीरेण घोषेण कञ्चुकिनाम्, प्रस्थानसमयप्रणतिसंभ्रमविनमितपूर्वकायानां कुट्टिमतलपरिघट्टितमणिहारशिञ्जितेन महीपतीनाम्, अतिरभसपरस्परसंघर्षवाचालितानां घणात्कारेण रत्नकेयूराणाम्, आपूरयता सभामण्डलं भुवः कम्पमिवोपजनयता चरणतलपरिघट्टनध्वनिना युगपत् प्रस्थितस्य महतो जननिवहस्य सर्वतः क्षुभितमिव तदास्थानमण्डपमभवत् ॥

ततः प्रतिगतेषु सभास्तारेषु राजा प्रविश्याभ्यन्तरं संभ्रमासन्नैः परिजनैरवतारिताङ्गदहारमकुटकेयूरकञ्चुककलापः उपगम्य धाराभवनं तत्र विशालविपुलश्लक्ष्णरमणीयमतिविमलं परमेष्ठीव राजहंसं स्फटिकमयं स्नानपीठमध्यतिष्ठत् । तत्र च निषण्णस्य दूरापसारितालकभराः दृढवेल्लितावबद्धवेणीलतिका महार्हसंव्यानबद्धावच्छन्नगुरुतरकुचभराः आयतकाञ्चीदामसंदानिततनुमध्याः कच्छावबद्धविलम्बितविपुलतरनितम्बाः अमन्दान्दोलितकुण्डलमाणिगणदीधितिप्रतिफलन चलचलितविमलकपोलदर्पणतला मणिमयकङ्कणचलज्झलारावप्रकटितलयविशेषा समालेपनश्रमवशोन्मिषितत नुतरस्वेदबिन्दुनिकुरुम्बकरम्बितानि अभिनवधाराजललवनिचितदलानि सरसीरुहाणीवाननानि बिभ्राणाः समङ्कुरितश्वसितधोरणीनट-

त्कुचकलशयुगला' समलिम्पन्नुत्तमाङ्गं महीपतेरतिसुरभिणा महौषधिरससंभृतेनाखिलेन्द्रियप्रसादनेनागदंकरणेन तैलेनाभिनवसमुदञ्चितसौन्दर्यमनोहरा वारविलासिन्यः । ततश्च सरसनिर्मलशिशिरसुगन्धिसलिलपूर्णैः कण्ठावसक्तकान्ताजनकराङ्गुलिद्युतिकवचितमुखैः बालरसालपल्लवावच्छादितमुखैरिवाच्छस्फटिकमयैः कलशैः काश्चित् काञ्चनमयैः काश्चित् रजतमयैः काश्चिदभिषिषिचुः क्रमेण राजानं मूर्तिमत्य इव महानद्यो दास्यो वामलोचनाः ॥

अनन्तरं भूपतिरपि स्नानपीठादुत्थाय त्वरिततरपरिचारकोपनीतेन शुचिधौतेन वाससा संमृष्टसकलावयवः संवेष्टितोत्तमाङ्गोत्तरीयेण धृत्वा तनीयसी दुकूले संतर्प्य देवानृषीन् पितॄंश्च दत्वा चार्घ्यमुपस्थाय च वियन्मध्यमध्यारूढं गभस्तिमालिनं भोजयित्वा प्रथमममृतरससंवादिना विविधरससंस्कारमनोहरेणान्नेन सर्वानपि तांस्तापसान् तेषु च संपन्नतृप्तिषु स्वयमपि सुहृद्भिः परिवृतोऽभ्यवहारं निर्वर्तयामास । ततः प्रक्षालितकरचरण उपस्पृश्य पुरस्कृत्य च शारद्वतमुपगम्याग्निशरण तत्र ज्वलत इव सप्तार्चिषस्तापसान् ददर्श । तैश्च युगपदेव सभाज्यमानो दर्शितभक्तिर्भूमावुपविवेश ॥

अथ विज्ञायेङ्गितैराश्रमगमनोन्मुखान् मुनीन् सविनयमवादीत् —"अपि किंचित् गुणवदाप्यायकमभ्यवहृतं भवद्भिरत्र?" इति । तेऽप्याकर्ण्य गिरं नरपतेः परितोषपिशुनेन स्वरेण प्रत्यवदन्— "महाराज! किमिवालापहीयेत? भक्षितानि कुशलसूदसंस्कृतानि मृदुमधुरशुचीनि मांसानि । भुक्तानि विविधरसविशेषसंयोगपरितोषितरुचीनि नानाविधानि चोपसंपन्नानि शाकानि । आस्वादितानि यथासमीहितं बहुलघृतस्यन्दीनि सूपान्नानि । सम्यक् चर्वितानि च

सौर्यं चरुं निर्वपेत्' इत्यादौ 'सास्य देवता' इति विहिततद्धितेन देवतासंबन्धः । 'अनुमत्यै पुरोडाशमष्टाकपालम्' इत्यादिषु चतुर्थ्या देवतासंबन्धः । त्यागोद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वरूपस्य तत्समनियताखण्डोपाधिरूपस्य वा सम्प्रदानत्वस्य वाचिकायाश्चतुर्थ्याः त्यागोद्देश्यत्वरूपे तत्समनियताखण्डोपाधिरूपे वा देवतात्वे लाक्षणिकतया देवतात्ववाचकतद्धितापेक्षया दौर्बल्यम् । 'अग्निर्ज्योतिः——' इत्याद्युक्तस्थले मन्त्रलिङ्गेन देवतासंबन्धः । अत्र देवतासंबन्धबोधकवचनस्यैव मन्त्रलिङ्गेन कल्पनीयतया लाक्षणिकचतुर्थीघटितादपि प्रत्यक्षवचनात् दौर्बल्यम् । तदेवं मन्त्रलिङ्गप्राप्तदेवतासंबन्धं निमित्तीकृत्य अग्नये होत्रमस्मिन्निति व्युत्पत्त्या अग्निहोत्रशब्दः कर्मनामधेयमिति सिद्धम् । एवं 'श्येनेनाभिचरन् यजेत' इत्यत्र श्येनशब्दः पक्षिविशेषरूपगुणविधिपरः कर्मनामधेयं वा इति विशये प्रसिद्धेर्गुणविधिपरत्वमेवेति प्राप्ते उच्यते— 'यथा वै श्येनो निपत्यामिषमादत्ते एवमयं भ्रातृव्यं निपत्यादत्ते' इति श्येनसादृश्यव्यपदेशः गुणविधिपरत्वे नोपपद्यते । स्वस्मिन् स्वसादृश्यासंभवात् । अतोऽर्थवादाभिहितसादृश्यं निमित्तीकृत्य कर्मणि वर्तमानः श्येनशब्दः कर्मनामधेयम् । तत्सिद्धं चतुर्भिः प्रकारैः कर्मनामधेयत्वम् । नामधेयस्य च विध्येकवाक्यतायाः स्पष्टतया धर्मप्रामाण्यमिति । एवं वाक्यशेषोऽपि धर्मे प्रमाणम् । तथाहि— 'शर्करा अक्ता उपदध्यात् । तेजो घृतम् ।' इत्यत्राञ्जनसाधनतया यस्य कस्यापि द्रवद्रव्यस्य उपादानम्, उत घृतमात्रस्य ? इति विशये 'तेजो घृतम्' इति वाक्यशेषवशेन घृतमात्रस्यैवोपादानम् । विधिस्तुत्योरेकविषयत्वावश्यंभावादिति । एवं सामर्थ्यमपि धर्मप्रमाणम् । यथा— 'स्रुवेणावद्यति । स्वधितिनावद्यति ।

हस्तेनावद्यति' इत्यविशेषेण प्रतीतावपि सामर्थ्यवशात् द्रवद्रव्यावदानोद्देशेन स्रुवस्य, मांसाद्यवदानोद्देशेन स्वधितेः, पुरोडाशाद्यवदानोद्देशेन हस्तस्य च विधानमिति निर्णीयते ॥

तदेवमष्टौ धर्मप्रमाणानि प्रथमाध्याये निरूपितानि ॥

**समाप्तश्च प्रथमाध्यायः ॥**

---

# द्वितीयोऽध्यायः ॥

---

द्वितीयाध्याये शब्दान्तराभ्याससंख्यानामधेयगुणप्रकरणान्तरात्मकप्रमाणषट्कगम्यः कर्मभेदो निरूपितः । कर्मभेद इति भावनाभेदो विवक्षितः । तदुपपादकत्वेन च धात्वर्थभेदनिरूपणम् । तत्फलत्वेन चापूर्वभेदप्रतिपादनम् । तत्र प्रथमे पादे भेदविचारोपोद्धाततया किंचिद्विचार्यते । ननु अपूर्वे मानाभावः । आशुतरविनाशिनोऽपि यागकलञ्जभक्षणादेः स्वध्वंसद्वारेणैव कालान्तरभाविस्वर्गनरकसाधनत्वोपपत्तेरिति चेन्न । 'धर्मः क्षरति कीर्तनात् । प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि ।' इत्यादिप्रमाणावगतनाशप्रतियोगित्वान्यथानुपपत्त्या ध्वंसातिरिक्तापूर्वसिद्धेः । तच्चापूर्वं प्रधानाव्यवहितोत्तरजातमुत्पत्त्यपूर्वमित्युच्यते । अङ्गापूर्वोपकृतोत्पत्त्यपूर्वेण जनितं फलपर्यन्तस्थायि फलापूर्वं महापूर्वमिति चोच्यते । तथाहि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यनेनाग्निहोत्रहोमस्य स्वर्गकारकत्वे अवधारिते स्वर्गाव्यवहितपूर्ववृत्तित्वशून्यस्य होमस्य स्वर्गजनकव्यापारजनकत्वमन्तरा स्वर्गकारणत्वमनुपपन्नमिति अनुपपत्तिप्रतिसन्धानात्मकार्थापत्तिप्रमाणेन वा 'होमः स्वर्गजनकव्यापार-

जनकः स्वर्गाव्यवहितपूर्ववृत्तित्वशून्यत्वे सति स्वर्गजनकत्वात् । यो यदव्यवहितपूर्ववृत्तित्वशून्यत्वे सति यज्जनकः स तज्जनकव्यापारजनकः, यथा स्मृतिजनकसंस्कारजनकानुभव ' इत्यनुमानेन वा होमस्य परमापूर्वकतासिद्धौ केवलस्य प्रधानस्य तदङ्गीकारे तत एव फलसंभवात् अङ्गानामानर्थक्यम् । अतोऽङ्गसहकृतस्यैव प्रधानस्य परमापूर्वजनकत्वमाश्रयणीयमिति ॥

उदीच्यचरमाङ्गसमनन्तरं जायमाने परमापूर्वे प्रधानस्यापूर्वद्वारैव कारणत्वमास्थेयम् । अग्न्यन्वाधानादिब्राह्मतर्पणान्ताना प्राच्योदीच्याङ्गानामपि परमापूर्वजनकत्वं न स्वरूपेण संभवतीति अङ्गापूर्वाण्यङ्गीकार्याणि । यद्यपि परमापूर्वं प्रति प्रधानवदेवाङ्गानामपि उत्पत्त्यपूर्वद्वारा कारणत्वम्, तथापि फले अङ्गानामन्यथासिद्धत्वेनाकारणतया न समप्राधान्यप्रसङ्गः । अथवा संनिपत्योपकारकाङ्गजन्यापूर्वाणा प्रधाननिष्ठोत्पत्त्यपूर्वानुकूलशक्तिजनकत्वम् । आरादुपकारकाङ्गजन्यापूर्वाणामुत्पत्त्यपूर्वनिष्ठपरमापूर्वाद्यनुकूलशक्तिजनकत्वम् । अङ्गं द्विविधम्— संनिपत्योपकारकम्, आरादुपकारकं चेति । अङ्गिस्वरूपनिष्पादकं संनिपत्योपकारकम् । यथादर्शपूर्णमासयोरवघातप्रोक्षणादि । अङ्गिस्वरूपमित्यनेन उत्पत्त्यपूर्वानुकूलशक्तिविशिष्टप्रधानस्य विवक्षिततया प्रोक्षणादेरपि तथात्वोपपत्तिः । उत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यानुकूलशक्तिसंपादकमारादुपकारकम्; यथा तत्रैव प्रयाजादि । यत्र प्रधानमनेकं तत्र प्रतिप्रधानमुत्पत्त्यपूर्वभेदः । परमापूर्वं तु एकमेव । दर्शपूर्णमासयोस्तु समुदायापूर्वद्वयमधिकम् । तथाहि—' यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति ' इत्याग्नेययागो विहितः । तत्र भूधातोः द्रव्यदेवतासंबन्धानुमिते यागे लाक्षणिकत्वस्याख्याते लेट्त्वस्य चा-

ङ्गीकारात् । 'ताभ्यामेतमग्नीषोमीयमेकादशकपालम्' इत्यग्नीषोमीययागः । 'उपांशुयाजमन्तरा यजति' इत्युपांशुयाजः । एतानि पौर्णमास्यां प्रधानानि । 'ऐन्द्रं दध्यमावास्यायाम्' 'ऐन्द्रं पयोऽमावास्यायाम्' इति विहितसांनाय्ययागौ यदाग्नेयवाक्यविहिताग्नेययागश्चामावास्यायां प्रधानानि ॥

ननु षण्णा कथं प्राधान्यम् । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्ये द्विवचनश्रवणेनाग्नेयद्वयस्यैव कालद्वययोगिनः एकवाक्योपादानावगतद्वित्वयोगेन फलसंबन्धसभवात् । इतरेषां फलवत्संनिधौ अफलं तदङ्गमिति न्यायेनाङ्गत्वस्यैवावश्यकत्वात् इति चेन्न । समुदायानुवादिविद्वद्वाक्यद्वयवशेन षण्णां फलसंबन्धस्य सिद्ध्या प्राधान्योपपत्तेः । तथाहि——'य एवं विद्वान् पौर्णमासी यजते ।' 'य एवं विद्वानमावास्यां यजते ।' इति वाक्यद्वयगतलडन्तयजिना तत्तत्कालयोगिनां त्रयाणामनुवादात् समुदायद्वयं सिध्यति । ततश्च दर्शपूर्णमासप्रतिपादकोपस्थापिताग्नेयादिगतबहुत्वे द्विवचनशक्यद्वित्वस्य स्वाश्रयसमुदायघटकवृत्तित्वरूपसंबन्धसिद्ध्या अधिकारवाक्यगतद्विवचनस्य बहुत्वलक्षणातात्पर्यग्राहकं विद्वद्वाक्यद्वयमिति तद्वशेन षण्णां फलसंबन्धसिद्धिरिति ॥

अन्ये तु दर्शादिशब्दस्य समुदायलक्षणातात्पर्यग्राहकं विद्वद्वाक्यमित्याहुः । तदेवं षण्णां प्राधान्यसिद्धौ प्रधानाव्यवहितजन्यानि षडुत्पत्त्यपूर्वाणि 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयेन यागकरणकानां तिसृणां तिसृणां त्रिकान्तरनिरपेक्षाणां साहित्यप्रतीतेः । साहित्यस्य च एककार्यनिरूपितत्वरूपतया प्रतित्रिकमेकं समुदायापूर्वमङ्गीकार्यम् । तेन च

परमापूर्वमिति नवापूर्वमिति ॥

कर्म द्विविधम् । गुणकर्मप्रधानकर्मभेदात् । तत्र संस्कारजनकं कर्म गुणकर्म । यथा व्रीहीन् प्रोक्षति व्रीहीनवहन्तीत्यादिविहितप्रोक्षणावघातादि । तत्र हि प्रोक्षणेनादृष्टसंस्कारः अवघातेन वैतुष्यरूपदृष्टसंस्कारश्च व्रीहिषु जन्यते । गुणकर्म द्विविधम् । उपयोक्ष्यमाणसंस्कारकम् उपयुक्तसंस्कारकं चेति । तत्र उपयोक्ष्यमाणसंस्कारकमपि द्विविधम्, विनियुक्तसंस्कारकं विनियोक्ष्यमाणसंस्कारकं चेति । तत्र विनियुक्तसंस्कारकं प्रोक्षणावघातादि । विनियोक्ष्यमाणसंस्कारकं यथा —'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति । वैश्वदेवयागे विनियोक्ष्यमाणस्य पयसः संस्कारकं दध्यानयनम् । विनियोगो नामाङ्गत्वबोधनम् । तदिदमुपयोक्ष्यमाणसंस्कारद्वयमपि उपयुक्तसंस्कारकादभ्यर्हितम् । उपयुक्तसंस्कारकं प्रतिपत्तिकर्म । उपयुक्तस्य आकीर्णकरस्य विशिष्टदेशे प्रक्षेपः प्रतिपत्तिः । प्रतिपत्तेराकीर्णकरतानिवृत्तिरेव फलम् । यथा 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति विहितं कृष्णविषाणाप्रासनमुपयुक्तसंस्कारकम् । कृष्णविषाणा हि यजमानकण्डूयने उपयुक्ता । 'कृष्णविषाणया कण्डूयते' इति वचनात् ॥

प्रतिपत्तिस्त्रिधा । प्रधानपूर्वकाला प्रधानोत्तरकाला प्रधानसमकाला चेति । प्रधानपूर्वकाला यथा—'पशौ शकृत् संनिरस्यति लोहितं निरस्यति' इति विहितलोहितनिरसनादिरूपा । लोहितादेः वपोद्धरणोपयुक्तपशुसबन्धित्वेनोपयुक्तत्वात् । उपयुक्तशब्देन प्रधानयागोपयुक्तस्याविवक्षितत्वात् । उपयुक्तत्वाभावेऽपि अवस्कन्नत्वे प्रतिपत्त्यपेक्षत्वाच्च । प्रधानोत्तरकाला यथा-- इडाभक्षणादिरूपा । प्र-

धानसमकाला च चतुरवत्तहोमरूपा । 'वषट्कृते जुहोति' इति वचनात् वषट्कारानन्तरमेव होमोऽध्वर्युणा क्रियते । तदैव याज्यास्मारितदेवतायागः कर्तव्य इति होमस्य प्रधानसमकालत्वम् । अत्र चतुरवत्तमित्यनेन 'सकृदुपस्तृणाति', 'द्विर्हविषोवद्यति', 'सकृदभिघारयति' इति विहितोपस्तरणादिसंस्कृतमभिधीयते । गुणकर्मातिरिक्तं कर्म प्रधानकर्म । तच्चात्मगतादृष्टजनकम् । यथा प्रयाजादिकं स्तोत्रशस्त्रादिकं च । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम् । अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम् ॥

## इति द्वितीयाध्यायस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पादः ॥

तदेवं प्रथमे पादे कर्मभेदोद्घातविचारे प्रवृत्ते द्वितीयेन पादेन शब्दान्तराभ्याससंख्यानामधेयगुणैः कर्मभेदो निरूपितः । तत्र शब्दान्तरं नाम अपर्यायधातुरिति प्राञ्चः । विभिन्नधात्वर्थकत्वमिति नव्याः । यथा ज्योतिष्टोमप्रकरणे 'सोमेन यजेत,' 'हिरण्यमात्रेयाय ददाति' 'दाक्षिणानि जुहोति' इति । अत्र धात्वर्थभेदात् भावनाभेदः । कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमेन विजातीययागत्वादेः कार्यतावच्छेदकत्वनियमे विजातीययागत्वादेः कार्यतावच्छेदकत्वे तदवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया भावनासु वैजात्यसिद्धेः । अभ्यासो नाम विशेषपुनःश्रवणम् । यथा 'समिधो यजति तनूनपातं यजति' इति अत्र विहितस्य विधानायोगात् तनूनपाद्वाक्येन यागान्तरमेव विधीयत इति ।

अभ्यासात् यागभेदे सिद्धे शब्दान्तरात् भावनाभेदः। एवं संख्यादिभिरपि धात्वर्थभेदे सिद्धे शब्दान्तरादेव भावनाभेद इति बोध्यम्। 'तिस्र आहुतीर्जुहोति' इत्यत्र संख्यया कर्मभेदः। एकत्वान्यसंख्याया स्वाश्रयप्रतियोगिकभेदसामानाधिकरण्यनियमात्। 'अथैष ज्योतिः। अथैष विश्वज्योतिः। अथैष सर्वज्योतिः। एतेन सहस्रदक्षिणेन यजेत' इत्यत्र नामधेयेन कर्मभेदः। तत्र नामधेयकार्यस्य व्यवहारस्य एकेनैव सिद्धेः एकस्मिन् कर्मणि अनेकेषां नामधेयानामानर्थक्यात् नामभेदस्य कर्मभेदकत्वात्। 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र गुणात् कर्मभेदः। तत्र उत्पत्तिशिष्टामिक्षाद्रव्येणैव वैश्वदेवयागस्य नैराकाङ्क्ष्यात्। तत्र वाजिनद्रव्यस्य उत्पन्नशिष्टस्य निवेशासंभवेन वाजिनवाक्येन यागान्तरस्यैव विधेयत्वात्। न च परस्परापेक्षाविषयतावच्छेदकधर्मवत्त्वमेवाकाङ्क्षेत्युक्तम्, तथा च तादृशधर्मस्य यागत्वप्रदेयद्रव्यत्वादिरूपस्य उत्पत्तिशिष्टद्रव्यान्वयबोधे सत्यप्यक्षततया कथमाकाङ्क्षाविरह इति वाच्यम्। परस्परविषयाकाङ्क्षोत्थापकतावच्छेदकधर्मवत्त्वस्यैवाकाङ्क्षारूपतया विवक्षितत्वात्। अनवगतद्रव्यकयागत्वस्यैव द्रव्याकाङ्क्षोत्थापकतावच्छेदकतया द्रव्यावगतिसमनन्तरं दर्शिताकाङ्क्षाया असंभवात्। यत्र उत्पत्तिवाक्ये गुणाश्रवणम्, यथा 'अग्निहोत्रं जुहोति' इति तत्र तदनुवादेन 'दध्ना जुहोति' इत्यादिभिः सर्वैरेव खलेकपोतन्यायेन युगपत् द्रव्यविधानं विकल्पेन संभवति दर्शिताकाङ्क्षानपायादिति ॥

यद्यपि विकल्पस्याष्टदोषदुष्टत्वम्। तथाहि—प्रामाण्यत्यागः, अप्रामाण्यस्वीकारः, त्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागः, इति एकैकशिरसि चत्वारो दोषा इति शिरोद्वये अष्टौ दोषाः।

शिरआधिक्ये च दोषाधिक्यम् । तत्र प्रथमतो' दध्यनुष्ठाने पयो-वाक्यस्य अनुष्ठापकत्वलक्षणस्याप्रामाण्यस्य त्यागः । अननुष्ठापक-त्वलक्षणस्याप्रामाण्यस्य स्वीकारः । अनन्तरं पयोऽनुष्ठाने प्रथमप्रयोगे त्यक्तस्य प्रामाण्यस्य स्वीकारः । स्वीकृतस्य चाप्रामाण्यस्य त्यागः । दधिवाक्यस्य प्रामाण्यत्यागाप्रामाण्यस्वीकारौ । तदनन्तरं दध्यनु-ष्ठाने दधिवाक्यस्य त्यक्तप्रामाण्यस्वीकारस्वीकृताप्रामाण्यपरित्यागाविति प्रयोगत्रयावधिकं दोषाष्टकमिति । तथापि अगत्या विकल्पः स्वी-क्रियते । सति गत्यन्तरे न युक्त एवेति ॥

## द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

तृतीयपादे प्रकरणान्तरेण कर्मभेदः प्रतिपादितः । प्रकरणा-न्तरं नाम अनुपादेयसहितानुपस्थितिः । अनुपादेयानि च कालदेश-निमित्तफलसंस्कार्याणि पञ्च । तत्र कालस्योदाहरणम् 'कुण्डपायि-नामयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति' इति । अत्र प्रवर्त-कस्य विधेः कृतिविषयत्वापरपर्यायमुपादेयत्वम् । प्रमाणत्वाच्च अ-ज्ञातज्ञाप्यत्वाख्यं विधेयत्वं च प्रमेयम् । तदुभयमप्येकवृत्तीत्युत्सर्गः । ततश्च मासस्यानुपादेयत्वात् उपादेयत्वं धात्वर्थ एवेति वाच्यम् । अतस्तत्समानाधिकरणेन विधेयत्वमपि तत्रैवेति विहितस्य विधाना-योगात् नित्याग्निहोत्रात् भिन्नमेव मासाग्निहोत्रमिति । देशस्यो-दाहरणम्— 'सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः' इति । निमित्तस्योदाहरणम्— 'सत्रायागूर्विश्वजिता यजेत' इति । आ-

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे श्रावणमासः । [संचि. ५.

## सुभाषितानि ॥



प्राप्ते वसन्तसमये नवपल्लवश्री·
  क वा न भूषयति भूमिरुहं रसाल ।
यत् कोकिलः किसलयानि तवोपभुज्य
  कर्णामृतं वमति सा खलु मानना ते ॥ १ ॥

भानुर्भासयते जगद्वितिमिरं चन्द्रः सुधास्यन्दिभिः
  दिक्सौधान् धवलीकरोति किरणैरग्निः किरत्यार्चिष ।
कोऽर्थस्तैरखिलैः परस्परपरिस्पर्धानिबद्धोत्सवै-
  स्तन्वी लोचनतारका यदि मनाग्बिम्बग्रहे न क्षमा ॥ २ ॥

नीतास्तीरमपास्य वारिपदवीं नावः समापूरिताः
  प्राणै प्राणभृतां धनैर्धनवतां रत्नैर्महार्घैरपि ।
वीचिक्षोभविघूर्णितस्थितिरसौ त्वत्संनिधौ वारिधिः
  निस्तारे च निमज्जने च पवन स्वैरं तवैकायनम् ॥ ३ ॥

ति· ई. श्रीनिवासाचार्यः ।

॥ श्रीः ॥

# ॥ श्रीसदाशिवेन्द्रसरस्वती ॥



चराचरगुरोराज्ञया सर्वसहायामस्यामखिलजनमनस्तमोनिवारणायावतरन्ति मर्त्यरूपेण तदा तदा केचन पावनचरित्राः परिशुद्धचर्या. पङ्क्तिपावनाः परमेश्वरांशभूताः परावरतत्त्वज्ञाः परमगुरुवर्याः पुण्यजन्मानः पुरुषधौरेयाः । तादृशेषु प्रथमगणनीयो राजयोगनिष्णात. निखिलदिगन्तविश्रान्तयशाः कवेरकन्यातीरविहारकुतुकी 'सदाशिवेन्द्रसरस्वती' इति सुप्रसिद्धनामा योगिवर्यः सार्धशतहायनेभ्यः पूर्वं चोलमण्डलमात्मनो जन्मना अलमकार्षीदिति श्रूयते । तस्य चावासभूमिः करूर्नामको जनपद इति चावगम्यते । को वा न जानाति विशुद्धचरितस्यास्य योगीन्द्रस्यात्यद्भुतमपदानमार्यजनैर्गीयमानमनुदिवसमनुसंधीयमानं स्तुतिरूपेण विशदमनुवर्णितमभिनवनरसिंहभारतीस्वामिभिः श्रीमच्छृङ्गगिरिपीठमलंकुर्वद्भिरास्तिकजनानुग्रहनिरतैः ?

योगीन्द्रा हीमे शैशव एव समधिगतनिखिलविद्याविलासा गुरुभिरभिनन्दनीयविशदावभासविज्ञाना व्यराजन्त । निरन्तरनिबिडनारिकेलकदलीपनसाम्रक्रमुकादिद्रुमनिवहमण्डिते कवेरकन्यापरिसरोपान्तविराजमाने तिरुविशनल्लूर्ग्रामे विद्याग्रहणाय गुरूपसदनमकार्षुरेते स्मृतिचोदितेन वर्त्मना । तदा ह्यसौ ग्रामः विद्वद्बृन्दैर्विख्यातवैभवैर्माणवकैर्विद्याग्रहणपटुभिश्चाऽऽपूर्ण आसीदिति ज्ञायते ॥

श्रीमतोऽस्य सदाशिवस्य प्रथमे वयसि वर्तमानस्य सहाध्यायिषु माणवकेष्वेकतमः सुप्रसिद्धनामा रामभद्रदीक्षितः— यो हि जानकीपरिणयं नाम रूपकमनितरसाधारणेन मतिवैशद्येन निर्माय दाक्षिणात्यकवीनां नाटकसंविधानकरणनैपुण्याभावरूपमयशः प्रमार्ज्य शाश्वतं यशःकायमार्जितवान् । श्रीवेङ्कटेशनामा किलान्यो बालः— यो ह्याशैशवात्प्रकटितदिव्यानुभाव आख्याषष्टि दयाशतकादिग्रन्थान्विरचय्याध्यात्मतत्त्वमनुपमया वाग्वैखर्या विवृण्वन् अतिपावनेनात्मनः चरितेन धर्मतत्वमतिगहनमपि सम्यगुपदिशन् महतीं प्रसिद्धिं लेभे, यश्चाद्यापि 'अय्यावाल्' इत्यखिलैरास्तिकैः सभक्तिगौरवं साञ्जलिबन्धं च परमाचार्येषु प्रधानतया परिगण्यते । वैदुष्येण प्रज्ञापाटवेन चैतयोरन्यूनः गोपालकृष्णशास्त्रीत्यपरो वटुः— यो हि 'महाभाष्यं वा पठनीयम्, महाराज्यं वा पालनीयम्' इत्यभियुक्तोक्तिं हृदये कुर्वन् महाभाष्यपठनरसमनवरतमास्वदमानः भाष्यरत्नस्यास्य रमणीयां शाब्दिकहृदयंगमां कामपि व्याख्यामारचयत्, ब्रह्मनिष्ठस्यास्य वैदिकानुष्ठानेन ब्रह्मवर्चसेन शमेन दान्त्या चावर्जितस्वान्तः तोण्डमान्कुलतिलको नवसालजनपदाधीशः तच्छिष्यकोटिष्वात्मनः प्रवेशं साम्राज्यलाभादप्यधिकं मेने ॥

चत्वारोपीऽमे माणवका ईश्वरांशभूता अध्यात्मतत्त्वोपदेशेन जगदुज्जीवनाय कृतावताराः क्रमेण कृष्णेतरपक्षशशलाञ्छना इवैधमाना व्यराजन्त । यदीयसूक्तिसुधारसनिमग्नाः शिष्यपरंपराः दुर्विज्ञेयमप्यध्यात्मतत्त्वरहस्यमनायासेनावगत्य दूरीकृतदेहाभिमानाः भस्मीकृतेषणात्रितयाः परित्यक्तसांसारिकदुःखाः तृणी-

कृतपुरंदराः विधूतपुण्यपाप्मानः लीयन्ते केवलानन्दे नादमये ब्रह्मणि ॥

कथानायकोऽसौ सदाशिव. बाल एव न्यायशास्त्रे निरुपमं पाण्डित्यमावहन् वादाहवेष्वाचार्यानप्याकुलीचकार । प्रथमवयस्येव कृतदारपरिग्रहोऽसौ विद्याग्रहणव्यापृतः क्रमेण शैशवमतिचक्राम । शुश्राव च गुरुकुले वसन् कदाचिदात्मनः प्रेयस्या ऋतुप्रादुर्भावोदन्तं दूतमुखात् । आहूतश्च तैः जननीनियोगं मानयन् गुरुभिरनुज्ञातः अविलम्बेन प्रस्थाय ऋतुस्नानदिवसे ब्राह्मणसंतर्पणादिषु व्यापृतया जनन्या सादरमभिनन्द्यमानागमनो गृहानयासीत् । उत्सवकोलाहलहर्षनिर्भरेष्वभ्यन्तरजनेषु शृङ्गारगीतिमुखरेष्वङ्गनासमाजेषु आशीर्वचनमेदुरेषु गृहाङ्गणेषु अभ्यवहारसमयमतिक्रान्तमाकलयतः क्षुधा तृषा च क्लिश्नतोऽस्य सदाशिवस्यैवमुदभून्मनसि— 'पाणिग्रहणं नामेदमनन्तानां दुःखानां द्वारमित्यामनन्ति किल ब्रह्मनिष्ठाः । किञ्चिदपीदमनशनदुःखं मे भाविनीं दुःखपरंपरा सूचयतीव' इति ॥

एवंविधा चिन्ता तमहर्निशमुद्वेजयन्ती गार्हस्थ्ये द्वेषबुद्धिं द्रढयन्ती विरक्तिमतिमहतीमजीजनत् । 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति न्यायेन सद्य एव परित्यक्तगृहाभिमानः उदवसथात्प्रस्थाय योगविद्यानिष्णातमाचार्यमन्विष्यन् कवेरजातीरोपान्तेषु पुण्यक्षेत्रेषु विचचार । अनुदिवसमस्य पार्थिवेषु भोगेषु अरुचिर्महती समजायत । संसारार्णवनिमग्नानां दुःखार्तानामसंख्येयानां जीवानां विषये समुदियाय काचिदनुकम्पा तस्य

चेतसि । आधिव्याधिजरामरणादिदु:खविप्लुवं जनानामुद्वीक्ष्य मुहुर्मुहुरश्रुधारापरिक्लिन्नमुखोऽभूदसौ संयमी । औपाधिकान्ब्रह्मक्षत्रवैश्यशूद्ररूपान्भेदानविगणय्यातिवर्णाश्रमी भूत्वा अनाकलितस्वपरभेद: सर्वत्र समदृष्टिमाश्रित्य येन केनापि दत्तं यत्किंचिदपि भोज्यमश्नन् देहयात्रामकरोत् । शुष्कपर्णै: रथ्यासु विसृष्टैर्भुक्तशेषैरपि मिष्टमभ्यवहारमारचयन् सुखेन बभ्राम । महात्मानं योगिधर्माणमेनं सदाशिवं तथात्वेनाविज्ञाय 'उन्मत्तोऽयम्, जडोऽयम्' इत्युपाहसन्प्राकृता नरा. ॥

एवं परिभ्रमन्नेष कदाचित्परमशिवेन्द्रयोगिवर्यमाचार्यमुपससार । स ह्येनं तत्त्वतोऽवगत्य प्रेमार्द्रहृदयो योगविद्यारहस्यमन्वशिक्षयत् । योगाभ्यासदशायामेव ब्रह्मज्ञानसुधारसनिष्यन्दीनि गानान्यस्य वदनारविन्दान्निरर्गलं प्रसुस्रुवुरिति ज्ञायते । यमनियमध्यानाभ्यामनिगृहीतेनान्त·करणेन योगिभिरनुशिष्टे वर्त्मनीतरदुरवापेन कौशलेन संचरमाणो योगकलया हृदयाब्जकोशमुद्घाट्य सिद्धो भूत्वा परं ज्योति साक्षात्कृत्यावाङ्मनसगोचरमानन्दमनुभवन् क्षणमिव नीतान्सुबहूनपि हायनान्नाज्ञासीत् ॥

(क्रमश ।)

## ॥ धनिकः करण्डकारश्च ॥

---

अखण्डेऽस्मिन् भूतले कस्मिंश्चिदुद्देशे कश्चन धनिको न्यवसत् । स च स्वीयं निखिलमपि कालमाहारपाननिद्रोत्सवादिभिर्गमयामास । तमपि बहव: परिजनास्तदीयाज्ञापरिपालनबद्धकौतुका:

परया भक्त्या अनिशमन्ववर्तन्त । अनेनैव कारणेन भृशमवलिप्तः स धनिकः किमपि तत्त्वमजानन् स्वपरिचरणमात्रफलकं निखिलमपि जगन्निर्मितं धात्रेति मनसि निश्चयमकार्षीत् ।

अस्य गृहस्य नातिदूरे धर्मशील कश्चन दरिद्रोऽप्यवात्सीत् । स च खस्य धाम्नो निकटवर्तिनि कस्मिंश्चिच्छाद्वले शुष्कवेत्रदण्डानाहृत्य विचित्रान् करण्डविशेषान् विरचय्य तान् विक्रीय स्वस्य शरीरसंपोषणमकार्षीत् । प्रातरारभ्य सायंपर्यन्तमुद्यम्य यावत्स्वशरीरधारणार्थमिष्येत तावदेव केवल सम्पादयन्नप्यनितरजनसाधारणं सुखमनुभवन्, अनतिस्वादु भक्तं भुञ्जानोपि परा निर्वृतिं प्राप्नुवन्, सुखमध्युवास । स्वोद्यमाधिक्येन तस्य तत्तत्काले बुभुक्षा समजायत । मितमाहारमास्वदमानः वेत्रकल्पितशयने अधिसुष्वाप । स च नितरां धर्मचित्तः सत्यवादी न्याय्यात्पथो न कदापि प्रविचलति स्म । तस्मादेव कारणान्निकटवर्तिभिर्निखिलैरपि जनै समाद्रियत ।

धनिकस्तु वृथा स्वमखिलं कालमपवाह्य रात्रौ हंसतूलशयनमधिरोहन्नपि निद्रा नालभत । स्वादिष्ठमपि भोजनं न तस्य रुचिमुदपादयत् । अनुदिवसं न किंचिदपि कुर्वाणस्य तस्य जाड्यमुपर्युपर्यभ्यवर्धत । केवलमाहारैककार्यव्याप्तस्य तस्य बुभुक्षा न कदाचिदपि समजायत । अपि च तस्य सर्वभक्षकत्वात् रोगास्तमनिशमहमहमिकया पीडयामासुः । कस्याप्यनुपकुर्वतस्तस्य स्निग्धा अपि नाभूवन् । परिजना अपि पृष्ठतस्त निष्ठुरमुपालभन्त । तेन परां हिंसां प्रापितास्तन्निकटवर्तिनो निखिला अपि प्रकृतिवर्गास्तं परमद्विषन् ॥

अनेन हि कारणेन सुतरा दुःखितः स धनिकः सुखमनुभवतो

जनान् द्रष्टुमपि नासहत । शिबिकाधिरूढ. परिजनैरुह्यमान: वीथीषु सञ्चरन् स वित्तेश: वेत्रजालै: करण्डान् विरचयन्त मध्ये मध्ये सात्विकस्योद्रेकेनेवानन्दातिशयेन गानसुखमपि निष्पादयन्तं स्वकुटीरद्वारि सुखासीनं तन्निकटवर्तिनं दरिद्रमवलोकयामास । द्रष्टुमप्यसहमान: स धनिक: " कथमेषोऽल्पको नीचजन्मा जीवनधारणार्थं करण्डनिर्माणेन कतिपयान् दीनारान् सम्पादयन् सुखी विलोक्यते । पर तूत्तमजन्मा, वित्ताधीशो निखिलानामपि नियन्ता च, अलिपष्ठानाममीषां परार्धेनापि तुलयितुमक्षमोऽहं कदाचिदपि सुखलेश नानुभवामि ' इत्यचिन्तयत् । एवंविधा बुद्धिर्भूयो भूय: करण्डकारकस्य दर्शनेन धनिकस्य हृदि समजायत । तत एव स प्रभु: क्रोधाभिभूयमानहृदयो दु.खानभिज्ञं दरिद्रं शिक्षयितुमारभत ।

इत्थमाशय: स धनिक एकदा ' नीचगृहस्य समन्तात् प्रवर्धमानं शुष्कवेत्रजालमग्निसात्कुरुत ' इति स्वाज्ञातिलङ्घनभीरून् परिजनानाज्ञापयामास । ततस्तस्मिन् ग्रीष्मकाले प्रचण्ड उज्ज्वलति दिवाकरे, प्रोद्दीपित: कृष्णवर्त्मा न केवलं वेत्रमण्डलं भस्मसाच्चकार परं तु दरिद्रस्य गृहं सर्वमपि संव्याप्य दीनं तं निष्कुटीरमकरोत् । सोऽपि प्रणष्टसर्वस्वो गृहाद्बहिरभ्यधावत ॥

यमसौ सात्त्विको मनसाप्यपकर्तुं नैच्छत् तेनैव धनिकेन दौरात्म्यवशात् कृपणतामापन्नस्य दरिद्रस्य चित्तवृत्ति· कीदृशीति वक्तुं न समर्था· स्म: । परं त्वस्या दुष्कृते· प्रतिकर्तुमशक्नुवन् स कृपण: तद्देशीयन्यायाधिपतेरन्तिकमगमत् । सोऽति धर्मचित्तस्त क्षणमेव धनिकं स्वपुरत: सन्निधाप्य विदित्वा च तमवलेपाहितद

रिद्रहिंसं, कृपणं नीचजन्मानमुद्दिश्येत्थमवोचत् । 'यदेष वित्तमत्तो जनः स्वोत्कर्षबुद्ध्या निखिलानप्यवमन्यते तदस्मै तस्य सत्तानैरर्थक्यं बोधयितुमिच्छामि ; तत् त्वं मम मनोरथमनुसृत्य मदावलिप्तेन जनेनानेन मया निर्दिश्यमानं प्रदेशं गच्छ' इति ॥

दरिद्रोऽप्येवमुत्तरयामास — 'मदधीनं यत्किञ्चिदपि द्रव्यमस्य महापुरुषस्य दौरात्म्यात्संप्रणष्टम् ; तदधुनाऽतिकृपणतां नीतोऽस्मि । अतः परं कबलमप्यन्नं सपादयितु न शक्नोमि । तस्मादस्मि सन्नद्धो यं कञ्चिदपि देशान्तरं गन्तुम् । परं त्वपकारिणममु धनिकं नाहमिच्छामि प्रत्यपकर्तुम् । इतः परं बाप्ययमसाधुरुज्झित्वा स्वकुटिलतां दरिद्रेषु दयालुर्भवेदित्येव मे प्रार्थना' इति ।

तदनन्तरं न्यायाधिपतिस्तावुभौ कस्याश्चिन्नावः पृष्ठे संस्थाप्य सुदूरं नीत्वा मृगनिर्विशेषैरशुभाचारैर्मर्त्यैराक्रान्ते कस्मिंश्चित् द्वीपान्तर उत्सृजतेति परिजनान् प्रेषयामास ।

तथैव धनिककरण्डकारौ धनानभिज्ञै' कुटीरवसतिभि मत्स्याशनैः पशुतुल्यचेष्टितैः प्रकृतिवर्गैर्व्यापृतं द्वीपमगच्छताम् । तत्र प्रविष्टमात्रयोस्तयोस्तद्देशीया प्रजा सङ्घशस्तौ दिदृक्षव आगच्छन् । तदनु नानाविधक्रूरदर्शनैः विचित्रतमभाषाचेष्टितैः पामरैः परिवृतः स धनिको निर्गतिको हस्तौ निष्पिष्य बालवदतिकृपणमरोदीत् । दरिद्रस्त्वाशैशवमभ्यस्तदुःखत्वात् 'युष्माकमहं सपक्ष सर्वथा युष्मान् परिचारितुमेवाभिलषामि' इतीङ्गितैस्तेभ्यो व्यजिज्ञपत् ।

क्रमशः)

## ॥ विजयिनी ॥

'कामुकः कविरुन्मत्तः कल्पनामयमूतयः' इति पाश्चात्यकालिदासोपवर्णितां पद्धतिमनुसरन्नयं रत्नाकरोऽपि तरुणारुणरागरञ्जित वस्तुजातमालोक्य किमयं भगवान् प्रणयभास्करः प्रथमप्रवेशे निखिलं प्रेमराशिं प्रकटीचिकीर्षन् रक्त एवोदेति, आहोस्वित् प्रसन्नमानस एव प्रणयप्रवेश. सुभगंकर इति मामुपदर्शयितुमिवोद्यतो वामामानसावस्थानोऽनुरागसमूहः प्रभातसमयविशदस्वान्तेषु जीवलोकेषु प्रसरति, उताहमेव प्रेमपरीतान्तःकरणः कामलोभहत इव नर पीतमनुरागरञ्जितमिदं जगदालोकमानस्तिष्ठामीति परःसहस्रं कल्पनावीचीभिरितस्तत अलोऽड्यमान , विजयिनीदर्शन विनान्यत्र सुखमलभमान , उन्मत्त इवानिर्धारितदिग्विभागमटाव्यमानो भट्टराजेन व्यलोकि ।

स तु प्रेक्ष्य रत्नाकरस्य तादृशी समवस्थामनुपेक्ष्यमाणविकारोऽयमधुना संजातो न चास्यैकाकिनः कुत्राप्यवस्थानं युक्तमिति मानसे निर्धारयन् रिपुकुलप्रसूतत्वेन च विजयिन्याः सर्वथा दुष्प्राप्यत्वं च चिन्तयंस्तमनुससार । रत्नाकरश्चापरिगणितरविकरसंतापः शून्येन मनसा इतस्ततः परिभ्रमंस्तं दिवसं निनाय ॥

विजयिन्यपि कुत इयं भवत्या ईदृशी समापन्नावस्थेति सनिर्बन्धं पृच्छन्तीनां सखीनां प्रवेशमेव निरुध्य एकाकिन्येव प्रासादे रत्नाकरगतान्येव चिन्तयन्ती समतिष्ठत । परिचारिकामुखेनावगतवृत्तान्तौ विजयिन्याः पितरावपि किमात्मकोऽयमस्या आमय इति चिन्तापरवशौ द्रुतपदं कुमारीप्रासादमुपगम्य तादृश्या अवस्थायाः कारणं तां पप्रच्छतुः । व्रीडयायत्तीकृतस्वान्ता च सा मात्रा प्रेम्णा

पृष्टापि न किमपि प्रत्यभाषत। निर्बन्धेन पुनःपुनः परिपृष्टापि सा यदा किमपि नावोचत्तदा नाद्यावधि कन्यकेयमनुरूपेण वरेण संयोजिता तत्कदाचित्तन्निमित्तोऽयमस्या विकारप्रादुर्भावः स्यादिति पाणिग्रहण-विधावेवातः प्रयतितव्यमिति निर्धार्य गृहेभ्यस्तेभ्यो निर्जग्मतुः। विजयिनीत्वनेन विशङ्कटेन सङ्कटेनाकुलीक्रियमाणान्तरङ्गा गङ्गेव तटाकर्षणकलुषितान्तर्नीरा रत्नाकरमपहायान्यत्र सुखबिन्दुलाभनिराशा किमत्र क्रियतामिति विचारयन्त्येव तस्थौ । स्नानपानभोजनप्रसा-धनादिषु दिवसोचितकरणीयेष्वकृतमतिः खिन्नेव चिन्तनपरवशान्त-रिन्द्रियेव काञ्चनसालभाञ्जिकेव किमप्यविचेष्टमाना, सखीभिः परि-चारिकाभिश्च पृष्टेऽपीदृश्या अवस्थितेः कारणे प्रत्युत्तरमददानैव कथं कथमपि तं दिवसमत्यवाहयत् ॥

अथ तस्मिन्नेव दिने, नीरवास्तव्यकलुषितबहिर्भागैर्मेघैः शून्ये वियति, प्रहरचतुष्टयप्रवासकर्मसंजातखेदे समधिकपरिश्रमरक्ततनौ भगवति भास्वति दिवसकरेऽस्तगिरिकूटावलम्बिनि, अनवरतहिण्डनस-मार्जितविविधभक्ष्यभोज्येष्वपत्यप्रेम्णा पतत्रिसमूहेषु गृहगमनोत्कण्ठेषु द्रविणसमार्जनतत्परेषु गृहागतेषु जनेषु प्रमुदितप्रमदाप्रदत्तार्घ्यदान-प्रणयमधुकटाक्षक्षेपणादिना सत्कृतेषु, वियोग एवानुरागं द्रढयतीति जनोदितस्य मृषामृषात्वदर्शने कृतमतिरिवामृतकिरण उदयगिरिशेख-रतां विलम्बेनैव प्रयास्यमानः, न च नाथोऽद्याप्युदेतीति कलुषितान्तर-ङ्गायामिवान्धकारमिषेण तद्बहिः क्षिपन्त्यां यामिन्याम्, भवतु वियुक्तस-मागम इति तदुपकारचिकीर्षुरिव चिरेण हिमगभस्तिरुदयशैलमारुरो-ह । कुसुमेषुविद्धेन्द्रियो रत्नाकरस्तु किमयं खरांशुर्मन्दं मन्दमस्ता-चलमुपगच्छतीति चिन्तयन् अभीष्टसाधनविघ्नीभूतोऽयं मम शा-

पेनैव पश्चिमशैलशिखरशेखरायमाणो जात इति प्रमुदितः, अयमेव कालश्चन्द्रचन्द्रिकासमागमस्येति सूचयितुमिवोद्यन्तमवलोक्य हरिणलक्ष्माणम्, तदीयैरेव किरणैराश्वासिततनुः शुभशंसिना मनसोल्लासरूपेण निवेदितविजयिनीदर्शनो वेषभूषादिषु शिथिलादर एव कार्तवीर्यप्रासादमुदचलत् ॥

प्रविश्य चोपवनभूमिं पूर्वपरिचितस्य वातायनस्याधः स्थितः, अतिसमीपत्त्वाद्विमनस्कतया चोच्चैः प्रभाषमाणाया विजयिन्या आलापाञ्श्रोतुमपारयत् । विजयिन्यवदत्— 'हा रत्नाकर, रमणीयाकृते, प्रधावते त्वत्कृते मेऽभिलाषः, परं महाविक्रान्तपक्षीयत्वात्कथं त्वया सह मे समागमो भविष्यति । सरसरमणीयरूपोऽपि त्वं भीषणाकृतीनां मकराणां सांनिध्येन पयोनिधिरिवारातिकुलसंभूतत्वादनभिगम्यो दुरधिगम्यो वा संजातः । त्यज युष्मदीयं कुलम्, यदि सत्यमेवाहं त्वां यादृशं सम्भावयामि तादृश एव मयि परमार्थतः स्याः । अथवा अहमेव त्वत्कृत आत्मीयं परित्यजामि कुलम् । किमिव ह्यकरणीयं मनसिजेषुगोचरे पतितानाम्' इत्येवंविधं चान्यच्च विस्रब्धं वदन्त्यास्तस्या अधःस्थो रत्नाकरो दृष्टिपथमयासीत् । तदीयवदनविधुसञ्जातामृतरसास्वादनलुब्धमती रत्नाकरो वदत्वियं परस्तादिति मनसि कुर्वाणो यावदूर्ध्वं दृष्टिं क्षिपति तावाद्विजयिन्या चपलायितम् । अधुना क्षणमपि सा जाह्नवीव रत्नाकरवियोगमसहमाना प्रासादादवदतीर्योद्यानं प्रविश्यातर्कितसुखसागरे मग्नमिव रत्नाकरमकरोत् । तत्र किं किमनयोर्भाषितं किं चोत्तरत्राचरणीयमित्येतद्विषयिका बहुविधाः कथाः कथयित्वा गान्धर्वविधानेन सुगुप्तं पाणिग्रहणविधिविषये किमारचितं

## शाकुन्तलसंविधानरामणीयकम् ॥

---

अन्यदप्येवमस्य प्रबन्धस्य प्रत्यङ्गसौभगं परामृश्यमानमुत्तरोत्तरं गम्भीरं च मधुरं सहृदयसर्वस्वं नास्मादृशां वचनविषये भाति ।

इह खलु नैसर्गिकप्रतिभाऽनुगृहीता अपि केचिदशास्त्रसंस्कृततया गुणदोषौ विवेक्तुमक्षमाः स्वैरं कामपि पूर्वपुरुषपदवीमादाय वाचं रचयन्ति । तत्रावशोपनिपातिनो गुणविपर्ययाः केन निवार्यन्ते ? दोषलवेनापि दूषितं काव्यं न कथंचिदपि हृदयग्राहि भवति काव्यविदाम्; न हि निःश्वासधूसरे दर्पणतले प्रतिबिम्बं संक्रामति । अपरे च भूयसा शास्त्राध्वनि प्रतिपन्नप्रचारास्तेनैव च पुनःपुनश्चेतसि वलमानेन वासनातिशयेन विस्मारिता मसृणरमणीयां कविपद्धतिं रज्जुपाशावपाशितामिव वामीमनेकनियमशृङ्खलानिरोधपारिप्लवगतिं गिरं विसृजन्तः सहृदयानामुद्वेगाय भवन्ति । येषामर्थमर्थं प्रतिपद्य शुष्केन्धनमिव दहनार्चिषो न प्रज्वलन्ति मतयः । किं तेषां कवित्वविडम्बनायासेन ? कुल्याभिरिव महानदीस्रोतोलेशान् महाकविमनीषाविषयान् कणशः परिगृह्य कतिपयप्रदेशप्रसृताभिरुक्तिभिर्न परिपूर्यते लोकः । विरलास्तु पूर्वपुण्यप्रचयपरिणतोन्नतजन्मलाभाः शास्त्रकाव्यलोकव्युत्पत्तिभिर्विषये विषये यथास्वमुपकृत्य स्वमात्मानं कृतार्थयितुकामाभिरितरेतरानुग्रहप्रदर्शितसखीसौहार्दाभि प्रणयिनीभिरिवानुगता निरर्गलोन्मेषपल्लविताकुण्ठप्रसरप्रज्ञालताप्ररोहा सहृदयस्पृहणीया कवयः । येषां वाग्विलासा नातियन्त्रिता न चात्यर्थविशृङ्खलीकृता निम्नोन्नतस्खलितवर्जिताश्चानुद्भ्रान्तानिभृतगतयो विनीताः स-

दश्वा इवाप्रचोदिता एव स्वैरमनुत्पथ प्रसरन्ति । ते ह्यनुल्लङ्घितरोधोबन्धा निरङ्कुशस्रोतोगतयः प्रसन्नमधुरा. शरन्नदीपय पूरा इव कस्य वा न प्रीतये भवन्ति । एवंगुणस्तु कविबृन्दारकः कालिदास इत्यविप्रतिपन्नं काव्यज्ञसमितेः । न खल्वेष शब्दकाव्याद्यनुशासनेषु प्रमादस्खलितपरिजिहीर्षया सातङ्कप्रणिहितदृष्टिः , येन गृहीतकवितापद्धतिर्गतिभङ्गपरिखेदमनुभवेत् । अनन्विष्टानुयायिभिर्हि नानारूपैः शास्त्रनियमैर्महादेवीव परिजनैराहितविशेषा कामपि श्रियमश्नुते तस्य सरस्वती । लक्ष्यवितुषीकरणं हि लक्षणानुशासनकृत्यम् । अखिलमपि च भुवनमनुदृश्यमानं विवेकदृशा गुणागुणव्यतिकीर्णमेव परिस्फुरति । न च किंचिदेकान्तविगुणमत्यन्तनिरामयं वा वस्तु समस्ति समस्ते जगति । स च नामरूपाभ्यां द्वेधा व्याकृतः संसारः । तत्र नामाधिकारं शब्दानुशासनम् । रूपाधिकाराणि च तत्तदर्थभेदभिदुराणि नैकधा प्रचरन्ति शास्त्राणि । शब्दानां तावद्देशकालपुरुषवशादन्यथा चान्यथा च विपरिणमतामन्ततस्तत्त्वानवधारणदुःस्थाः सर्व एव लौकिकपरीक्षकव्यवहारा विप्लुता मा स्म भवन्निति दृष्टपरावरैः पुन. पुन प्रत्यवमर्शपरिपूतसंस्कारैश्चेतोभित्तिविन्यस्त चित्रमिव जगदखिलमन्तर्दृशा साक्षात्कुर्वाणैर्मनीषिभिराकरादिव लोकादादायादाय भूयोभूयः परिमृज्य शास्त्रपेटकेष्वसंकरेण निहितानां मुक्तामणीनामिव सुव्यक्तं व्यक्तयः परिस्फुरन्ति । एवमर्थेष्वपि रागद्वेषकलुषीकृतात्मनां विपर्यासितहानोपादानविषयावमर्शानां पथि प्रमादपथेषु परिभ्रमतामपथमिति च पन्थानं परिवर्जयतामनुग्रहाय जनिमता हिताहितविवचनालब्धवर्णाः श्रुतिस्मृतीतिहासपुराणरूपा बहुधोपदेशाः प्रथन्ते । सर्व एव चैष विषयः काव्यस्य,

शब्दार्थोभयशरीरं हि काव्यम् । लोकशास्त्रप्रमितैरेव प्रमेयजातैः प्रज्ञारसज्ञाऽऽस्वादसंवेदनीयं सहृदयहृदयेषु ब्रह्मानन्दसधर्माणं कमपि मधुरिमाणमाधायैव हि चरितार्था भवति कविप्रवृत्तिः । तत्र पानक इव तृणकणव्यतिषङ्गो येषामन्तरा निपातो रसविदामास्वादमन्तरयति, तानेतान् पृथक्कृत्य दोषान्, कर्पूरैलादिसुरभिद्रव्यैरिव यैर्विमिश्रितैरतिरिच्यते रसपरिपोषस्तांश्च विशेषान् गुणसंज्ञितानेकीकृत्य च काव्यानि प्रवर्तयितुं काव्यानुशासनमारब्धं काव्यरसनिष्णातैर्लाक्षणिकैः । आनन्त्यादर्थानामशेषविषयक्रोडीकारप्रवृत्तानि बहुधा लक्षणान्यालक्ष्यन्ते । न चैतावता प्रयोगेषु कृत्स्नानुरोधः कंचिदपि गुणमावहति । ऊष, तेर, पेच, चक्र इत्यादयः शब्दशिक्षास्वनुशिक्षणीया अपि न परिग्राह्याः प्रयोगेष्विति हि महाभाष्याभिप्रायः । प्लुतवल्गितादिशिक्षाविशेषपरीक्षासूपपादनीयैस्तिरश्चीनविष्कम्भदण्डप्रक्षेपादिभिर्घण्टापथनिरोधवदतिमात्रनियमनियन्त्रणानि कवितागतिविलासप्रत्यूहभूतान्युद्वेगायैव ललितमनसामुपनिपतन्ति । तामेतामभिनवपरिमार्जनामसृणितामिव स्खलितरहितामविषयामादाय पदवी प्रदर्शितमधुरसुकुमाराङ्गहारा कुलाङ्गनेव ललितगामिनी कालिदाससूक्तिः कस्य वा न करोति रसास्वादतरलं चेतः सचेतसः । तथाहि— नाट्यलक्षणप्रबन्धेषु भूयानङ्गकलापः पूर्वरङ्गस्य निरूपितः । सर्वाङ्गोपसंहारे च क्रियमाणे महान् कालक्षेपो भवेत्, यः कथावस्तुदर्शनत्वरितानामुद्वेजनीयः सामाजिकानाम् । तदिह यावता नाट्यवस्तु सरसावतीर्णं भवति, तावता समारम्भेण प्रेक्षकप्रतीक्षानतिपातिना वस्तुप्रस्तावना रससर्वस्वं रूपकाणाम्, येन लोकज्ञता कवेरावेद्यते । 'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाऽप्यव-

इयं कर्तव्या नान्दी विघ्नोपशान्तये' इति नान्दीरूपस्याङ्गस्यावश्यंभावविधानेनैव शेषाङ्गेषु यथोचितं परिग्रहः परिवर्जनं वा कविस्वैरनिबन्धनमिति हि स्फुटीभवति । प्रेक्षकप्रीतिर्हि सारः प्रेक्षणिकस्य । तत्प्रतीपप्रवृत्तं लक्षणमेव चालक्षणमापतेत् । एकरसमेव दीर्घीकृतं सर्वं वस्तु विरसमन्ततः पर्यवस्यति । सर्मात्मना च रसपरिपोषणं प्रथमकर्तव्यं कवेः । सर्वमेतदभिविमृशता कालिदासेन शाकुन्तलविक्रमोर्वशीयमालविकाग्निमित्रेषु त्रिष्वपि नाटकेष्वनपेक्षितविस्तरमनादृत्य संक्षेपत प्रस्तावना विरचिता । भवभूतिरपि कालिदासवदेवोत्तरे रामचरिते वीरचरिते मालतीमाधवे च यत्नतः प्रस्तावनां संचिक्षेप । बहवस्तु मुधाविक्षिप्तया प्रस्तावनया प्रेक्षकहृदयानि विरसीकुर्वन्ति । अपि चेदमन्यदभ्यूहितुं सुकरम् । यत् किल कालिदासीया नाट्यप्रबन्धाः कुशीलवैरादाय प्रयोगविषयीकृता स्युरिति । न ह्यत्र दुरूहशब्दार्थघटनाः परिदृश्यन्ते, न दीर्घसमासता, न च कस्यचिदप्यर्थस्य बहुधावर्णनेन ग्रन्थविस्तरः न वा पद्यबाहुल्यं नाप्यन्यदीदृशम् , येन पश्यतां दर्शनादपि पाठ्यस्य प्रयत्नग्राह्यार्थस्य श्रवणे सविशेषावधानदानस्यापरिहार्यतयाऽनतिप्रयोजनपरिश्रमो भवेत् । अर्वाचीनानां तु कृतिष्वेष दोषप्रपञ्चस्तेषां शिष्याधिकारमात्रतामावेदयन् प्रयोगाविषयतामभ्यूहयति । न केवलं दृश्यप्रबन्धेष्वेवेदं वैशसं प्रवृत्तम् । श्राव्याण्यपि हि काव्यान्यपूर्वशब्दार्थघटनाभिः प्रज्ञाप्रकर्षमात्मनः प्रदर्शयितुमुद्यतैः शास्त्रीकृतानि कृतविद्यैरपर्याप्तव्याख्याविवरणानि कारागाराणीव वचोदेव्या स्वर-

(क्रमशः ।)

गोधूमकर्पमाषसक्तुविकृतानि सशर्कराण्यपूपमोदकलड्डुकप्रभृतीनि भक्ष्याणि । उपभुक्तानि मधुरतराण्यम्बरीषाणि । पीता च हृदयाप्यायिनी सरसा रसाला । अभ्यवहृताश्च प्रचुरमधुरिमभरिता कूर्चिकाः । प्रकाममापीतमतिमधुरसुगन्धि पायसम् । उपभुक्तान्यविज्ञातरूपाण्यारण्यकैरस्माभिरतिमधुराण्यन्यानि च शाकफलादीनि । किमनेन प्रपञ्चनेन? न शक्नुमो वयमेकैकशोऽपि वर्णयितु गुणाश्चतुर्विधस्य भोज्यजातस्य । सर्वमपि तदुपनीतममृतोपमता भक्तिप्रहर्षोपहृतं महाराजेन—" इति वदतां वचनमाक्षिप्य तपस्विनां भूपतिरवादीत्— "भगवन्तो हि महिम्ना चिरसंभृतानां तपसामीशते दुष्टानां निग्रहायानुग्रहाय च सताम् । प्रभवन्ति च जगदेवान्यथा कर्तुमन्यद्वा विनिर्मातुम् । कोऽयमसौ संविभागविधिः? यदस्मिन्नात्मसुलभे कर्मणि नियुज्यते मादृशो जनः । सर्वथा प्रत्येमि निश्रेयसोपधानैकान्तमनुग्रहं मयि भगवताम् । निमित्तमत्र यदाशासते मयैवोपप्लुतं धर्ममद्य लोकस्य, सर्वथा ज्ञास्यथाचिरेणैव समवस्थापितं भुवि धर्मम् । संभावनैव हि भगवतामुद्भावयति शक्तिम् । वर्धयति धैर्योत्साहौ अतदर्हेऽपि जने । किमुतैवं प्रकटीकृतादरप्रकर्षो नियोगः । अन्यदिदं यद्यपि दवीयांसोऽपि प्रभवन्ति धारयितुं वाङ्मनःप्राणैरग्निहोत्राणि भगवन्तः, तथापि प्रत्यवायगणापातदुर्भरतया गार्हस्थ्यस्यानुजानामि पुण्याश्रमगमनाय भगवतः—" इत्यन्यानि च तत्कालोचितानि प्रतिपदव्यक्तभक्तीनि निगद्य वचनानि प्रस्थापयन् महर्षीन् आद्वारमनुवव्राज ॥

नातिचिरगतेषु तेषु राजाप्यग्निशरणान्निर्गत्य कतिपयेनाभ्यन्तरेण परिजनेनोपदिश्यमानमार्गः गुरुणा सह धर्मोपरोधविघातोप-

यिकीस्तास्ताः कथा कुर्वन् अतिमृदुलश्लक्ष्णवर्णकम्बलावच्छादिततलम्, असंबाधवेत्रासनसमुदायं, यथास्थाननिवेशितकाञ्चनमयपर्यङ्कप्रकरं, विमलतरचीनांशुककवचितविविधोपधानततिमनोहरं, महार्हतममुकुरचित्रपटनिकरपरिकर्मितमभ्यन्तरस्थानमण्डपं विवेश। प्रविश्य च मणिसुवर्णविराजितं राजार्हं पर्यङ्कमधिष्ठाय तत्र च मृदुतरोपधानविनिहिततनुः विश्रमापदेशेन निमीलितलोचनो निष्पन्दसकलावयवो दिग्विजयप्रस्थानौपयिकं तत्तदाकलयन् संजातरणरणकेन विविधविषयगणविमर्शावेशविहस्तेन केवलं तु धैर्यावष्टम्भसंभृतगाम्भीर्येण हृदयेन मुहूर्तमिव तूष्णीं स्थित्वा ससंभ्रममुत्थाय शारद्वतानुयुक्तो नातिदूर एव दृढघटितस्वस्तिकबन्धनं विनयनमितवदनं प्रतिहाराध्यक्षमाहूय, 'भद्र! मौहूर्तिकानद्यैव द्रष्टुमिच्छामि' इत्यवोचत्। सोऽपि तत्क्षणमेव निर्गत्य राजगृहाङ्गणात् निवेद्य च समयोपपन्नं नियोग नरपतेर्दैवविदः प्रवेशयामास। तेऽपि प्रविश्य राजास्थानं राजगौरवान्मन्दीभूतगतयः शनैः शनैरुपासर्पन्॥

नरपतिरप्युद्वीक्ष्य सविधमुपागतानुत्थाय पर्यङ्कात् तेभ्यः प्रणाममकरोत्। तेप्युदीर्य युगपदेव 'स्वस्ति नरपतये', अधिष्ठाय तन्निर्दिष्टान्यासनानि, नृपाननासक्तदृष्टयो नियोगप्रतीक्षाश्च जोषमातिष्ठन्त। भूपतिर्भावावेदनिपुणया दृशा विलोक्य मौहूर्तिकान् सप्रश्रयमवादीत् —— भवन्तो हि निरुपमहोरातन्त्रसततपरिचयावगतसकलविषयाः पश्यन्ति पुरःस्थितमिव कालं कारणं फलं च। धारयन्त्येव हृदयसंवादीन्येवात्ममनांसि। यद्यपि नास्त्यवकाशस्तादृशेषु युष्मास्वस्मदनुयोगानाम्, तथापि अभिमतार्थसाधनसंरम्भसंभूतो विशेषयत्युत्साहं नियोज्येषु स्वामिनो नियोगः। तद्विचार्य साधु निश्चिनुत शुभंयुतमं

मुहूर्तं दिग्विजयप्रस्थानाय मम—' इति। मौहूर्तिकास्तु 'यदाज्ञापयति देवः' इत्युक्त्वा सम्यक् प्रणिहितधियस्तन्त्रेषु विमृश्य गुणान् दोषांश्चावधार्यासन्नमेव काल प्रत्यवदन् 'देव! आगामिन्यां सप्तम्यामुत्तरास्वाषाढासु वासरे सौम्यस्य मकरराशौ वारुणीमञ्चति दिशं भृगुतनये अलंकुर्वति मध्यं दिवो गभस्तिमालिनि मुहूर्ते शुभोदर्के देवस्य प्रस्थानमङ्गलं निर्धारयामः, यस्मिंश्च द्वितीयं त्रिकं महीविजयकारि अभयदमृक्षम्, प्राज्यरत्नपृथिवीदायीनि सावशेषाण्यङ्कानि, निरवशिष्टपञ्चका राशयः, दिनादीनामनासादितावकाशश्च ललाटदोषः, विधुंतुदवदनर्क्षवर्ती च मार्तण्डः इति सूचयन्ति शुभंयव. सर्वेपीमे गुणा अप्रतिहतं निश्रेयसं दिग्विजयोद्यतस्य प्रस्थाने महाराजस्य, इत्युदीर्य राजानुमतास्ते राजभवनाङ्गणान्निश्चक्रमुः ॥

ततः प्रस्थितेषु दैवज्ञेषु शारद्वतो राजानमुवाच— 'कुमार! इतः प्रस्थानदिवसस्य दिनान्यष्टावन्तरा परिलम्बन्ते। एतावतैव समयेन संभाव्याः सर्वेऽपि प्रास्थानिकाः संभारा.। असंपन्नसाधनानां भवन्ति श्रमायैव कार्यसंरम्भाः, नार्थाय। विशेषतो हि नरपतीनां दिग्विजयप्रवृत्तानाम्; यैः समाक्रमितव्या रिपुदासप्रायजनाकीर्णा दवीयांसो देशाः। अपि चाप्रतिद्वन्द्वबलविक्रमोऽपि समग्रसाधनसंपत्तिरेव रक्षितुमीष्टे नरपतिः। तदविलम्बितमेव समायोजयामः सर्वाण्यपि साधनानि। कुमारेण हि पूर्वमेव समादिष्टाः सेनापतयः सज्जीकुर्वन्ति बलानि' इत्यभिधाय स्वस्त्युदीर्य राज्ञे निर्गत्य राजभवनात् तत्कालोचितानि प्रतिदिवसोपचीयमानसंभ्रमाणि दिग्विजयप्रस्थानौपयिकानि राजकार्याणि निर्वर्तयन्नतिष्ठत् ॥

एवं क्रमेणातीतेषु दिनेषु कदाचित् संमन्त्र्य रहसि सचिवैः

योगक्षेमाय कोशस्य, रञ्जनाय प्रजानाम्, गुप्त्यै राजधान्या', रक्षणायान्तःपुरस्य, प्रवर्तनाय धर्माणाम्, पालनाय दुर्गाणाम्, निर्वहणाय राजकार्याणां नगर एव स्थापयामास गुरुम् । ततः प्रत्यासन्ने प्रस्थानदिवसे, सज्जीभवत्सु योधेषु, आरोप्यमाणचित्रकम्बलकुथेषु पृथुदन्तमुसलाग्राववध्यमानकुन्तेषु आसज्यमानाङ्कुशमुसलतोमरपरिघेषु आरुह्यमाणाधोरणेषु मातङ्गेषु, समायोज्यमानभाण्डेषु आसज्यमानचामरेषु आरोप्यमाणपर्याणेषु अपसार्यमाणावकुण्ठपटेषु घोटकेषु, उच्छ्रियमाणध्वजेष्वाबध्यमानेषु युगेषु, समवस्थाप्यमानकवचखड्गनिषङ्गचापगदाशक्तिनिवहेषु युज्यमानवाजिषु आरुह्यमाणसूतेषु समारोप्यमाणदूष्योपकरणभारेषु समवसज्यमानकोशभाण्डेषु दाशेरकेषु, अपि च कैश्चिच्छरभारनिचितैः, कैश्चन चापसंचयसंकुलैः कैश्चित् खड्गचर्मनिवहनिरन्तरैः प्रत्येकशो विविधेतरसांग्रामिकोपकरणगणपरिपूर्णैर्योज्यमानवृषभैः, निर्गच्छद्भिश्चारैः, निःसरद्भिर्भृत्यैः, प्रस्थितैरन्यैरप्यानुयात्रिकैः संभ्रान्तमिवाभवत् समस्तमपि तद्धास्तिनं पुरम् ॥

ततो नातिचिरादिव प्रत्यासन्ने गुणवति प्रयाणमुहूर्ते, संनद्धे सर्वस्मिन्नपि नरपतिनिर्गमनोन्मुखे चानुयात्रिकलोके, राजाप्येकाकी पादाभ्यामेव शारद्वतभवनमयासीत् । तत्र प्रणम्य गुरुं तेन शिष्यप्रेम्णा राजगौरवेणोपलालितस्तान्निर्दिष्ट एवासने उपविवेश । ततो गुरुगौरवान्नियन्त्रित इव तूष्णीभूते राजनि शारद्वतोऽपि हर्षावेश विस्तारिताभ्यां जराधवलपक्ष्मराजिविराजिताभ्यामानन्दाश्रुजललवलुलिताभ्यां प्रसादमिव हृदयगतमभिवर्षद्भ्यामनुलिम्पन्निवाङ्गरागेणाभिवर्षन्निव कुसुमैः सुचिरमवलोक्य राजानं सानुनयमुवाच— 'कु-

मार! साधु परितोषितोऽस्मि एवमेकाकिना मद्भवनमुपागच्छता त्वया । युक्तरूपा चेयं जनिमतोऽन्वये लोकोत्तरे पाण्डवानां भूयः शिक्षितस्य ते संनतिः; ययैव बिभर्षि बालोऽपि दुर्भरमन्यैः कुहनाकिशोरतनुरिव भगवान् गोवर्धनं धराभारमिमम् । त्वया खलु भद्राभिनिवेशेन विदिता एवोच्चावचा धर्माश्चातुर्वण्यस्य । जाने न हि किंचिदस्ति वक्तव्यं मया क्षेमौपयिकं ते । तथापि ब्रवीमि । भवतु निमित्तमत्र प्रेम चिरनिरूढ वत्सलता वा । न त्वसंतोषः समग्रेष्वपि भवद्गुणेषु । अधिकार औचिती समयोऽन्यद्वा नाज्ञातपूर्वमिदं मया, यदिदानीं दस्युप्राया राजानः पीडयन्तः स्वा एव प्रजाः अनुरज्यन्ति परकलत्रेषु । उद्वेजयन्ति लोकम् । न सहन्ते विषयेषु धनिकान् । प्रजा अपि तेषां तच्छीलवृत्तयो बाधन्तेऽबलान् इति । तथापि प्रतीक्षमाण एव समयमतिष्ठम् । न फलन्त्येवाकालप्रयुक्ताः प्राज्ञैः शक्तिमद्भिरपि नीतय । तथा हि— बाल एव त्वय्यासज्य महतीं धुरं वसुन्धरायाः, मां च नियोज्य साचिव्याय तत्यजुरिमं लोकं तव पितामहा । विलयमुपागताश्च संबन्धिनो बान्धवाश्च राजर्षयः । अहं च व्यपगतबहुवर्षश्चरमतमे वयसि वर्तमानो न शक्नोमि यथापूर्वं विचेष्टितुम् । किं च शान्तनवगौरवात् प्रीत्या पृथानन्दनेषु विशेषतः फल्गुने, अनुक्रोशाच्च त्वयि प्रणष्टबान्धवे शोच्यतया च कुरुकुलविलयस्य चिन्तनीयतया च राज्यगुप्तेः सुव्यवस्थाप्यतया चाङ्गानामुद्वहनीयतया च प्रजायोगक्षेमाणां सर्वतोऽपि रक्षणीयतया चानाविष्कृतशक्तित्रितयस्य तव तथाभावितया च दैवस्य नायमर्थोऽस्माभिर्मन्त्रितः पूर्वम् । इदानीं च धीरोऽपि प्रकृत्यैवारूढप्रतापोऽपि च प्रेरितो मुनिभिः

प्रथमवया अपि प्रवृत्तोऽसि लोके स्थापयितुमेवं धर्मम् । अनुरूपमिदमभिमन्युजन्मनस्तव । त्वं च प्रस्थास्यसे परिवृतो महत्या सेनया दिग्विजयाय । अथ च परिक्रामंस्तांस्तान् देशान् परिहराध्वसूपरोधं तापसाश्रमाणाम् । शमय प्रजानामातङ्कम् । गोपयात्मानं सर्वतोऽपि । शिक्षय दुर्वृत्तान् । न बाधस्व देशेषु प्रजाः । न वशंवदः क्रोधस्यातितरामुद्वेजय लोकम् । क्रोधो हि नाम पुरुषाणामखिलदुरिताचरणसाहसदायी वाच्यावाच्यविवेकनिरसनपटुः कार्याकार्यविचारपरिहरणनिपुणः अतिनृशंसो महानात्मानुषक्तो रिपुः । स एव कामलोभाभ्यामुत्तेजितशक्तिर्जनयति महदनर्थजातम् । किं च तेनैवाभिभूतो मैवोपानय विनाशं संयुगापातिनोऽपि राजन्यान् । केवलं तु धर्मकोशाभिगुप्त्यै अपाकृतवीर्यावलेपान् प्रवर्तय धर्मेषु । प्रायेण तीव्रकुरुकुलकलहदवानलनिरवशेषविप्लोषिताखिलराजन्यवन्या तत्र तत्र विरलप्रसरैर्नृपाङ्कुरैरदृश्यरूपा नाद्यापि कल्पते तव भोगाय भूतधारिणी । प्रस्थिते हीतस्त्वयि दिग्विजयाय तथा निर्वहेयं सर्वाण्यपि राजकार्याणि, यथा च विरहाद्राज्ञो नावसीदेद्राष्ट्रम् । सर्वथा पश्येयमचिरेणैव प्रत्यागतं दिग्विजयात्समृद्धार्थं कुशलिनमरोगं च त्वाम् । पालयन्तु दिगीशाः । रक्षन्त्वान्तरिक्षाणि भूतानि । पान्तु भौमानि । ददतु ते मङ्गलानि कुलदेवताः । दिशन्तु विजयं देवाः । प्रतिभान्तु दिव्यास्त्राणि । वर्धयतु ते तेजस्त्रयीतनुः । उल्लासयतु कान्तिमोषधीश्वरस्तव गोत्रपतिः । विस्तृणोतु प्रताप सप्तार्चिः; यं तर्पयसि विविधैर्यज्ञैः । अभिरक्षतु त्वां धर्मः; यं पालयितुमेवं व्यवसितोऽस्यूर्जितेन धैर्येण । किं बहुना? विदधातु योगक्षेमौ तव भगवान् वासुदेवो येनैव परिपालितोऽसि । साधय । भवन्तु पन्थान-

स्ते शिवा'—' इत्युदीर्याशिषं परिष्वज्य चोन्मस्तकप्रेमभरकम्पिताभ्यां बाहुभ्यां मूर्ध्न्युपाघ्राय शनैः राजानं विसर्जयामास ॥

ततः परीक्षिदपि तादृशैरनवधिकनिश्रेयसाशासनमहितैरनुपदोत्तेजितविक्रमशक्तिभिः प्रकाशितधर्मैरनुकलकलितप्रसादमधुरैः विद्योतितप्रणयरसैः गद्गदिकोपरुद्धप्रसरैः अमलैरुपदेशवचनैराचार्यस्याहितधैर्योत्साहः तमेवार्थमनुध्यायन् हृदयेन निर्गत्य गुरुगृहादन्तःपुरं विवेश । तत्र च नृपागमसंभ्रमोत्थितेन युगपन्मुकुलीकृतकरयुगलेनान्तर्वेशिकजनेनाविद्यमानसरणिः शुद्धान्तमुपगम्य तत्र च मणिपर्यङ्कमध्यासीनां वामकरतलनिहितेन साचीकृतेन वदनेन उदयरागरेखाविलसितेन्दुमण्डलामिव पौर्णमासीनिशां चिन्तावेशविकूणितत्रिभागेण लोचनयुगलेन मुकुलायमानकमलामिव कमलिनीं दूरत एवावस्थितेन भयावनतेन परिजनेनोपास्यमाना तत्कालोचिताभिः सराजधर्मोपदेशाभिः पूर्वराजर्षिचरितानुबद्धाभिः कथाभिः सखीजनेनाश्वास्यमानामिरावतीं ददर्श ॥

ततः समागतो राजेति रहसि सखीभिर्बोधिता अन्तिकागतमवलोक्य राजानं किंचिदिव लज्जमाना आसनादुत्तस्थौ । राजाऽपि ससंभ्रममुपसृत्य गृहीत्वा पाणिपल्लवम् 'अलमलं प्रत्युत्थानश्रमेण । सुन्दरि! नार्हत्येतादृशं साहसं मृद्वी ते तनुलता । तदास्यतामशङ्कितम्' इति वदन्नेव तामुपवेश्यासने स्वयमपि निषसाद ॥

ततो निजकरतलेनास्या उपस्पृश्य दक्षिणमंसदेशमुन्नमय्य लज्जावनतं वदनं तद्विरहासहिष्णुहृदयः शुष्यता मुखेन तत्सान्त्वनायैवारोपितस्मितः सानुनयमुवाच— 'सुतनु! विदिताः खलु राजधर्मास्त्वया । श्रुतानि राज्ञां चरितानि । निश्चिताः कार्यगतयः ।

क्षत्रियाण्यभिज्ञासि क्षात्रवृत्तीनाम् । तत् किमित्यप्रसन्नं प्राभातिकविधुमण्डलविडम्बि वदनमुद्वहसि ? अरालपक्ष्मान्तरालनिबद्धबाष्पजलकणिकाजालकमवश्यायबिन्दुसंदोहमन्दप्रभमिव कमलवनं तव लोचनयुगलम् । परिशोषयत्याहितसन्ताना श्वसितधोरणी सरसं तवाधरबिम्बम् । नाभिनन्दयसि जीवितनिर्विशेषा अपि प्रियसखी. । केवलं तु चिन्ताज्वरविलीनेनेव मनसा किमप्यन्तराकलयन्ती निष्पन्दावयवा तूष्णीं तिष्ठसि । अमुना चादृष्टपूर्वेणाश्रुतेनाचिन्तितेनानुचितेन विकारेण तव बलवत्पीडितहृदयो न पारयेयमेव पराक्रमविधिं निर्वोढुम् । त्वद्विरहकातरस्त्वयैव खलु समाश्वास्योऽस्मि, प्रस्थाप्यो दिग्विजयाय, प्रेरणीयश्च धर्माभिगुप्त्यै । यदि तु त्वमेवैवं दुःखिता भूयोऽपि दुःखापयसि माम्, कोन्यः समाश्वासयेदावाम् ?। त्वदायत्तं हि मे राज्यं जीवितं च । तदपास्य वैक्लब्यमवलम्ब्य धैर्यमनुजानीहि माम्' इति सचमत्कारमभिहिता राज्ञा निरुध्योद्गतं बाष्पवेगमावेगस्खलिताक्षरेण जरत्कलहंसनादानुकारिणा वचनेन शनैः प्रत्युवाच— 'आर्यपुत्र! कथं नाम मादृशी वीरजाता वीरपत्नी च न क्षमेत श्रेयस्करणं भवतः, क्षेमंकरणं धर्माणाम्, अभयंकरणं मुनीनां, प्रस्थानमिदम् । किं त्वबलाजनसुलभा चपलता मामाकुलीचकार; यया चास्म्यभिलक्षितविकारा संवृत्ता प्रियेण । अलमनया मुग्धजनबहुमतया कथया । सर्वथाल्पीयसैव कालेन पश्यामि विजयिनं प्रत्यागतं त्वाम् । प्रसीदन्तु नौ कुलदेवताः' इत्यन्यानि च तत्कालानुरूपाणि प्रेमरसनिष्यन्दीनि कलमधुराण्युदीरयन्ती वचनानि पुरःप्रयान्तं कान्तमाशुद्धान्तद्वारमन्वगच्छत् । ततश्च महीपाल प्रियानुरक्तेन मनसा प्रेरित इव पृष्ठतः संदानितप्रसृतैः

गोरणं संकल्पः। संकल्पानन्तर सत्रमकुर्वतो विश्वजित् प्रसिद्धात् 'विश्वजिता यजेत' इति विहितात् कर्मान्तरम्। फलस्योदाहारणम् — 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति 'यदाग्नेय' इति विहितात् कर्मान्तरम्। सस्कार्यस्योदाहरणम्—'औदुम्बरी प्रोक्षति' इति व्रीहिप्रोक्षणात् कर्मान्तरम्॥

## इति द्वितीयस्याध्यायस्य तृतीयः पादः॥

---

## अथ चतुर्थः पादः॥

चतुर्थे पादे विनियोगभेदनिरूपणम्। तथा हि— 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र किं काम्य एव स्वर्गाद्यर्थाग्निहोत्रे जीवनपर्याप्तकालविधिः, किं वा क्लृप्तफलात् फलान्तरार्थे जीवनरूपनिमित्तवशेनाग्निहोत्रस्य विनियोगान्तरविधिर्वेति विशये, कालविधिरेवायम्; तत्रैव स्वारस्यात्, इति प्राप्ते काललक्षणापत्तेर्नायं कालविधिः, किं तु जीवने निमित्ते अग्निहोत्रविधिः। धातुसंबन्धाधिकारविहितो हि णमुल्प्रत्ययः जीवनस्य कर्मसंबन्धमवगमयति। संबन्धश्च निमित्तलक्षणः, न तु स्वावच्छिन्नकालकत्वरूपः। तथा सति गुणभूतकालानुरोधेन प्रधानावृत्तेर्न्यायसिद्धत्वाभावेन यावच्छब्दार्थस्यापि विधेयत्वापत्तेः। निमित्तत्वरूपत्वे तु प्रतिनिमित्तं नैमित्तिकावृत्तेर्न्यायसिद्धतया यावच्छब्दस्यानुवादत्वोपपत्तिः। निमित्तत्वं हि स्वान्वयव्यतिरेकानुविधाय्यनुष्ठानवद्विधेयकत्वरूपम्। तदनुष्ठानव्याप्यत्वतदनुष्ठानाभावव्याप्याभावप्रतियोगित्वोभयवत्त्वं तन्निमित्तत्वमिति तु निष्कर्षः। तत्र तदनुष्ठानाभावव्याप्याभावप्रतियोगित्वांशस्य प्रापकप्रमाणाभावादेव सिद्धेः तदनुष्ठानव्याप्यत्वांश एवेह विधेस्ता-

त्पर्यं बोध्यम् । एव शाखान्तरेषु अग्निहोत्रादिकं किं भिद्यते, उत सर्वास्वपि शाखासु एकमेवेति विशये अविशेषपुनःश्रुतिलक्षणादभ्यासात् प्रकरणान्तराच्च शाखान्तरेष्वग्निहोत्रादिकं भिद्यत एवेति प्राप्ते अध्येतृभेदात् एकस्यैव कर्मणः एकस्यां शाखायां विहितस्यापि शाखान्तरे पुरुषान्तरं प्रति विधिसंभवात् नाभ्यासादीनां भेदकत्वम् । अभ्यासादयो हि कर्मस्वरूपस्य विधेयतामापादयन्ति । तत्र विहितविधानायोगात् कर्मान्तरत्वं भवति । इह तु एकं पुरुषं प्रति विहितस्यापि पुरुषान्तरं प्रति अज्ञातज्ञापनादिरूपं विधानं संभवति । 'स्वाध्यायोऽध्येतव्यः' इति सर्वेषां स्वशाखाध्ययनस्यैव विहिततया शाखान्तरस्य पुरुषान्तरं प्रत्येव प्रवृत्तेः । अतः सर्वशाखाप्रत्ययमेकं कर्मेति शाखान्तरोक्तानामप्यङ्गानामुपसंहारः कार्यः । तज्ज्ञानं च कल्पसूत्रादिना सुलभम् ॥

इति द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

अध्यायश्च समाप्तः ॥

---

## अथ तृतीयाध्याये प्रथमः पादः ॥

एवं द्वितीयाध्यायेन भेदे सिद्धे तृतीयाध्यायेनाङ्गत्वनिरूपणम् । अङ्गत्वं नाम परोद्देश्यककृतिकारकत्वेन विहितत्वम् । दध्यादेर्होमाद्युद्देश्यककृतिकरणत्वेन आहवनीयादेः तादृशकृतिनिरूपिताधिकरणकारकत्वेन च विहितत्वाल्लक्षणसंगतिः । तत्राङ्गत्वे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट् प्रमाणानि। तत्र प्रथमे पादे श्रुतिविचारः । श्रुतिर्नाम अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतरनिष्ठमुख्यविशेष्यताशालिनी शक्त्यधीना या उपस्थितिः तज्जनकः

शब्दः । 'दध्ना जुहोति' 'व्रीहीन् प्रोक्षति' इत्यादिषु तृतीयाद्वितीययोः करणत्वेप्सिततमत्वरूपोद्देश्यत्वयोरेव शक्ततया लक्षणसमन्वयः । 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामावहन्ति' इत्यादौ निष्ठाप्रत्ययादौ अतिव्याप्तिवारणाय मुख्यविशेष्यतेति । कर्मत्वविशिष्टे शक्तेन तेन कर्मत्वमुख्यविशेष्यकोपस्थित्यजननात् न दोषः । तप्तं पयः दध्यानयनेन संस्कुर्यात् इत्यर्थके—'तप्ते पयसि' इति वाक्ये लाक्षणिकसप्तम्यादिवारणाय शक्त्यधीनेति । अत्र च करणत्वाद्यन्यतमरूपकारकत्वमात्रस्य तृतीयादिरूपश्रुत्यभिधानेऽपीतरांशस्यान्यलभ्यतया अङ्गत्वबोधोपपत्तिः । 'दध्ना जुहोति' इत्यादौ होमादेः धातुना कृतेश्चाख्यातेन लाभः । कृतौ होमादेः संसर्गमर्यादया ईप्सिततमत्वात्मककर्मरूपोद्देश्यत्वस्य भानम् । लिङादिसमभिव्याहाराच्च । तादृशकृतिकारकत्वविषयितानिरूपितप्रवर्तनाविषयत्वरूपस्य तादृशकृतिकारकत्वेन विहितस्य लाभः । यद्यपि वाचकशब्दमात्रे श्रुतिव्यवहारोऽस्ति । अत एव 'श्रुतिस्त्रिधा— विधात्री अभिधात्री विनियोक्त्रीचेति । प्रवर्तनावाचकलिङाद्यात्मिका विधात्री । अभिधात्री व्रीह्यादिश्रुतिः । संबन्धग्राहिका विनियोक्त्री । सा च त्रिधा । विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति । तत्र विभक्तिरूपा यथा "व्रीहीन् प्रोक्षति", "व्रीहिभिर्यजेत", "दध्ना जुहोति", "आहवनीये जुहोति" इत्यादौ द्वितीयादिश्रुतिः । तत्र द्वितीया अङ्गित्वस्य, तृतीया अङ्गत्वस्य वाचिकेति विवेकः । एकाभिधानरूपया श्रुत्या "पशुना यजेत" इत्यत्र विभक्त्यभिहितपुंस्त्वैकत्वयोः करणत्वे संबन्धः । "यजेत स्वर्गकामः" इत्यादौ एकपदश्रुत्या फलभावनायां यागादेः करणत्वसंबन्धेनान्वयः' इत्यादिकं प्राचां लेखन संगच्छते ।

तत्र एकाभिधानैकपदयो· संसर्गमर्यादयैव संबन्धबोधकतया तद्वाचकताविरहात् तत्र श्रुतित्वव्यवहारो गौणः । प्राचा मतेऽपि 'यजेत स्वर्गकामः' इत्यादौ विशेषणविशेष्ययोः क्रियायां प्रकारीभूय भासमानकारकवत्वनियमात् ज्योतिष्टोमेनेति तृतीयाभिहितकरणत्वस्य भावनाया प्रकारतया तदनुरोधेन धातोर्यागनिष्ठकरणत्वे लक्षणैवेति न मुख्यं श्रुतित्वम् । अन्यत्र तु श्रुतित्वव्यवहारो मुख्य एव । तथापि अङ्गत्वघटकीभूतेत्यादिकं मुख्याया विनियोक्तृश्रुतेरेव लक्षणमिति न दोषः ॥

एवं श्रुतेर्विनियोजकत्वे स्थिते क्वचित् तद्विशेषविचारः । तथा हि— ज्योतिष्टोमे श्रूयते— 'अरुणयैकहायन्या पिङ्गाक्ष्या सोम क्रीणाति' इति । अत्रारुण्यं किमेकहायनीमात्रे निविशते, उत प्राकरणिकसर्वद्रव्येषु इति विशये प्राकरणिकसर्वद्रव्येष्वित्येवयुक्तम् । तथा हि— अत्रारुणादिशब्दानां गुण एव शक्ति· । आरुण्यादीनामाश्रयभेदेन भेदानुपगमेन एकव्यक्तितया आनन्त्यव्यभिचारयोरभावात् । एकहायन्यादिपदानां तु बहुव्रीहित्वादवयवार्थविशिष्टान्यपदार्थरूपे द्रव्य एव शक्तिरिति प्राञ्चः । तादृशान्यपदार्थे पदद्वयस्यानुशासनिकी निरूढलक्षणेत्यन्ये । एवं च मत्वर्थलक्षणया आरुण्यवता एकहायनीमता पिङ्गाक्षीमता क्रयेण सोमं भावयेत् इति विशिष्टविधौ सति पश्चाद्विशेषणविधित्रयकल्पनया आरुण्येन क्रयं भावयेत्, एकहायन्या क्रयं भावयेत्, पिङ्गाक्ष्या क्रयं भावयेत् इति वाक्यार्थे आरुण्यसाध्यः एकहायनीसाध्यः पिङ्गाक्षीसाध्यः क्रय इति पार्ष्ठिकबोध इति वक्तव्यम् । नैतद्युक्तम् । आरुण्यस्यामूर्तस्य क्रयसाधनत्वासंभवात् ॥

न चात एवान्यथानुपपत्त्या अरुणापदस्यारुण्यगुणविशिष्टे लक्षणा स्वीकरणीयेति वाच्यम् । बहुव्रीहिशक्त्यवगतशीघ्रोपास्थितिकै-

कहायन्यवरुद्धे क्रये अरुणापदलक्षितारुण्यगुणविशिष्टस्य विलम्बितोपस्थितिकस्य निवेशासंभवात्। बहुव्रीहौ पदद्वयस्यान्यपदार्थे लक्षणेति पक्षेऽपि अनुपपत्तिप्रतिसधानानिरपेक्षानुशासनिकानिरूढलक्षणापेक्षया तत्सापेक्षारुणापदलक्षणाया दौर्बल्यात्। अतोऽरुणयेत्यस्य क्रीणातिना एकवाक्यत्वासंभवात् भिन्नवाक्यत्वमेवाश्रयणीयम्। ततश्चारुणयेत्यस्य भावनाभाव्यैतदुभयबोधकपदसमभिव्याहारमन्तरेण बोधकत्वानुपपत्ते तादृशपदद्वये कल्पनीये योग्यतानुसारात् प्राकरणिकज्योतिष्टोमापूर्वसाधनीभूतद्रव्यपरिच्छेद भावयेत् इति पदद्वयं कल्प्यते। आरुण्यस्य द्रव्यपरिच्छेदं प्रति करणत्वसंभवात्। द्रव्यपरिच्छेदस्य चानुष्ठानोपयोगितया इष्टत्वसंभवेन भाव्यत्वोपपत्तेश्च। तथाहि — तृतीयया तत्तद्द्रव्याणां तत्तत्क्रियाङ्गत्वावगतौ कीदृशस्य द्रव्यस्याङ्गत्वमिति विशेषाकाङ्क्षास्तीत्यविवादः। तत्र विशेषाश्रवणे परं यस्य कस्यचिदिति सिध्यति। विशेषश्रवणे तु तस्यैवेति लभ्यते। इत्थं च कीदृशस्य द्रव्यस्याङ्गमित्येवंविधाकाङ्क्षाशान्तिमन्तरेणानुष्ठानासंभवात् तादृशाकाङ्क्षाशामकस्यारुण्यगुणविशिष्टं द्रव्यं तत्तत्क्रियाङ्गमित्येवंविधविशेषनिर्णयरूपद्रव्यपरिच्छेदस्यानुष्ठानोपयोगित्वमक्षतम्। तत्र च विशेषणज्ञानमुद्रया हेतुभूते आरुण्यप्रत्यक्षे आरुण्यस्य विषयविधया हेतुत्वात् तस्य द्रव्यपरिच्छेदकरणत्वोपपत्तिरिति। ततश्च उक्तपरिच्छेदरूपोपकारजनकं सत् आरुण्यं प्राकरणिकसर्वद्रव्याङ्गमिति तत्र सर्वत्रापि तस्य निवेश इति प्राप्ते, यद्यप्यारुण्यस्यामूर्तस्य क्रयोपधायककृत्युपादानतया क्रयसाधनत्वं न संभवति; मूर्तस्यैव तथात्वसभवात्। क्रयोपधायककृतौ उपादानप्रत्यक्षस्यैव हेतुतया विषयविधया तादृशप्रत्यक्षहेतुत्वेन

क्रियाकरणत्वमुपादानताख्यविषयताशालिन एव हि संभवति न ह्यमूर्तस्यारुण्यादेस्तादृशत्वं संभवतीति तथापि द्रव्यपरिच्छेदद्वारा क्रयकरणत्वमारुण्यस्याप्युपपद्यत एव ॥

न च द्रव्यस्य क्रयसाधनत्वानवगमे क्रयसाधनपरिच्छेदद्वारारुण्यं क्रयसाधनमित्येवंविधयोग्यताज्ञानं न संभवति । तदवगमे च करणाकाङ्क्षाविरहात् आरुण्यस्य करणतयान्वयासंभव इति वाच्यम् । योग्यतासंशयेनैव शाब्दबोधनिर्वाहात् । तथाहि— संशयसाधारणयोग्यताज्ञानत्वेनैव शाब्दबोधकारणता, अयोग्यतानिश्चयत्वेन प्रतिबन्धकत्वं वा । न तु योग्यतानिश्चयत्वेन कारणत्वम् । यागादेः स्वर्गादिसाधनत्वबोधानुपपत्तिप्रसङ्गात् । इत्थं चारुणयैकहायन्येत्यादिवाक्येन एकहायन्यादीना क्रयसाधनताबोधस्य निर्विवादतया शाब्दबोधात् पूर्वमेकहायन्यादीनां क्रयसाधनत्वसंशयरूपं योग्यताज्ञानमावश्यकम् । ततश्च तादृशसंशयाधीनमारुण्यस्य द्रव्यपरिच्छेदद्वारा क्रयसाधनत्वसंशयरूपं योग्यताज्ञानमपि संभवत्येव । अयोग्यतानिश्चयाभावोऽपि यागादेः स्वर्गसाधनताविषय इव प्रकृतेऽपि संभवत्येव । इत्थं च पूर्वोक्तरीत्या आरुण्यसाध्यः एकहायनीसाध्यः पिङ्गाक्षीसाध्यः क्रयः इति अन्वयबोधे अपरिच्छिन्नद्रव्यस्य क्रयोपधायकत्वासंभवात् एकहायन्याः परिच्छेदकाकाङ्क्षायाममूर्तस्य गुणस्य द्रव्यपरिच्छेदद्वारैव क्रयसाधनत्वसंभवात् आरुण्यस्य परिच्छेद्याकाङ्क्षायां नष्टाश्वदग्धरथन्यायेन परस्पराकाङ्क्षया परस्परसंबन्धादेकहायन्यामेव निवेशः । एवमेकवाक्यत्वसंभवे वाक्यभेदमङ्गीकृत्य प्राकरणिकसर्वद्रव्यान्वयाश्रयणमनुपपन्नमिति ॥

इति तृतीयस्याध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः ॥

द्वितीयपादे तु लिङ्गविचारः । लिङ्गं नाम योग्यतापरपर्याय सामर्थ्यम् । तच्च श्रुतिकल्पनाद्वारा अङ्गत्वे प्रमाणम् । तथाहि— 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रः स्वनिष्ठबर्हिर्लवनाङ्गताबोधकश्रुतियुक्तः बर्हिर्लवनंप्रकाशनसामर्थ्यात् । यत्र यदर्थप्रकाशनसामर्थ्यं तत्र स्वनिष्ठतदङ्गताबोधकश्रुतियुक्तत्वम्, यथा— प्रत्ययवचनविनियुक्ते मन्त्रे, इत्यनुमानेन यद्यत्राङ्गताबोधकश्रुतियुक्तत्वं न स्यात् तर्हि मन्त्रवैयर्थ्यं स्यात् इति तर्कसहकृतेन मन्त्रे बर्हिर्लवनाङ्गताबोधकश्रुतिसिद्ध्या मन्त्रस्य बर्हिर्लवनाङ्गत्वसिद्धिरिति ॥

एवं लिङ्गस्य विनियोजकत्वे सिद्धे अङ्गिविशेषविचारः । तथाहि किमर्थप्रकाशनसामर्थ्यरूपं लिङ्गं मुख्य एवार्थे विनियोजकम्, उत गौणार्थेऽपि, इति विशये शब्दानां मुख्यवृत्त्येव गौणवृत्त्यापि बोधकत्वदर्शनात् गौणार्थेऽपि लिङ्गाविशेषात् विनियोगः संभवति । ततश्च बर्हिःशब्दस्य उलपराजिरूपतृणविशेषे लक्षणया तल्लवनप्रकाशकत्वासंभवात् मन्त्रस्य तत्रापि विनियोगः । ततश्च प्रतिप्रधानगुणावृत्तिन्यायात् मन्त्रस्यावृत्तिरिति प्राप्ते शक्यसंबन्धग्रहणसापेक्षजघन्यार्थप्रतीतेः विलम्बितत्वात् प्रथमप्रतीतमुख्यार्थविनियोगेनैव मन्त्रस्य प्रयोजनाकाङ्क्षाशान्तेर्न गौणार्थे विनियोगः । गौणसामर्थ्येन श्रुतिकल्पनादशायामनुकूलतर्कासंभवात् पूर्वमेव मुख्यार्थविनियोगेन मन्त्रसार्थक्यनिर्णयात् । अत एव गौणस्य स्मारकाकाङ्क्षाध्यानाद्युपायान्तरेणैव निवर्त्यते । अत एव च यत्र प्रकरणे मुख्यार्थोपयोगो न क्लृप्तः, तत्र मन्त्राम्नानबलादेव तत्कल्पना । यथा उपांशुयाजे विष्णवादिदेवताप्रतिपादकयाज्या-

पुरोऽनुवाक्यामन्त्राभ्यां देवताकल्पना । यत्र प्रकरणे विरोधिगुणावरोधात् मुख्यार्थविनियोगो न कल्पयितुं शक्यते, तत्र अन्यत्र सामान्यसंबन्धबोधकप्रमाणसत्त्वे तत उत्कर्षः । यथा— 'पूष्णोऽहं देवयज्यया पुष्टिमान् भूयासम्' इति पूषानुमन्त्रणमन्त्रस्य दर्शपूर्णमासप्रकरणपठितस्य प्राकरणिकेषु अग्न्यादिदेवताविरुद्धतया देवताकल्पकत्वासंभवात् अप्राकरणिके पौष्णयागे निवेशः । यागानुमन्त्रणमन्त्रसमाख्यया तत्र सामान्यसंबन्धसिद्धेः अप्राकरणिकनिवेश एव उत्कर्ष इत्यभिधीयते । सामान्यसंबन्धबोधकप्रमाणाभावे उत्कर्षस्याप्यसंभवात् तत्र परं प्रकरण एव जघन्यार्थे विनियोगः । यथा मनोतादाविति । 'त्वं ह्यग्ने प्रथमो मनोता' इत्युक्तत्वात् ॥

## इति तृतीयस्याध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

तृतीयपादे तु वाक्यप्रकरणस्थानसमाख्याविचारपूर्वकं श्रुत्यादीनां बलाबलविचारः । तत्र वाक्यं नाम पदद्वयसमभिव्याहारः । यथा— 'धेनुर्दक्षिणा उच्चैर्ऋचा क्रियते प्रयाजशेषेण हवींष्यभिघारयति' इत्यादौ धेनुदक्षिणादिपदद्वयसमभिव्याहारः । यद्यपि 'दध्ना जुहोति' 'अरुणया क्रीणाति' इत्यादावपि पदद्वयसमभिव्याहारोऽस्ति, तथापि अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतरविषयकशक्त्यनधीनबोधप्रयोजकपदद्वयसमभिव्याहारस्यैव वाक्यत्वेन विवक्षितत्वान्न दोषः । "धेनुर्दक्षिणा" इत्यत्र हि धेनुपदोत्तरप्रथमायाः करणत्वे लक्षणा । दक्षिणापदस्य च आनतिसाधनद्रव्यवाचिनः कार्यभूताननतिनिष्ठकर्मत्वे लक्षणा । ततश्च धेन्वा आनतिं

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकल परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे भाद्रपदमासः । [संचि. ६.


## सुभाषितानि ॥



लोकाधीश्वरमम्बुजाक्षमसकृत् श्रीराजसूयाध्वरे
प्राक्कृष्णं शिशुपाल एष नितरां दुर्भाषितैराक्षिपन् ।
राकेन्दुप्रतिमानने स विपदं सद्यो न किं प्राप तत्
स्मारं स्मारमपाहसेन्न मतिमान् मान्यान् कदापि प्रिये ॥ १ ॥

तात श्रीधृतराष्ट्रनन्दन मनागस्मद्वचः श्रूयतां
क्षेमायैव पृथात्मजैः सह निजैः स्पर्धां वृथा मा कृथाः ।
एतादृग्विदुरोपदेशमखिलं धिक्कृत्य दुर्योधन-
स्तामापद्विपदं प्रिये न सुहृदां वाचं कदापि त्यजेत् ॥ २ ॥

दुष्यन्तः क्षितिपालमण्डनमणिः कण्वेन संप्रेषितां
पत्नीं स्वां ससुतामसावपि सतीं जग्राह नो सत्वरः ।
श्रीमान् साधु विमृश्य सज्जनमतः पश्चात् सतामाददे
वामाक्षीदमनुस्मरन्न सहसा कुर्वीत कार्यं सुधीः ॥ ३ ॥

श्रीमानविक्रमकविराजः ।

## श्रीसदाशिवेन्द्रसरस्वती ॥

(पूर्वतोऽनुवृत्तम्)

एवं गुरूपदेशवैभवेन प्राक्तनेन संस्कारेण च योगविद्यां सम्यगवगत्यामन्दानन्दनिर्भरः संयमिसार्वभौमोऽभूत् । परमात्मसाक्षात्कारेण परां निर्वृतिमधिगतवतां परकलितप्रशंसानिन्दादिपराङ्मुखानां परे ब्रह्मणि वर्तमानानां परोरजसां परमहंसानां विभूतिमधिजिगमिषुरात्मनस्तादृशीं मानसीं वृत्तिमात्मविलासाख्ये शमप्रधाने द्विषष्टयार्यानिबद्धे काव्ये विशदमबूबुधत् । योगविद्यागुरोः परिसरवर्ती सदाशिवस्तद्दर्शनायागतान् पण्डितान्प्रश्नशतैर्व्यामोहयन्नपत्रपया तानधोमुखान्व्यधत्त । तदीयप्रश्नानां जोषंभावमेवोत्तरयद्भिरपि परिभवासहिष्णुभिर्विद्वद्भिः 'दुर्विनीतोऽयं सदाशिवोऽस्मान्प्रश्नैर्लज्जापयति' इति विज्ञप्तो गुरुः परमशिवेन्द्रयोगी किञ्चिदिव विमनीभवन् 'सदाशिव, कदा वा ज्ञास्यसि दुर्निरोधाया वाचः संयमनम्? इति व्याहार्षीत् । सद्य एव स्वीयमपराधं सम्यगाकलयन् शिष्यः रसनानिरोधोद्यतः आमरणं मौनव्रतमाचरेयमिति कृतनिश्चयः आचार्यं दण्डवत्प्रणम्यापराधक्षमापणमयाचत । अथाचार्येणानुज्ञातो मौनयोगी भूत्वा अरिषड्वर्गमुन्मूलयन् करतलभिक्षस्तरुतलवासः सुखेन कालमनैषीत् ॥

कदाचिदगणितदेहाभिमानमनाकलितशीतातपादिखेदं केदारयोर्मध्ये स्थण्डिलशायिनमेनं संयमीन्द्रमवलोक्य केचन कर्षकाः 'अहो! परित्यक्तसर्वसङ्गस्याप्यस्य किंचिदिवोन्नता केदारसीमापदी शिरस उपधानत्वेनाश्रयणीया वर्तते' इति परस्परं भाषमाणा

जग्मुः । अन्येद्युस्त एव तेनैव पथा प्रतिनिवर्तमानाः उपधानं विनैवाम्बरतले शिरोधरां प्रसार्य तत्रैव केदारमध्ये शयानमेनं सदाशिवमवलोक्य 'सर्वसङ्गपरित्यागिनोऽप्यस्य योगिवर्यस्यास्मादृशजनकलितप्रशंसानिन्दादिषु वैमुख्यं न दृश्यते' इति विस्मयमापन्नास्तं नमस्कृत्य यथायथमगच्छन् । उदन्तोऽयं कर्णाकर्णिकया श्रीवेङ्कटेशस्य श्रुतिपथमगात् । सोऽपि सम्यग्विचिन्त्य 'अहो! दुर्निवारः प्रकृतिसंबन्धः संयमिसार्वभौमानामपि' इत्याकलयन्,

"तृणतुलिताखिलजगतां करतलकलिताखिलरहस्यानाम् ।
श्लाघावारवधूटीघटदासत्वं सुदुर्निरसम् ॥"

इत्यन्वशोचदिति श्रूयते ॥

एतादृशीमात्मनो बुद्धिपरिपाकपरिपन्थिनीं न्यूनतां क्रमेण परिहरन् योगविद्यायाः परां काष्ठामधिरूढः सदाशिवः दिव्यनद्योरमरावतीकावेर्योः परिसरारण्यप्रदेशेषु कृतवसतिः नद्योरनयोः पुलिनेष्वास्थितः अवाङ्मनसगोचरं परं ब्रह्म ध्यायन् सुखेन दिवसानत्यवाहयत् । कदाचिदसौ शून्यहृदयो जड इव बधिर इवान्ध इवाविष्ट इवेतस्ततः संचरन् परमात्मनि निबद्धहृदय उन्मत्त इव जनैरालक्ष्यते स्म । एतादृशीमात्मनः शिष्यस्य दशामाकर्ण्यात्मनस्तादृशं हृदयपरिपाकाभावमन्वशोचत्परशिवेन्द्रयोगीति ज्ञायते । तथा हि—

"उन्मत्तवत्संचरतीह शिष्य-
स्तवेति लोकस्य वचांसि शृण्वन् ।
खिद्यन्नुवाचास्य गुरुः पुराहो
ह्युन्मत्तता मे न हि तादृशीति ॥"

सदाशिवो हि परित्यक्तदेहाभिमान: अगणितवर्षातपादि-खेद: केवलमात्माराम: समाधिनिष्ठ: कदाचिदुपवनेषु प्रविश्य सुबहूनि दिनानि न कस्यापि दृष्टिगोचरोऽभूत् । कदाचित्कवेरकन्यापुलिनेषु स्थावर इव निश्चलो निष्पन्दसर्वावयव: समाधिमारचयत् । एकदासौ **कोडिमुडि** जनपदस्य नातिदूरे प्रवहन्त्या: कावेर्या मध्ये सैकतमधिष्ठाय स्थित: अतर्कितोपनतेन द्रुमानुन्मूलयता पोतानधरोत्तरीकुर्वता कूलं कर्षता अतिभीषणं प्रवहता जलमयानिव जनपदान्कुर्वता नदीप्रवाहेण सुदूरमाकृष्ट: आवर्तान्तरेषु तूलवद्भ्रमित: अन्तर्वालुकासु निक्षिप्तोऽभूत् । तथाविधमेनं परित्रातुमशक्ता: कूलस्था जना: 'हन्त! महतीयमापदापतिता योगिवर्यस्य । किं कुर्म: ?' इति, 'दुर्दान्तोऽयमनुचितकारी मरणमेतादृशमर्हत्येव' इति खिद्यन्तो व्याहरन्तश्च गृहानयासिषु: । मासत्रितयानन्तरं क्रमेण शममुपयाता वेणीभूतप्रतनुसलिला सैकतप्राया समदृश्यत सह्यजा । ग्रामीणाश्च जना: स्नानपानसौकर्यार्थिनो नदीमध्ये निपानादिकं रचयितुं सैकतान्यखनन् । खनतश्च कस्यचिदन्तर्भूमौ कठिनमेकं वस्तु खनित्रसंसक्तमिवालक्ष्यत । सद्य एव बहिरुद्धृते खनित्रे रक्तधारासक्तिमभिवीक्ष्य नितरां कातरोऽभूत्कर्मकर: । आश्चर्यमिदमुद्वीक्ष्य सर्वेऽपि मिलित्वा परितो मृदु मृदु खनन्त: शर्करा: समुद्धृत्य समाधिस्थं परित: परिक्षिप्तगात्रं वालुकानिमग्नं सुखसुप्तमिव सैकतान्त: शयानं सदाशिवं योगिवर्यमालोक्य विस्मयस्तिमितलोचना: 'आश्चर्यमाश्चर्यम् । अचिन्त्योऽयमस्य संयमीन्द्रस्यानुभाव:' इति शंसन्त: तस्य शरीरं बहिरानाययन् । आनीतमात्र एव विघटितसमाधि:

सुप्तोत्थित इव चक्षुषी निमील्य तस्मात्प्रदेशादुत्थाय यथेच्छमगात् ॥

एकदा करूर्जनपदान्तर्गतेषु केषुचित् केदारेषु पाककपिशान्कलमान्संगृह्य व्रीहिसंचयमेकत्र राशीकृत्य भस्मचिह्नानि निक्षिप्य रात्रौ तत्संरक्षणार्थं भृत्यानाज्ञाप्य गेहं गतवति केदारस्वामिनि, रक्षिणश्च निर्निमेषेण चक्षुषा जागरूका. परितो व्रीहिराशिं विचरन्तस्तस्थुः । ततः शर्वगलश्यामशार्वरान्धकारे तमसि क्रमेण निमग्ने वसुधातले निशीथिन्यां तेन पथा यदृच्छयागतः शून्यहृदयः सदाशिवः तस्मिन्नेव व्रीहिसंचये स्खलितगतिरपप्तत् । अन्यस्मिन्पार्श्वे विचरन्तो रक्षिणस्तस्करोऽयमिति कृत्वोद्धृतदण्डास्तं निबन्धुमहमहमिकयानुधावन्तो धान्यराशौ सुखं शयानमेतं संयमीन्द्रमुद्वीक्ष्याज्ञानात्तं ताडयितुं प्रावर्तन्त । हन्त! तथोद्धृतलगुडहस्तास्ते योगीन्द्रस्यानुभावेन स्तम्भितान्तःकरणाः निश्चलावयवाः चित्रीयमाणाश्चित्रार्पितप्रतिमा इव रजनीमखिलामवतस्थुः । प्रातस्तत्रागतः केदारस्वमी भृत्यानां तादृशीमतिकरुणां दशामवलोक्याकुलहृदयः संभ्रान्तः 'किमिदम्?' इति तानप्राक्षीत् । 'स्वामिन्! अमर्षेणैतं महात्मानमज्ञानात्ताडयितुं प्रवृत्ता वयमेवमस्वतन्त्राः संवृत्ताः । किं कुर्मः?' इति निवेदयामासुः । एवं भाषमाणानां तेषामारावेण विघटितसमाधिरुन्मील्य चक्षुषी तस्मात्स्थलान्मन्दमन्दमुत्थाय यथागतमगात् । गते च तस्मिन् भृत्या अपि स्वस्थाः समभूवन्; तुष्टुवुश्च तं 'अचिन्त्यमहिमा सोऽयमपारकरुणाम्बुधिः' इति ॥

(क्रमश ।)

# भारवेर्जीवनचरितम् ॥

(पूर्वतोनुवृत्तम्)

प्रस्थानसमये स्वात्मनः प्राणप्रियामाहूय 'अयि प्रियसखि, याम्यहमिदानीं महाराजसंदर्शनाय । इमे बालकास्त्वया लालनीयाः पालनीयाश्च यथा तैरीषन्मात्रमपि मदसन्निधानप्रयुक्तो लोपो न विभाव्यते । किं बहुना? त्वमतीव चतुरा लोकज्ञानवती च । अपि च स्वयमेव जानासि तत्तत्कालोचितं सकलमपि । न मया कथनीयमतिविस्तरेण । अथापि सूत्रप्रायं किंचिदहं त्वां स्मारये । तिष्ठ जागरूकतया अप्रमत्ततया सर्वेष्वपि समयेषु कर्तव्येषु च' इत्येवंविधान्यन्यानि च बहूनि प्रियहितवचनानि उपदिशति प्राणनाथे, सा कान्तामणिः भाविनं प्रियविप्रयोगं तज्जनिष्यमाणं दु सहं हृदयसन्तापं च मुहुर्मुहुरनुसंदधाना प्रेयसः देशयात्रामङ्गीकर्तुं निराकर्तुं च नैव शशाक । अनन्तर च अबलाजनसुलभेन धैर्यावसादेन निदाघसिन्धुरिव वन्यद्विपेन हृतप्रसादापि शोकसागरनिमग्नापि हिमबिन्दुपरिवृतेन्दीवरसन्निभे पर्यश्रुणी विलोचने दधानापि अश्रूणां दृष्टिप्रतिरोधकत्वेऽपि तन्निपातस्यामङ्गलहेतुतया मङ्गलभङ्गभीरु बाष्पावृतेऽपि चक्षुषी सकृदपि मीलयितुमसहमाना सतीललामभूता भारवेः सहधर्मचारिणी निरुद्धबाष्पोदया स्वयमगूढभावापि शोकोद्विग्नमनस्कतया सन्नकण्ठतया च किमपि वचोरूपमुत्तरं दातुमसमर्था अकृत्रिमप्रेमरसाभिरामया दीनदीनया दृशैव कथं कथमप्यनुमेने स्वभर्तुर्देशयात्राम् ॥

अत एव खलु किरातार्जुनीयतृतीयसर्गवर्तिनां कतिपयश्लोकनां पठने तदभिप्रायस्य सम्यक्परिशीलने च निजप्रस्थानसाम-

यिकीं स्वप्रेयस्याः अतिकरुणामेवावस्थां मनसि निधाय महाकविरयं भारविः आत्मनः स्थाने इन्द्रसूनुमर्जुनं प्रेयस्याः स्थाने द्रौपदीं च विनिवेश्य तत्तदात्म्यसंभावनया अर्जुनद्रौपदीवृत्तान्तवर्णनव्याजेन तामेवावस्थां व्यंजयामासेत्यनुमिन्वते केचिद्विमर्शकाः पण्डिताः। अन्यच्च, अधोलिखितश्लोकेषु प्रतिपादिताः सर्वेऽपि विषयाः प्रत्यक्षदृष्टा इव स्वानुभवैकवेद्या इव च संभाव्यन्ते सर्वैरपि रसिकहृदयैः तद्दर्शनपठनसमकालमेव । तथा हि—

" तुषारलेखाकुलितोत्पलाभे
पर्यश्रुणी मङ्गलभङ्गभीरुः ।
अगूढभावापि विलोकने सा
विलोचने मीलयितुं विषेहे ॥

सर्ग ३. श्लो. ३६.

अकृत्रिमप्रेमरसाभिरामं
रामार्पितं दृष्टिविलोभि दृष्टम् ।
मनःप्रसादाञ्जलिना निकामं
जग्राह पाथेयमिवेन्द्रसूनुः ॥

सर्ग ३. श्लो. ३७.

धैर्यावसादेन हृतप्रसादा
वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धबाष्पोदयसन्नकण्ठ-
मुवाच कृच्छ्रादिति राजपुत्री ॥

सर्ग ३. श्लो. ३८.

(क्रमशः ।)

## धनिकः करण्डकारश्च ॥

( पूर्वतोऽनुवृत्तम् )

ते च तथेत्यङ्गीकृत्य इन्धनाहरणार्थं तयोः साहाय्यमयाचिषुः । तदनु तस्मिन् कार्ये व्यापृतयोस्तयोर्धनिकस्त्वङ्गसौष्ठवात् धाष्ट्याभावाच्च किमपि कर्तुं नाशक्नोत् । दरिद्रस्तु चिरकालसम्भृताभ्यासात् पाटवाच्च स्वविहितं कर्म निरवशेषं समाकलयत् । एतत्सर्वमपि विदित्वा पौरास्ते यथाविधि आहारपानाद्यैस्तं समभ्यर्चयन् । तैरनादृतः स धनिकः दयार्द्रहृदयेन करण्डकारेण पोषितोऽभवत् ॥

इत्थं गच्छति काले, एकदा स दरिद्रः तस्यां पुरि यथेच्छ-प्रवृद्धान् शुष्कवेत्रदण्डानादाय तैः स्वहस्तपाटवेन किमपि रमणीय-मुष्णीषं निर्माय तेन तत्र पौरजनेष्वेकतमस्य शिरःप्रदेशं मण्डयामास । सोऽपि तदद्भुतं निरीक्ष्य कुतूहलाकुलितचित्त इतरेभ्यस्तं वृत्तान्तमाच ख्यौ । ततस्ते सर्वेऽप्यहमहमिकया इङ्गितैरुष्णीषप्रार्थनामकुर्वत । एवं स दरिद्र उष्णीषरचनार्थमिन्धनाद्याहरणमुज्झित्वा नियुक्तः । अकिंचनो धनिकश्च शुष्कवेत्राद्याधानकर्मणि विनियोजितः । इतरेभ्यः स्वयमुत्कृष्ट इति पूर्वबुद्धिं परित्यजन् स धनिकः दरिद्रस्य सामर्थ्यं हस्तलाघवं दयालुत्वं चाभिनन्दन् स्वेन तस्मै कृतमपराधं स्मारं स्मारं परं व्यषीदत् ॥

एवं कतिपये व्यतीते काले तावुभावपि यथापुरं तस्माद्द्वीपा-न्न्यायाधिपतेः पुरतः समानीतौ । सोऽपि धनिकमुद्दिश्यैवमभा-णीत्—"यमेनं साधुमवलिप्तस्त्वमपकृतवानसि, तस्यैव साधनेन खलु शरीरपोषणमेतावन्तं कालं कर्तुमशक्नोस्त्वम् । तदधुना तवापराधोपश-

मनार्थे निखिलं ते द्रव्यं द्विधा संविभज्य भागमेकमस्मै प्रयच्छ" इति ॥

करण्डकारस्तु सविनयमेतन्निवार्य पुनराबभाषे— 'आजन्मनो दरिद्रोऽहं धनिको भवितुं नार्हामि । किं तु यथापुरं कुटीरे वसन् वेत्रकरण्डं निर्मातुमेवाभिलषामि । तदयं धनिको यद्यग्निदग्धं ममावसथं पुनरप्युज्जीवयेत् दरिद्रेभ्यः कारुणिको भवेच्च, स एव परमानुग्रह इति मन्ये' इति ॥

साश्चर्यमेतन्निशम्य धनिको नितरां तं संश्लाघ्य तस्य कुटीरं तत्क्षणमेव निर्मातुमाज्ञाप्य ततःप्रभृति दीनेऽभ्यः परमकारुणिकोऽभवत् ॥

---

# शाकुन्तलसंविधानरामणीयकम् ॥

(पूर्वतोऽनुवृत्तम्)

सगतिं प्रतिरोद्धुं बद्धकक्ष्याणि प्रतिभान्ति । यैराकुलीकृताः कृतमतयः सुगृहीतविनया अपि व्यवहारार्थमर्थजातं व्याहर्तुमलब्धवाग्वृत्तयः प्रतिपदस्खलितदुःस्थामवस्थामनुभवन्ति । कालिदासस्यापि काव्येष्वेष कलङ्को नात्यन्ताय नोपलभ्यते । रामायणमहाभारतमनुस्मृत्यादिषु या गद्यनिर्विशेषा पद्यशैली गृहीता सा हि नष्टकल्पा पश्चादभूत् । तथापि नाट्यप्रबन्धाः कालिदासस्य ललितरमणीयाः सुखास्वाद्यरसाश्च नाट्यप्रयोगमार्गनिपतिता भवितुमर्हन्तीति सावष्टम्भस्तर्कः । नान्द्यां च नाटकस्याष्टद्वादशाष्टादशद्वाविंशत्यष्टाविंशतिष्वन्यतमया संख्यया पदपरिच्छेदः कैश्चिन्नाट्यलक्षणप्रणेतृभिर्नियमितः । अपरैश्च नियम

एष प्रत्याख्यातः । एवं लाक्षणिकमतमेव द्वैधं वर्तते । तत्र नियमपक्षः समतालव्यवस्थानाय दीर्घसमासादिनिवारणाय च प्रक्रान्तो न वितथः । अष्टप्रभृत्यष्टाविंशतिपर्यन्तसंख्याविकल्पनं च तत्तद्वृत्तानुरोधेन स्यात्, न ह्यत्र न्यूनातिरेकोपनिपाते प्रायश्चित्तीयः कविः । अपरैस्तु तालसाम्यादेः पाठधर्मतां मन्यमानैर्नियमितेऽपि पदपरिच्छेदे क्वचिदतिदीर्घसमासेनान्यत्र चासमासेन संख्यानियमनिर्वहणसंभावनया विषमरचनावैरस्यं क्लिष्टतां च निवारयद्भिः प्रत्यादिष्टो नियम इति च सुगमम् । न च खलु परिगणनादृते पदपरिसंख्यानसदसद्भावौ श्लोकश्रवणादेव प्रतिसंधानविषयतामुपयातः । किमनेन तुल्यसदसद्भावेन नियमेन स्थितेन गतेन वा । विमृश्यैव चेत्थं नियमनियन्तृभिरपि स्वं प्रहमजहद्भिः कविमपि वृथापरिक्लेशादुत्तारयद्भिः पदनियमवाक्ये पदशब्दार्थस्त्रेधा विकल्पितः ; यथा— "श्लोकपादं पदं केचित् सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे" इति । भवभूतिरत्र सुप्तिङन्तपदपक्षाश्रयेणोत्तररामचरिते—

"इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ।
वन्देमहि च तां वाणीममृतामात्मनः कलाम् ॥"

इति द्वादशपदा, वीरचरिते च—

"अथ स्वस्थाय देवाय नित्याय हतपाप्मने ।
त्यक्तक्रमविभागाय चैतन्यज्योतिषे नमः ॥"

इत्यष्टपदां च नान्दीं विधाय नियमबन्धानुभूतश्रमविमोक्षार्थमिव दीर्घवृत्तानेकश्लोकनिर्माणकौतुकानुरोधिना श्लोकपादपदपक्षेण

मालतीमाधवे श्लोकैस्त्रिभिर्द्वादशपदा निरवहन्नान्दीम् । तत्र हि—

"सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे—
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु पीट्कारवत्यः ॥"

इति प्रथमश्लोकस्य पञ्चदशपदत्वात्,

"पक्ष्मालीपिङ्गलिम्न. कण इव तटितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव ।
अर्चिर्निष्टप्तचूडाशशिगलितसुधासारशात्कारिकोणं
तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥"

इति तृतीयश्लोकस्य च विंशतिपदत्वात् सुप्तिङन्तसंख्यानि-यमो न संभवति । तत्रैव द्वितीये श्लोके

'चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो
विद्युत्प्रायललाटलोचनशिखिज्वालाविमिश्रत्विषः ।
पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो
भूतेशस्य भुजंगवल्लिवलयस्रङ्नद्धजूटा जटाः ॥"

इत्यस्मिन्नेव परं सुप्तिङन्तपदानामानुषगिकोऽष्टसंख्यापरि-च्छेदः । तस्य श्लोकस्य प्रथमनिवेशाभाव एव कवेस्तत्रानिदंपरतां गमयति । भवभूतेरनुमार्गप्रस्थितो मुरारिरप्यनर्घराघवे—

'निष्प्रत्यूहमुपास्महे भगवत. कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ।

याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥'

इति प्रथमश्लोकं द्वादशसुप्तिङन्तपरिमितं विरचय्यापि पद्यबाहुल्यप्रियतया नियमानुरोधनिर्वेदेनानियमभीरुतया च पादपदपक्षे विश्राम्यन्,

'विरमति महाकल्पे नाभीपथैकनिकेतन-
स्त्रिभुवनपुरःशिल्पी यस्य प्रतिक्षणमात्मभूः ।
किमधिकरणं कीदृक्कस्य व्यवस्थितिरित्यसा-
वुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥"

इत्यनियतपदपरिच्छेदं द्वितीयं श्लोकमरचयत् । मुद्राराक्षसे च विशाखदेवः—

'धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥'

इत्यवान्तरवाक्यपदपक्षेणाष्टपदं प्रथमश्लोकं विरचय्य पादपक्षावलम्बेन तमपि परिक्लेशं निस्तितीर्षुः,

'पादस्याविर्भवन्तीमवनतिमवनेरक्षतः स्वैरपातैः
संकोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम् ।
दृष्टिं लक्ष्येषु नोग्रज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधारानुरोधात् त्रिपुरविजयिनः पातु वो दुःखनृत्तम् ॥'

(क्रमशः)

# विजयिनी ॥

(पूर्वतोऽनुवृत्तम्)

सविस्तरमवर्णयत्, किमत्रानन्तरकरणीयमिति च तमप्राक्षीत् । ईश्वरसूरिः क्षणं विचिन्त्य कार्तवीर्यमहाविक्रान्तपक्षीयाणां विरोधनाशाय भवेत्कदाचिदेतादृशो विवाह इति निरतिशयानन्दपूर्णचित्तः,

योगो रत्नाकरविजयिनीसंभवो भूतिवृद्ध्यै
भूयान्नीयाच्चिरजनितविद्वेषमेष प्रशान्तिम् ।
सूनुर्युग्माद्भवतु कलहद्वेषभङ्गे सतृष्णः
सर्वो लोकोऽनवरतसुखप्राप्तिसंमोदभाक्स्यात् ॥

इत्याशीःप्रदानपुरःसरं तमभिनन्द्य परस्ताद्यत्करणीयं तदन्तर्गृह एव कथयिष्यामीति तस्मै निवेद्य तेन सहान्तर्गृहं जगाम ।

प्रविश्य चान्तरगारं कौतूहलतुन्दिल ईश्वरसूरिः, सातिशयमशोकिनीप्रणयी अयं रत्नाकरः कथमन्यसंक्रान्तहृदयो बभूवेति पुनस्तं पप्रच्छ—'कथं कुत्र च विजयिनी भवतावलोकिता । कस्तस्यां विशेषो येनाशोकिनीं परिभाव्येयं बहु मन्यते । कथं न ज्ञातुं पारितं यदरातिकुलसंभवेयं रमणी दुष्कुलप्रसूतेव सर्वथानुपभोगार्हेति' सोऽपि विगतकिल्बिषेण चेतसाऽब्रवीत्—

'अन्धः प्रेमा न तदुपहताः सम्यगालोचनायां
शक्ता नित्तापहृतमतयस्तद्वदेवाचरन्ति ।'

इति केनचनाभियुक्तेन प्रेमान्धद्रविणान्धविषय उक्तम् । अतो नाहमत्र दोषभाजनमिति जानन्त्येव पूज्यपादाः । अपि च

नेदं प्रणयद्रव्यमन्यव्यावहारिकद्रव्यवदितस्ततो नीयते, नापि प्रणयसंक्रान्तिसमये योग्यायोग्यविचारणायाश्चावकाशः । यत्त्वाचार्यपादा वदन्ति यदशोकिनीप्रणयी अहमभूवमिति, तन्मृगजलसद्भाववदेव सत्यम् । तातपादैरेव तथाहं सम्भावितः । अस्तु वैतद्यथा तथा वा । किमनन्तरकरणीयं तदेवाचार्यपादै प्रथमं निवेदनीयं भवति' इति । श्रुत्वैतत्, अतिभूमिं गतोऽयं प्रणयावेश इति मनसिकृत्याकथयत्— सायमद्य प्रथमं तावद्गान्धर्वेण विधानेन विवाहं सम्पादयिष्यामि । यदि च परतः स्यात्काचन विप्रतिपत्तिस्तदा वानुरूपे समये वा अहं युवयोर्विवाहविधिमस्मिञ्शिवालये सञ्जातं प्रकटीकरिष्यामि । अतो युवामत्र सायमागच्छतम्— इत्युक्त्वा रत्नाकरमनुज्ञाय चानुष्ठेयस्वीयकृत्य उत्तस्थौ । रत्नाकरोऽपि गृहमागम्य यथाकालमागतायै विजयिनीपरिचारिकायै समयं निवेद्य गगनमणेरस्तमय प्रतीक्षमाणस्तस्थौ ॥

इति द्वितीय आश्वासः ॥

---

## तृतीय आश्वासः ।

इष्टसमागमप्राप्त्याशा कालं वर्धयतीत्येतदनुभवसिद्धं सर्वेषां विशेषतः प्रणयिनाम् । तदात्वे तेषां मनसस्तद्विषयमयत्वात् ते तमेव कालं सत्वरमागमिष्यन्तमिच्छन्ति ; यद्यच्चामीभिरिष्यते तत्तच्च सुदूरमपयाति । न चान्तरस्था वेला मनोरथाधिरूढस्यापि पवनाश्वस्यापि परिहीयते । यथा पारसीकदेशीयः कश्चनः सैकतलङ्घनेच्छुर्मृगजलवञ्चितस्तृषाक्रान्तश्च मृगजल यथा यथानुधावति तथा तथा तत्तु दूरस्थितमेवावतिष्ठते, न च तृष्णाया बिन्दुमात्रमप्युपशान्तिः, तद्वदेव प्रणयाविष्टचेतसां प्राणिनामभिलषितस्य द्रुतं समागममिच्छतामवस्थे-

ति सार्वजनीनमेतत् । कथं वा विजयिनीरत्नाकरावेवास्मिन् विषयेऽपवादौ भवितुं पारयतः ?

विजयिनी दासीमुखेन विदितवृत्तान्ता सहर्षनिर्भरं प्रदोषकाले शिवपूजनमिषेण मातुरनुज्ञामधिगम्य परिचारिकाजनं कतरोऽत्र वेषः समुचितो मङ्गलवेष उताभिसारिकावेष इति पप्रच्छ । स तु परिहासपूर्वं 'ननु मनसैव निर्वृतो युवयोर्हृदयनिबन्धनरूपः परिणयः कुसुमसायकगोचरतां गतयोः । अधुना त्वभिसारिकावेष एवोचितो नः प्रतिभाति' इत्यैकमत्येन जगाद । विजयिन्याज्ञप्तश्च स तमेव तस्या उपाहरत् । ततश्च सा वेषभूषादिभिरात्मानं सज्जीकृत्योत्कण्ठितनयना भानोरस्तमयं प्रतीक्षमाणातिष्ठत् । जगाम च (यथा विजयिन्या परिभावित) चिरेणास्तगिरिशिखरं भानुमान् ॥

रत्नाकरोऽपि विजयिनीसमवस्थातुल्यामेवानुभवन्नवस्थां किमयं सहस्रभानु प्राच्यां सातिशयमनुरक्तो दाक्षिण्यादन्यस्त्रीसमागमेन तस्याः कोपो भविष्यतीति शङ्कया मन्दमन्देनेव पदास्ताचलमुपगच्छति, उतापरद्वीपनिवासी जनः प्राभातिकीं सुखकरीं निद्रां चिरमनुभवत्विति निद्रापरवशजनशापभीतिभीतान्तरङ्ग इवास्य लोकस्यास्ताचलमपरस्य च लोकस्योदयपर्वत विलम्बेनारुरुक्षुर्बभूव, आहोस्वित् विप्रलम्भशृङ्गार एव प्रेयसीप्रिययोरनुरागं वर्धयतीत्यपरगोलस्य प्राचीं दिशं विलम्बसञ्जातरुषं मां चोत्कण्ठितचित्तवृत्तिं प्रदर्शयितुमेव स्खलितगतिः पदे पदेऽभूदित्येवंविधं चिरमनुध्यायन् यथाकालं भानोरस्तमयं ददर्श । दृष्ट्वेमं चण्डकिरणमस्ताचलचूडावलम्बिनं सविशेषं प्रमुदितमना रत्नाकरः ससंभ्रमं वेषादिकं परिधाय एकलिङ्गाख्यं शङ्करस्येश्वरसूरेश्चायतनमभिप्रतस्थे । विजयिन्यपि तथैव धृताभिसारिका-

वेषा प्रमोदोत्कण्ठाभ्यामभिभूतस्वान्ता 'किमतःपरं भविष्यति किमात्मीयो वदेत्' इत्येवंविधाय विचाराय मनसि पदमददाना गृहाद्बहिरभूत् ॥

कृष्णपक्षत्वान्नाद्यापि शीतकिरणो वियन्मण्डलमलमकार्षीत् । अतश्च प्रतिद्वन्द्विनोऽभावात्तमोजालेन भुवनतलाक्रमणाय समारब्धः प्रयत्नः सुखसाध्योऽभूत् । पौरैः प्रदीपालंकृतमन्दिरैर्यद्यपि प्रतिकूलमाचरितं तथापि कृत्रिमतेजस्त्वान्न तदन्धकारसमूहस्य साकल्येन नाशाय पर्याप्तम् । तारकागणालङ्कृतमपि विष्णुपदमण्डलं स्वामिनोऽसन्निधानेन स्वीयकार्ये विरलप्रयत्न इव परिचारकगणो न तमोनिवारणाय क्षममभूत् । सवित्रास्तसमये प्रदत्ततेजा अपि जातवेदाः परोत्पादितधैर्योऽपि स्वभावभीरुरिव योधो महानसाश्रयणपर एव भूत्वा तमोराजिं नाभिगन्तु शशाक । अस्मिन् काले सञ्चारिणी दीपशिखेव विजयिनी स्वीकृताभिसारिकावेषत्वादज्ञेयप्रथमस्वरूपा राजमार्गं परित्यज्यान्येनैव पथा नगराद्बहिरागत्य क्षुद्रपर्वतमूले कृताधिवासस्य भवानीजानेर्महादेवस्यायतनं प्रविवेश । रत्नाकरस्तु तामेव प्रतीक्षमाणः पूर्वमेवागत्य तत्रातिष्ठत् ॥

ततश्चेश्वरसूरिर्भाविने जायापतियुगुलाय किमाचारः श्रेयः प्रेम च वर्धयतीति संक्षेपेणोपदिश्य तपांस्याचरन्त्या हिमनगजायाः पाणिं विवाहसमयात्पूर्वमेव जिघृक्षुरयं राजपुत्रदेशस्य मुख्यं दैवतमेकलिङ्गेश्वरो भवानीजानिरेव गान्धर्वविवाहे निदर्शनमिति संदिश्य विहस्य च किञ्चित् रत्नाकरेण विजयिन्याः पाणिमग्राहयत् । ततश्च तावभिनवदम्पती परमेश्वरादाशिषमाकाङ्क्षन्तौ तमित्थमभ्यष्टुताम्—

(क्रमशः)

कान्ताकटाक्षपाशैर्मन्दमन्दमन्तःपुरान्निववृते । ततः क्रमेण यथार्हं परिक्रम्य भवनानि बन्धूनां गृहाणि सुहृदां सौधान् राज्ञा वेश्मान्यमात्यानां यथाधिकारं संमानितोऽनुज्ञातश्च तैस्तैः शृण्वन्निजगुणप्रशंसाभरितानवधिकनिश्रेयसाशासनगुरून् श्रुतिमधुरान् व्याहारान् जनानां स्वभवनं विवेश ॥

तत्र पूर्वागतैरन्वागतैः राजभिरमात्यैः सुहृद्भिः संभाव्यमानो मणिमयमलंकुर्वन्नासनं, त एव स्कन्धावारनिवेशोचिता प्रभूतयवसाः समासन्नजलाशया विततरुच्छायासंतता अनिम्ना अगण्डशैलविषमाः समास्तल तत्र प्रदेशाः, ते खलु विस्तृताः सुखदायिनोऽप्यतिदन्तुराः अतिपन्थानः, ताः खल्ववस्कन्द्याः राजधान्यः, तथा निवेशनीया तथा नेया च चमूः, अध्वसु च ते वन्द्याः, ते मान्याः, ते दण्ड्याः, ते निष्कास्याः, ते पुनरवस्थापनीया , ते सहैव नेया इति विभजद्भिर्देशानावेदयद्भिर्मार्गं निरूपयद्भिर्गुणदोषान् मीमांसमानैस्तद्रूपानुरूपाणि कार्याणि परिज्ञातसकलदेशवृत्तान्तैरमात्यैरन्यैश्च सह कुर्वंस्तास्ताः प्रास्थानिकीः कथा मुहूर्तमिवासांचक्रे ॥

तदानीमेव दिवो मध्यमध्यारूढेऽम्बरमणौ समासन्नः शुभोदर्कः काल इति ससंभ्रमं समयावेदनमुखरैर्गणकैः प्रेर्यमाणस्तत्क्षणमेव भावावेदिना परिजनेनानीतमुत्तेजनैर्बलविक्रमतेजसां निरसनैर्विपदामुद्भावनैर्मङ्गलानामभिमन्त्रितं मन्त्रगणैरभेद्यं रिपुशस्त्राणामाबद्धं गुरुणा शारद्वतेनामलवज्रमणिप्रत्युप्तं दधानः कवचमिङ्गितवेदिभिर्भारिकैरुपनीतान्यासज्य भूषणानि गृहीत्वाचार्योद्यतं दृढतमं धनुः आबध्य कलापौ आदाय सचर्म खङ्ग तत्समयोचिताभि स्तुतिभिर्वन्दिनामापूर्यमाणदिग्विजयोत्साहः तत्कालासन्नेन राजन्यप्रायेण महावीरज-

नेन परिजनेन च परिवृत अतिक्रम्य पादाभ्यामेव तिस्रः कक्ष्याः, आसन्नभवनवातायनान्तरनिर्गतैः प्रत्यासन्नप्रियविरहचपलैः कटाक्षवलनैरन्तःपुरिकाणां किर्मीरितवर्त्मा आसाद्य चतुर्थीं कक्ष्यां, तस्यां च स्थापितपूर्वं सुशिक्षितेन सारथिना, दृढतरघटितसूत-मुष्टिविधृतखलीनपाशतया आकुञ्चितवदनैः ऊर्ध्वीकृतग्रीवैः उत्पतद्भिर्गगनतलं विचेतुमिव मृषावेगदुर्ललितान् सप्तसप्तिसप्तीन् असहमानैरिव पुरोयानमनुकूलस्य पवनस्य गमनरयनिरोधजनितामर्षहुङ्कारानिव वितन्वद्भिर्घुर्घुरारावान् परिचटुलखरतरखुरपुटविघट्टितकुट्टिमैर्महाप्रमाणैरानीलैश्चतुर्भिस्तुरगैरुह्यमानम्, अत्युन्नतकनकमयदण्डविराजितेन सिंहाङ्कितेन ध्वजपटेन केतनेन विराजमानम्, यथास्थानन्यस्तबहुलगदाशक्तिचापतूणकृपाणमुखहेतिगणम्, विविधमुखदीप्तिवितानमुषितजनलोचनम्, धातुप्रकरशबलितमुदयगिरिमिव दिनमणि साम्रामिकं शताङ्गमारुरोह ॥

ततश्चात्मविभवोचितान्यास्थाय यानानि अनुगच्छद्भिः सुहृद्भिरमात्यै राजसूनुभिः सेनापतिभिश्चानुगम्यमानः तत्कालसङ्घीभूतानां संमर्देन जनानां मन्दीभूतगतिना रथेनैवातिक्रम्यान्याश्चतस्रोऽपि कक्ष्या राजभवनतोरणात् बहिर्निश्चक्राम । तदानीं चाविर्भूतामृतकिरणसंभ्रमसमुज्जृम्भमाणेवाम्भोनिधिलहरी विलोक्य निर्गतं राजानं तत्प्रतीक्षा समुच्चचाल सा सर्वापि चतुरङ्गिणी ॥

ततो 'निष्क्रान्तो नरपतिः, याति द्रुतगतिर्मध्यमध्वनः, समुपगतः सेनानिवेशम्' इति चत्वरेषु प्रादुरभवन् जनानां विविधाः प्रवादाः । तत्र च निजनिर्याणसंभ्रान्ताधोरणाङ्कुशनुन्नैर्मुहुर्मुहु परिकम्प्यमानमस्तकैः प्रचलितकटतटसमुत्पतितमधुकरझङ्कारद्विगुणितबृंहि

तैः प्रबलमहाबलप्रेर्यमाणैरिव घनाघनै. त्वरितगतिभिर्वेतण्डैः सादिगणपार्ष्णिकशाघातदाधाव्यमानैः अश्ववृन्दैः अतिगुरुपरिणाहैः प्रजवितरथ्यैः सपक्षैरिव महीभृत्कुलैरतितुरगै शताङ्गैः विविधशस्त्रपाणिना पङ्क्तीभूय प्रचलताऽसंख्येयेन पदातिबृन्देनानुगम्यमानो धीरतर ध्वनतां ध्वानेन प्रयाणदुन्दुभीनां वीरजनकरकोणाभिताडितानां पटुनिनदेन पटहानां भांकारेण भेरीणा प्रहृष्टवीरजनाभिपूर्यमाणानां बंभारवेण शङ्खानां समरोपचितकौतूहलैर्ध्वनिभि सहेलमाक्षिप्यमाणानां टंकारेण धनुषाम्, किं चास्फोटितैर्बाहुशालिनामट्टहासै शूराणां क्ष्वेलितैर्धीराणां सिंहनादैर्विक्रमिणां गर्जितैर्वीराणां वीरालापैः साहसिकानां साधुवादैः पराक्रमिणां नादमयमिव, अखिलदिशामण्डलव्यापिना दीप्तिवितानेन शूरजनभूषणमणीनां सर्वत प्रसृताभिर्मरीचिभिर्मणिवरूथानां विमलखड्गमण्डलप्रतिफलनधलधलितामिस्तेजोमयामिव, व्याप्नुवता मदजलगन्धेन करटिनां गन्ध मयमिव च रोदोगर्भमाकलयन्, मङ्गलशसिभिर्निमित्तैर्वर्धितयात्रोत्साह. अवकीर्यमाणः कुसुमाञ्जलिभिः सौधोत्सङ्गसङ्गिनीनां नगरविलासिनीनाम्, क्रमेणातीत्य नगरोपकण्ठभुवं दक्षिणपूर्वेण राजधान्या सार्धक्रोशमात्रेऽध्वन्युत्तरेण भागीरथीतटमदन्तुरे मनोहारिणि समेऽतिविततें प्रदेशे प्रथमोपगतैः शिल्पिभिरुपक्लृप्तम्, हिमालयकूटैरिव कलशजलधिवीचिनिचयैरिव पङ्क्तीभूतैरेकवितानैर्द्विवितानैरेकस्तम्भैर्द्वित्रिचतुःस्तम्भै पटमयसौधवलभीवातायनद्वारकवाटैरभ्रंलिहशिखरैरनेकसहस्रसंख्यैः पटभवनै परिवृतेनानुकुर्वतेव कुलगिरिशिखरनिकरपरिगतं कनकगिरिं समुद्वहता तोरणान्तिकसमवस्थापितं राजसंबन्धगौरवकर्णेजपमतिदूरोन्नतं पवनरय-

परिकम्प्यमानसिंहाङ्कितध्वजपटं केतनदण्डमतिबहलवातायनगणभूषितेन कनककपिशक्षौममयेन राजभवनेनोपशोभितम्, यथाक्रमविन्यस्ताभिर्विविधवस्तुगणपूर्णाभिर्विशालदीर्घाभिर्विपणीभिर्विराजमानम्, परितः सुव्यवस्थापितारक्षभटपराक्रान्तम्, विविक्तविनिवेशितविप्रवाटम्, पर्यन्तसमाबद्धाभिः रक्तपताकाभिर्विभाव्यमानवेशवाटम्, समन्ततः प्रतिष्ठितबहुगुल्मम्, तत्र निलयैः सेनापतीनां भवनैरमात्यानां गृहैः सैनिकानां शालाभि कारितुरगखरोष्ट्राणाम् अगारैरायुधानां रथ्याभिराधोरणानां शालाभिः सादिनां निवेशैर्यन्त्राणामावासैः रथकाराणामावसथैः, क्षुरिकाणामापणैर्वैतासिकानां निलयैस्तुन्नवायानां श्रेणिभिः पादूकृतां वेश्मभिः शस्त्रमार्जकानां विपिनैर्मालाकाराणां शरणैर्ग्रन्थिकानां निकेतनैर्भिषजां धामभी रजकानामावेशनै रथधनुःशरेषुशस्त्रकृतामावलिभिर्महीपतिभवनसनिहिताना विकोशशस्त्रधारिभिः बीरपुरुषैरभिरक्षिपर्यन्तानां महार्हरत्नकनकभूषणवसननिवहपूर्णाना शेवधीनामिव कोशानामाहितपरभागम्, सर्वत. परिकल्पितोपरक्षणमसंबाधप्रतोलीचत्वरम्, किंचोत्थाप्यमानैरुत्थितैश्च वितत्यमानैर्विततैश्चाबध्यमानयवनिकैराबद्धयवनिकैश्चान्तःप्रसार्यमाणकम्बलैः प्रसारितकम्बलैश्च परितो नियम्यमानैः नियमितैश्चारोप्यमाणपताकैरारोपितध्वजैश्च दूष्यैराकुलीकृतैकदेशम्, अपि चागतैरागच्छद्भिरवतीर्णैरवतरद्भिश्च यानेभ्यो लब्धावासैरटद्भिर्निवासाय तत इतः स्वजनसंगतैराह्वयद्भिर्वर्गीयांश्च सैनिकजनैः संभृतान्तरम्, पङ्क्तिशोऽवस्थापितैरतिबहुलपाथेयवस्तुनिवहपरिपूर्णैरनेकसहस्रसंख्यैः शकटैर्वलयीकृतप्रान्तम्, घ्राणतर्पणैरुद्वमद्भिरिव विविधफलकुसुमगन्धान् मदिरागृहैरधिवासितम्, शूरजनपरिगुप्ताभिराग्नीविषनिवहपूर्णाभिः पातालगुहाभिरिवायुधशाला-

भिरुद्भासितं, विष्वक्परिभ्रमत्परिचरलोकम्, इतस्ततः पर्यटद्भिः शैलूषमार्दङ्गिकवैणविकप्रायैः जनैरुपसेवितम्, तत्र तत्रोच्छ्रितै. सूचितराजामात्यसेनापतिनिवासं सर्वतो योजनत्रयपरिमितं स्कन्धावारं विवेश ॥

तत्र च प्रथमागतैर्योधैर्महामात्रैरधिकारिभिरमात्यैर्भृत्यैश्च सभाज्यमानोऽतीत्याभिनवागमनसंभ्रान्तानेकनरनिकरचरितांश्चत्वरराजिमार्गान् पुरस्तोरणाबद्धवन्दनमालमलंकृतं पताकाभिरभित ऊर्ध्वस्थितै. र्निशितखड्गकुन्ततोमरप्रासपरिघपाणिभिर्वीरभटैरायुधमयेनेव प्राकारेण परिसेवितं राजभवनं विवेश । ततोऽवतीर्य स्यन्दनादावेद्यमानमरणिः स्तूयमानो वन्दिभिः प्रविश्याभ्यन्तरं तत्र सभान्तरालविन्यस्तमृदुतरास्तरणोपपन्नमासनमध्यतिष्ठत् । तत्क्षणमेव संभ्रमोपगतैराभ्यन्तरै. परिजनैरवतारितकवचभूषणकलापोऽपगतपरिवेष इव शशी पूर्वागतैरन्वागतैश्च प्रवरैरधिकारिभिस्तास्ताः कथाः कुर्वन् मुहूर्तमिव स्थित्वा विसर्ज्य तानभ्यन्तरं विवेश । तेऽपि नरपतिनियोगेन विश्रमेच्छया च प्रेर्यमाणाः स्वं स्वं निवासमुपजग्मुः ॥

तदानीं चोत्सार्य करनिकरैस्तमोबलं प्रताप्य जीवलोकमाक्रान्तवियन्मण्डले कालेनोपाहृतरोचिषि पतत्यपरवारिनिधौ पतङ्गे तत्समयप्रवृत्तनटनसंरम्भविश्लथमहानटजटाजूटप्रभापटल इव प्रसरति सान्ध्ये रागे, तादृक्कपर्दमण्डलोत्क्षुभ्यदभ्रापगातरङ्गसंघटनसमुत्पतितेषु गगनतलविप्रकीर्णेषु शीकरेष्विव लक्ष्यमाणेषु तारागणेषु, तादृग्भूतेशदोधूयमान इव गजाजिनोत्तरीये, पश्चिमपाथोधिपरिपतितज्वलत्तपनमण्डलोद्भूत इव धूमस्तोमे, सकलाभिसारिकाजनप्रार्थनाप्रसन्नेन भगवता कुसुमधन्वना तद्गोपनाय प्रसारित इव नीलतिरस्करणीपटे, अस्तंयतो भगवतः सहस्रभानोर्जिगीषया यथादेशं यथास-

मयं योद्धुमागतानां व्यूह इव दिगन्तविस्तारिणि मन्देहानाम्, मूर्तिमतीव सुकृतपरिपाके निशाटिनाम्, सकललोकदर्शनद्रविणापजिहीर्षिया तद्वञ्चनाय विधूत इवादर्शनाञ्जने प्रदोषमलिम्लुचेन, प्रियविप्रयोगखिन्नाया दिवसश्रियो दुःखावेशविस्रस्तबन्ध इव केशकलापे, जाज्वल्यमानदिनकरप्रदीपशिखासम्पर्कात् वितत्तगगनतलफलकसंक्रान्ते घनीभावाद्विप्रकीर्णे इव कज्जलपरागपटले भुवमाक्रामति सान्ध्ये तमसि, प्रत्यासन्ननिशाकरागमनहर्षितायाः स्मितप्रभानुरञ्जित इव वदने प्राचीसीमन्तिन्याः पाण्डुभावमासेदुषि पूर्वदिग्भागे, तत्क्षणमेव तीक्ष्णकिरणविकिरणोज्जृम्भितस्यापनोदनायातिमहतो जगत्संतापस्य विपुले वियच्चत्वरे कालमान्त्रिकेण प्रतिष्ठापितेनाभिनवाम्रपल्लवच्छादितमुखेनामृतपूर्णेनेव शान्तिकलशेन, विजययात्राप्रवृत्तस्य सकललोकोपलाल्यशासनस्य दर्पकमहाराजस्य धवलेनेव राजलक्ष्मणा, दृढघटिततारागणत्रपुघुटिकानिकरनिचितं वितत्य गगनार्णवे ज्योत्स्नासंतानजालं जिघृक्षतो विरहिहृदयमीनान् कन्दर्पकैवर्तस्याधिष्ठानयानपात्रेणेव प्लवता, समराङ्गणमिव नभोमण्डलं प्रसन्नेन देवव्रतेनेव भास्करेण दुर्दर्शमूर्तिना दुःसहतरैः शरैरिव करैर्नितान्तसंतापितं धनंजयमिव जीवलोकमभिरक्षितुं प्रवृत्तसपक्षपद्माक्षान्तरिक्षोद्यतेनेव सुदर्शनेन, व्योमस्रवत्पूरनिमग्नोत्थितेनाभितस्तत्तटाटवीमटतैरावतेन, विपुलधराभारचिरतरवहनपरिद्यूनस्याहिपतेर्विश्रमार्थमुन्नमितेनैकेनेव मूर्ध्ना, विशालं व्योमशाड्वलं परितश्चरन्तीषु तारागवीषु आबद्धतर्षमनुधावतेव हरवृषभेण, निजकुल निवासमानसासेवनाय सत्यभुवनात् प्रतिनिवृत्तेनेव परमेष्ठियानहंसेन, क्रान्त्वा काष्ठान्तराण्युल्लास्य लोकं निजविरहपरिम्लानाः कैरविणीराश्वासयितुं प्रवासादिवोपावृत्तेन गुरुगौ-

रवात् हृदयगतं मूर्तिमद्दक्षशापमिव लक्ष्मोद्वहता, अपि चाहृतेनेव परितप्तानां करुणरसितैश्चकोरीणाम्, आकृष्टेनेव कटाक्षवलनैः पम्फुल्यमानेन्दीवराणां कुवलयिनीकान्तानाम्, कालाध्यक्षप्रेषितेनेव प्रणयकलहशमनाय यूनाम्, काङ्क्षितेनेव वारिनिधिभिः, भयंकरेण खण्डितानाम्, भीषणेन कलहान्तरितानाम्, प्राणहारिणा वियोगिनीनाम्, भङ्गदायिना कोकानाम्, भागधेयेन विलासिनाम्, चूडामणिना भगवतः शंकरस्योदयमुपगतवता रोहिणीप्राणवल्लभेनाभूष्यत नभोमण्डलम् ॥

तदानीं च निर्विशेषीकृता इव भागीरथीस्रोतोभिः, प्रत्युद्गता इव प्रत्यग्रविकसितैः कुमुदवनैः, उल्लासिता इव जाह्नवीपुलिनैः, उपलालिता इवेन्दुकान्तैः, तिरस्कृता इव स्निग्धतरुच्छायाभिः, द्विगुणिता इव वसनमन्दिरवृन्दैः, संभाविता इव दन्तमुसलैर्दन्तावलानाम्, अवस्कन्दिता इव गजघटाभिः, आवृता इव शस्त्रपटलैः, चित्रिता इव भूषणमणिप्रभाभिः, उत्सारिता इव गहनगुल्मैः, अपि चाह्लादयन्तो लोकम्, अपसारयन्तस्तमांसि, आप्याययन्तश्चकोरान्, अपनुदन्तस्तापम्, ह्लादयन्त प्राणिनः, प्रकाशयन्तो भुवनं प्रसस्रुर्हिमकरगभस्तयः ॥

तत्रान्तरे चलितगङ्गातरङ्गसंगसमुत्पतिततनुशीकरनिकरजनितजडिम्नि, विकचकुवलयकैरवकिंजल्करजःपुञ्जमांसले, विविधवनकुसुमपरिमलाकर्षिणि, विलासिजनोपभुज्यमानधूपानुलेपकुसुमवासनामेदुरे, मत्तवेतण्डगण्डमण्डलोद्भ्रान्तदानधारापूरतुन्दिले, वहत्यन्वर्थां गन्धवहतां, तादृशशैत्यसौरभ्योद्वहनादिव मन्दीभूतरये, भीत इव फणिपतिफणागणानुकारिभ्यः स्कन्धावारदूष्येभ्यः, शङ्कित इव जवाधिकेभ्यो वाजिभ्यः, निजागमनमहोत्सवपरिनटत्कुसुमलतालास्येन प्रति

रुद्धवेग इव सर्वदिक्प्लाविना निस्तन्द्रेण चन्द्रिकापूरेण, प्रवृत्तनिर्भराह्लादस्मित इवामृतकरमयूखैर्मन्थरगताविवोन्मस्तकेन प्रियसुहृत्सौभाग्यावलोकनकौतूहलेन, अपि च जातानुकम्प इव संतप्तेषु निर्भरप्रेमस्तिमित इव रतिश्रमखिन्नासु विलासिनीषु, प्रियमाण इवामृतकरविभूषितेन निजप्रभवेन प्रवाति शनैः शनैर्नैशे नभस्वति तत्संपर्कजनिताह्लादेषु विगताध्वश्रमेषु विश्रान्तेषु सैनिकेषु, नरदर्शनभयाज्ज्योत्स्नाविमलमवगाह्य नभो दूरतस्तारतरमारसमानेषु सत्वसूचकेषु पतत्त्रिषु, रजन्यामपि चन्द्रिकालोकेन दिवसनिर्विशेषायामप्राप्तस्वच्छप्रचारतया निबिडतरुगुल्मान्तर्हितानां वेदनाकूजितैरिव हुङ्कारैः कौशिकानाम् , अपूर्वसेनानिवेशनिरीक्षणत्रस्तानां धावतां वनाद्वनवाशितेन शाटकानां सत्वानां पर्याकुल इव प्रान्तारण्ये, प्रथमयामच्छेदनिवेदनाय वाद्यमानेषु पटहेषु, प्रध्मायमानासु काहलीषु, नरपतिरपि सुहृद्भिः सह निर्वर्तितनैशिकाभ्यवहारकर्मा प्रस्थितेषु यथासमयमिङ्गितज्ञेषु शयनाय वसत्यै समस्तेषु तेषु, अन्वीयमान आसन्नपरिजनेन विमलक्षौममयप्रच्छदपटावच्छादितं सूक्ष्मतरयवनिकापरिवेष्टितपर्यन्तं यथास्थाननिवेशितोचितोपधानमनोहरं विमलमणिकाञ्चनविचित्रितसंनिवेशं पर्यङ्कमारुरोह ॥

तत्र च निपत्य शयनतले नातिदूरस्थितैर्व्यजनपाणिभिरभिवीज्यमानः परिजनैरेकतः पीडितेनेव प्रत्यग्रकान्ताविरहव्यथया, अन्यतो विद्धेनेव मुनिजनवचनैः, अपरतः क्षुब्धेनेव दुर्वृत्तनानादेशनरपालजिगीषया, एकतः समुल्लसितेनेव परिक्षीणधर्मप्रतिष्ठापनहर्षेणान्यतोऽनुविद्धेनेव प्रजारञ्जनकुतूहलेन, एकतश्च दूराकृष्टेनेव विजययात्रया उद्बुद्धेनेवात्मोदन्तेन, तटस्थेनेव तात्कालिकस्थित्या बहुरूपेण मनसा

भावयेत् इति वाक्यार्थः । एवमुच्चैरित्यादौ लुप्तविभक्त्यर्थे करणत्वे प्रातिपदिकस्य लक्षणा । एवम् 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यादौ प्रयाजशेषं हविःषु प्रक्षिपेदित्यर्थात् तृतीयादेः कर्मत्वादिलाक्षणिकत्वं बोध्यम् । एवं ज्योतिष्टोमप्रकरणे 'प्रजापतिरकामयत प्रजाः सृजेयेति । स तपोऽतप्यत । तस्मात्तेपानात् त्रयो देवा अजायन्त अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त । अग्नेर्ऋग्वेदः वायोर्यजुर्वेद आदित्यात्सामवेदः' इत्युपक्रम्य 'उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ना' इति श्रुतेन वाक्येन विधीयमानौच्चैस्त्वादिकं किमृगादिमन्त्रकार्योद्देशेन विधीयते, उत, ऋग्वेदादिविहितकर्मोद्देशेन? इति संशयः । तदर्थमुपसंहारस्थऋगादिपदानुरोधेन उपक्रमस्थवेदपद वेदैकदेशभूतमन्त्रलाक्षणिकम्, उत, उपक्रमस्थवेदपदानुरोधेन उपसंहारस्थऋगादिपदमृग्वेदादिलाक्षणिकमिति विचारणीयम् । अत्र वेदत्वं मन्त्रब्राह्मणसमुदायात्मकग्रन्थविशेषपर्याप्तमखण्डोपाधिरूपम् । ऋक्त्वं च पादव्यवस्थापन्नमन्त्रत्वम् । सामत्वं मन्त्रत्वसमानाधिकरणगीतित्वम् । यजुष्ट्वम् ऋक्सामभिन्नमन्त्रत्वम् । इत्थं च ऋगादिशब्दानां विध्युद्देशगतत्वेन प्राबल्यादुपक्रमस्थार्थवादगतवेदशब्दस्य तदनुरोधेन वेदैकदेशे लक्षणा । अन्यथा विधिस्तुत्योरेकविषयत्वानुपपत्तिप्रसङ्गात् । तथा च ऋचा ऋङ्मन्त्रेण यत् क्रियते उत्पाद्यते तदुच्चैरित्यर्थात् ऋगादिमन्त्रजन्यार्थप्रकाशनाद्युद्देशेन उच्चैस्त्वादिक विधीयते । ततश्च "आनर्थक्यात् तदङ्गेषु" इति न्यायेनार्थप्रकाशनादिजनकऋगादिमन्त्रेषु उच्चैस्त्वादिकं पर्यवस्यतीति प्राप्ते उपक्रमे वेदस्य स्तूयमानतया तत्रावश्यमुद्देश्यत्वं विधेयत्वं वा वाक्ये विवक्षितमिति प्रतीयते,

तद्दशायामुपसंहारस्थऋगादिपदज्ञानरूपविरोधिनोऽसंजातत्वात् । ततश्च उपसंहारे उच्चैस्त्वस्य विधेयस्य लाभात् परिशेषात् वेदस्य उद्देश्यत्वसिद्धौ उद्देश्यसमर्पकऋगादिपदानां वेदतात्पर्यकत्वावश्यंभावात् तदनुरोधेन ऋगादिपदानामृग्वेदादौ लक्षणा । ततश्च ऋचा ऋग्वेदेन यत् क्रियते विधीयते तदुच्चैरित्येवम् ऋग्वेदविहितकर्मोद्देशेन उच्चैस्त्वादिविधाने उक्तन्यायेन तदङ्गभूतमन्त्रेष्ववतार इति ॥

प्रकरण नाम इतिकर्तव्यताकाङ्क्षा । इतिकर्तव्यतात्वं च करणानुग्राहकत्वम् । सर्वत्र हि अशक्तस्य करणत्वायोगात् करणनिष्ठा शक्तिरस्तीति निर्विवादम् । सा च करणतावच्छेदिका करणतारूपा वा । तस्याश्च जन्यवृत्तित्वे जन्यतैवेत्युत्सर्ग. । साग्र्यलाभे परमनादितेत्यपवादः । तथा च करणानुग्राहकत्वं करणनिष्ठशक्तिजनकव्यापारत्वमिति फलितम् । तादृशव्यापाराकाङ्क्षैव प्रकरणम् । तथा चाकाङ्क्षया प्रयाजादिगतप्रयोजनाकाङ्क्षासहितया प्रयाजादीनां तादृशव्यापाररूपतावगमादङ्गत्वसिद्धि । तच्च प्रकरणं द्विविधम्— महाप्रकरणमवान्तरप्रकरण चेति । प्रधानेतिकर्तव्यताकाङ्क्षा महाप्रकरणम् । अङ्गेतिकर्तव्यताकाङ्क्षा अवान्तरप्रकरणम् । यद्यप्यङ्गेतिकर्तव्यताया नाङ्गान्तरग्राहकत्वम्, विनिगमनाविरहात् । तथापि वाचनिकाङ्गद्वयमध्यपठिताङ्गग्राहकत्वमुपपद्यत एव ; वाचनिकाङ्गसंदंशस्यैव विनिगमकत्वात् । यथा – "अतिहायेडोपबर्हिः प्रतिसमानयते', 'जुह्वामौपभृतं प्रयाजशेषेण हवींगृँष्यभिघारयति' इति वचनद्वयमध्ये 'अभिक्रामं जुहोति" इति विहितस्याभिक्रमणस्यावान्तरप्रकरणेन प्रयाजहोमाङ्गत्वमेव । न तु महाप्रकरणेन प्राकरणिकसर्वहोमाङ्गत्वम्, महाप्रकरणादवान्तरप्रकरणस्य बलीयस्त्वात् ॥

स्थानं नाम इतिकर्तव्यतात्वेन संबन्धायोग्ययोः संनिधिः । तच्च द्विविधम्— पाठसादेश्यमनुष्ठानसादेश्यं चेति । आद्यमपि द्विविधम्— यथाक्रमपाठः संनिधिपाठश्चेति । त्रितयमपीदं द्विविधम्— उभयाकाङ्क्षया अन्यतराकाङ्क्षया चेति । अत्रोभयाकाङ्क्षाघटकप्रधानाकाङ्क्षा इतिकर्तव्यताकाङ्क्षाभिन्ना ग्राह्या । तत्र यथाक्रमपाठेन काम्येष्टियाज्यापुरोऽनुवाक्यामन्त्राणामिन्द्राग्नीरोचनादिव इत्यादीनामैन्द्राग्नमेकादशकपालं निर्वपेदित्यादिविहितकाम्येष्ट्यङ्गत्वम् । संनिधिपाठेन च सानाय्यपात्रशोधनविधिसंनिधौ समाम्नातस्य 'शुन्धध्वम्' इत्यादिमन्त्रस्य तदङ्गत्वम् । अनुष्ठानसादेश्येन च पशुधर्माणा दैक्षपशुशब्दिताग्नीषोमीयपश्वङ्गत्वम् ॥

समाख्या च यौगिकं पदम् । यथा ऋग्वेदादिविहितपदार्थेषु हौत्राध्वर्यवादिसमाख्या वेदे याज्ञिकैश्च प्रयुज्यते । तथा च तत्तत्पदार्थे तत्तत्कर्तृकत्वसिद्धिः । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामेलने पूर्वपूर्वापेक्षया उत्तरोत्तरस्य दौर्बल्यम्, विलम्बितप्रवृत्तिकत्वात् । तथा हि— लिङ्गस्य श्रुतिकल्पनाद्वारैव विनियोजकताया उक्तत्वात् विलम्बितप्रवृत्तिकत्वं स्पष्टम् । अत एव 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति गार्हपत्योपस्थानाङ्गतया विनियुक्तस्य कदाचन स्तरीरसिनेन्द्रसश्च सिदाशुषे' इति मन्त्रस्य न लिङ्गादिनाङ्गत्वम्, लिङ्गेन श्रुतिकल्पनाद्वारा इन्द्राङ्गत्वबोधनात् प्रागेव ऐन्द्येति प्रत्यक्षश्रुत्या तृतीयारूपया गार्हपत्योपस्थानाङ्गत्वबोधनेन मन्त्रस्य नैराकाङ्क्ष्येण लिङ्गेन श्रुतिकल्पनाप्रतिबन्धात् । एव वाक्यस्यापि लिङ्गकल्पनाद्वारा श्रुतिकल्पकतयैव विनियोजकत्वात् लिङ्गापेक्षया दौर्बल्यम् । तथाहि— अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतरविषयकश-

क्त्यनधीनबोधप्रयोजकपदद्वयसमभिव्याहारो वाक्यम् । तस्य च योग्यताज्ञानं विना लक्षणादिना कर्मत्वादिबोधकत्वानुपपत्ते योग्यतारूपलिङ्गपरिशीलनमपेक्षितम् । ततश्च श्रुतस्यैव पदस्य कर्मत्वादिलक्षकत्वाङ्गीकारेण तत्तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनात् श्रुतिकल्पकत्वव्यवहारः । ततश्च वाक्यं लिङ्गं श्रुतिं च कल्पयित्वा विनियोजकमिति वाक्यस्य लिङ्गात् दौर्बल्यम् । एवं प्रकरणं वाक्यादित्रयकल्पकतया विनियोजकम् । तथाहि— प्रधानगतेतिकर्तव्यताकाङ्क्षया प्रयाजादिगतप्रयोजनाकाङ्क्षासहितया तत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशत्वरूपपारिभाषिकपदसंनिध्याख्यवाक्यकल्पनया निरुक्तपदानां च स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनानुकूलयोग्यताकल्पनया च 'समिधो यजति' 'इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति अश्रुतेतिकर्तव्यतात्ववाचीत्थंपदरूपश्रुतिकल्पनया च इतिकर्तव्यतात्वरूपक्रुतिकारकत्वमवगम्यत इति ॥

एवं स्थानमपि प्रकरणादिचतुष्टयकल्पकतया विनियोजकम्, इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य तत्र कल्पनीयत्वात् । प्रकरणस्य च वाक्यादिकल्पकतयैव विनियोजकताया उक्तत्वात् । एवं समाख्यया अवयवार्थयोः संबन्धे संसर्गमर्यादया बुद्धे सति न तन्निर्देशान्यथानुपपत्त्या स्वतन्त्रविधिकल्पना, गौरवापत्तेः । किं तु अन्वाधानादिवाक्यस्य 'अध्वर्युं वृणीते' इति वाक्यस्य च एकवाक्यतासंपादकपदमात्रं कल्प्यते 'यमध्वर्युं वृणीते सोऽग्नीनन्वादधाति' इति । तच्च द्वयोर्विध्योः कथंचिदस्त्वेकबुद्धिस्थतेत्येवंविधस्थानकल्पना विना न संभवतीति तत्कल्पनापूर्वकमध्वर्योरङ्गत्वबोधकाका-

ङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्महावाक्यैकदेशत्वाख्यपदसंनिधिरूपवाक्यं कल्प्यते। तेन चाध्वर्युनिष्ठयोग्यतारूपलिङ्गकल्पनया एकवाक्यतासंपादकपदरूपश्रुतिः कल्प्यत इति समाख्यायाः स्थानादिपञ्चककल्पकतया विनियोजकत्वं बोध्यम् ॥

एवं श्रुत्यादीनां विरोधेन बलाबले व्यवस्थिते। इत ऊर्ध्वमध्यायशेषेण विरोधसदसद्भावविचारः। तथाहि— ज्योतिष्टोम एव श्रूयते— 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति। तत्र वाक्यप्रकरणयो विरोधोऽस्ति उत नेति संशय। तदर्थं चाहीनशब्द किं हीनो न भवतीत्यहीन इति व्युत्पत्त्या ज्योतिष्टोमपर, उत, 'अह्न ख. क्रतौ' इति विहितखप्रत्ययान्ततया द्वादशाहपर इति विचार्यते। तत्र प्रकरणाविरोधायाहीनशब्दो नञ्समासः सन् ज्योतिष्टोमपर। एवं साह्नशब्दोऽपि अह्नासमाप्यमानतया तत्पर। ततश्च ज्योतिष्टोमे उपसदा त्रित्वद्वादशत्वयोर्विकल्प इति प्राप्ते, अहीनशब्दस्य 'अह्न. ख क्रतौ.' इति स्मृत्या वैदिकप्रयोगाच्च योगरूढतया रूढ्या ज्योतिष्टोमाद्येकाहव्यावृत्ताखण्डोपाध्यवच्छिन्नस्यैव बोधनात् वाक्यप्रकरणयोर्विरोधावश्यंभावात् बलवता वाक्येन द्वदशाह एव द्वादशोपसत्त्वविधिरिति ॥

इति तृतीयाध्याये तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

चतुर्थे पादे "निवीत मनुष्याणाम्" इत्यादे. विरोधाविरोधहेतुभूतविधित्वार्थवादत्वविचार.। तथाहि— दर्शपूर्णमासयोः "नि-

वीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते" इति श्रूयते । तत्र निवितं मनुष्याणामित्यादेः विधित्वमर्थवादत्वं वेति विशयेऽर्थवादमात्रस्यानर्थक्यात् विधित्वमेवेति प्राप्ते उपव्ययत इति उपवीतविधिसंनिहितस्यार्थवादतया तदेकवाक्यत्वसंभवे वाक्यभेदापादकविधित्वाश्रयणस्यान्याय्यतया अर्थवादत्वमेवैवंविधानामिति ॥

## इति तृतीयाध्याये चतुर्थः पादः ॥

---

## अथ पञ्चमः पादः ॥

पञ्चमे पादे प्रतिपत्तिविचार । तथा हि— उपांशुयाजप्रयाजाज्यभागानूयाजादिद्रव्याणां स्विष्टकृदिडादीनि शेषकार्याणि कर्तव्यानि वा, न वा, इति विशये, सर्वेभ्यो हविर्भ्यः समवद्यतीतिवचनबलात् अङ्गप्रधानसाधरणसर्वहविरर्थत्वप्रतीतेः कर्तव्यानीति प्राप्ते, तत्तद्याज्याक्षिप्तविशेषप्रतिपत्तिसत्त्वात् न सामान्यविहितविद्यमानशेषोपक्षीणस्विष्टकृदादिप्रतिपत्तिग्राहकत्वमिति न तेषां स्विष्टकृदिडादीनि शेषकार्याणि कर्तव्यानीति ॥

## इति तृतीयाध्याये पञ्चमः पाद. ॥

---

## अथ षष्ठः पादः ॥

षष्ठे पादे अनारभ्याधीतविचारः । तथा हि— अनारभ्याधीतेन 'यस्य पर्णमयी जुहूर्भवति न स पापँ्श्लोकँ् शृणोति,' इत्यादिना विहितपर्णतादीनां किं प्रकृतिविकृतिसाधारण्येन विधानम्, उत, प्रकृतिमात्रे? इति विशये अविशेषात् प्रकृतिविकृतिसाधारण्ये-

नैव विधानमिति प्राप्ते, जुहूद्देशेन विधीयमाना पर्णता जुहूप्राप्त्य नन्तरमेव विधेया । विकृतिषु च जुहूरतिदेशेनैव प्राप्यते । अतिदेशप्रवृत्तिश्च प्रकृतौ यावदङ्गावगतिसमनन्तरमेव । ततश्च प्रथमं प्रकृतौ पर्णताविधानानन्तरं विकृतौ तद्विधानं वाच्यमिति विरम्यव्यापाररूपद्विरुक्तिदोषप्रसङ्ग । अत प्रकृतिमात्र एव तद्विधानमिति ॥

## इति तृतीयाध्याये षष्ठः पादः ॥

---

## अथ सप्तमः पादः ॥

सप्तमे बहुप्रधानोपकारकविचार । तथा हि-- दर्शपूर्णमासप्रकरणे 'वेद्यां हवींषि आसादयति । बर्हिषि हवींषि आसादयति' इति विहितवेद्यधिकरणकमासादनं किं प्रधानहविर्मात्रार्थम्, उत, अङ्गप्रधानसाधारणसर्वहविरर्थमिति विशये प्रकरणात् प्रधानहविर्मात्रार्थमिति प्राप्ते, प्रकरणेन वाक्यसंकोचायोगात् असंकुचितेन वाक्येनाङ्गप्रधानसाधारणसर्वहविरर्थत्वमेवेति ॥

## इति तृतीयाध्याये सप्तमः पादः ॥

---

## अथ अष्टमः पादः ॥

अष्टमे पादे स्वामिकर्मविचार । तथाहि— वरणं दक्षिणादानं च यजमानेन कार्यम्, उत, अध्वर्य्वादिभिरिति विशये समाख्याबलात् अध्वर्य्वादिभिरेव कार्यम् । तत्राध्वर्युरितरेषां वरणादिकं कुर्यात् । यथा अध्वर्युः स्वद्रव्येण इतरान् परिक्रीणीयात् तमुपायं यजमानः कुर्यात्, अध्वर्योश्च वरणं प्रतिप्रस्थाता कुर्यात्, इति प्राप्ते,

वरणाभावे अध्वर्युत्वस्यैवासंभवात् अध्वर्युत्वसंपत्तये क्रियमाणस्य प्राथमिकवरणस्य असमाख्यातकर्तृकत्वावश्यंभावात् वरणे समाख्याबाध आवश्यकः । एवं दक्षिणादानेऽपि उपायान्तरकल्पने गौरवात् प्रयोगवाक्यावगतस्वामिकर्तृकत्वबाधापत्तेश्च समाख्याया एव केवलाया बाधः । अतश्च वरणं दक्षिणादानं च स्वामिकर्तृकमेवेति ॥

इति तृतीयाऽध्याये अष्टमः पादः ॥

समाप्तश्च तृतीयोऽध्यायः ॥

# ॥ अथ चतुर्थोऽध्यायः ॥

## प्रथमः पादः ॥

इत्थं पादाष्टकपरिमितेन तृतीयाध्यायेन शेषिनिरूपितशेषत्वविचारे वृत्ते चतुर्थेन प्रयोजकनिरूपितप्रयोज्यत्वविचारः क्रुतः । तत्र प्रयोजकत्वमनुष्ठापकत्वम् । तच्च यद्यपि विधेरेव, तथापि यदुद्देशेनानुष्ठानं विधिना बोध्यते, तत्रापि प्रयोजकत्वव्यवहारः शास्त्रे । तथाचानुष्ठापरपर्यायकृत्युद्देश्यतया विधिविषयत्वं प्रयोजकत्वम् । तद्विधेयतया विधिविषयत्वं प्रयोज्यत्वमिति फलितम् । तत्र क्रत्वर्थानां क्रतुः प्रयोजकः । पुरुषार्थानां तु फलम् । ततश्च क्वचित् क्रत्वर्थत्वादिविचारमुखेन, क्वचित् साक्षादेव च इह प्रयोजकत्वविचारः । तत्र प्रथमे पादे क्रत्वर्थत्वादिस्वरूपनिरूपणपूर्वकं प्रतिग्रहादेः क्रत्वर्थत्वपुरुषार्थत्वविचाररूपः प्रधानस्य प्रयोजकत्वविचारः । तथाहि— स्वयं प्रार्थितफलोद्देशेन विहितत्वं पुरुषार्थत्वम् । फले पुरुषार्थत्व-

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिराद्दता प्रतिकल परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्ष आश्विनमासः । [संचि. ७.

## सुभाषितानि ॥



नैतद्वारिज! युक्तमङ्ग! जगतामानन्दसंदायिन.
शीतांशोरुदयासहिष्णु परमां धत्से समुद्विग्नताम् ।
सत्यं यद्यपि तुल्यरूपमुभयोरब्जाभिधानं तत:
किं शक्नोषि नवोपलान् द्रवयितुं हर्तुं चकोरीतृषम् ॥१॥

चन्द्रोदये विमुखतामुपयासि चेत् त्व
नो हीयते किमपि तस्य सुधामयांशो ।
यत् कैरवाणि विकसन्ति हसन्ति च त्वा-
मम्भोज! तत्तु परिकृन्तति मानसं मे ॥ २ ॥

रे पङ्कज! त्वमचिरोदितशीतभानुं
दृष्ट्वा विषादमुपयासि किमत्र चित्रम् ।
यन्मोदसे सह जडैरपि नीचवृत्तै:
जानाति ते हृदयमेव तमोषधीशम् ॥ ३ ॥

वि. कृष्णमाचार्यः ।

# श्रीसदाशिवेन्द्रसरस्वती ॥

(पूर्वतोऽनुवृत्तम्)

———※———

अथैकदा परमात्मतत्वसौधाग्रविलसदन्त:करणोऽसौ योगिवर्य: काननेषु परिभ्रमन् कुत्रचिद्राजाधिकारिनिमित्ते पाकसाधनानीन्धनानि राशीकुर्वद्भि: सेवकैर्यदृच्छयादर्शि । तैश्च हृष्टपुष्टाङ्गोऽयं भारवहनायालमिति हठादाकृष्ट: शिरसि निक्षिप्तकाष्ठभार: सहैव तैर्भारवाहिभिर्ग्रामं नीतोऽभूत् । यावत्राधिकारिणो गृहाङ्गणेषु पूर्वमेवान्यै: सज्जीकृतेष्विन्धनसंचयेषु सयमीन्द्र: स्वीयमपि काष्ठभारं न्यक्षिपत्तावदेव क्रोधेनेव प्रस्फुरत्स्फुलिङ्गेन प्रवर्धमानज्वालालीढेन्धनराशिना कल्पान्तानलकठोरेण जातवेदसा क्षणादेव भस्मीकृतमासीदधिकारिण. सदनमखिलम् । तदद्भुतं निरीक्ष्य ‘हन्त! धिगस्मानज्ञानादस्मिन्महानुभावे महापराधमाचरितवत:’ इति नितरामन्वशोचन्त सेवका राजाधिकारी च— इति तत्कालवेदिनो मन्त्रयन्ते ॥

पामरा हि जना अणिमाद्यष्टैश्वर्यसंयुक्तं सिद्धेश्वरमेनं तथात्वेनाविज्ञाय उन्मत्तोऽयमित्याकलयन्ति स्म । निरपराधमधुरवयसि वर्तमाना बालकाश्च तं रथ्यासु शून्यहृदयवत्परिभ्रमन्तमुत्साहेन परिवार्य केचन शिरोरुहाणि केचन हस्ताग्राणि केचन पादाङ्गुष्ठांश्चाकृष्यात्मानं विनोदयामासु. । योगीन्द्रोऽपि तेष्वर्भकेषु निरतिशयां प्रीतिमावहन् अन्यैर्दत्तानि भक्ष्याणि तेभ्यो दत्वोपच्छन्दयन्स्नेहमदर्शयत् । एकस्मिन दिवसे बालकास्तं परिवार्य ‘तात! मधुरापुर्यामद्य वृषभवाहनमहोत्सवो भवति सुन्द-

रनाथस्य' इति शृणुमः । तन्महेश्वरं सेवितुमस्मांस्तत्र नेतुमर्हसि इत्यवदन् । अशक्यमिदमिति जानतामपि तेषामिदं परिहासजल्पितमाकर्ण्य सदाशिवः तान् आत्मनः शिरसि अंसद्वये चारोप्य अक्षीणि क्षणं निमीलयतेति संज्ञामकरोत् । तेऽपि तथैवान्वतिष्ठन् । अनुक्षणमेव यावल्लोचनान्युन्मील्य पश्यन्ति, तावन्महता भक्तिपरवशेन जनौघेन परिवार्यमाणं महावृषभस्य पृष्ठे देदीप्यमानं नृत्तगीतवाद्यादिभिः संगीतसुखमनुभवन्तं भगवन्तं सुन्दरेश्वरं साक्षादकार्षुः । अवागच्छंश्च मधुरानगरचत्वरे सह सदाशिवेन स्वेषामवस्थितिम् । विस्मिताश्च 'स्वप्नो वा किमियं माया किमु वा चित्तविभ्रम.' इत्यन्योन्यमुपांशु मन्त्रयामासु. । संयमीन्द्रोऽपि तेषां बालकानां यथाभिमतं मोदकादिभक्ष्यजातं दत्वा नितरामानन्दयामास । बालकाश्च किमिदमित्याश्चर्यमेदुरान्तरङ्गाः महोत्सवदर्शनानन्दनिर्भरा प्रभातप्रायामपि रजनीं नाज्ञासिषु. । उत्सवान्ते च सदाशिवेन यथापूर्वं स्वीयं ग्राममानीताः कुतूहलचञ्चललोचनाः अद्भुतमिदं जननीभ्यो निवेद्य भुक्तशेषं भक्ष्यजातमपि प्रदर्श्य वृषभोत्सवं यथानुभूतमनुवर्णयामासुः ॥

महाशिवरात्र्यादिमहोत्सवदिवसेषु वाराणसीमधुरारामेश्वरादिदिव्यक्षेत्रेषु एकस्यामेव रात्रावसौ संयमीन्द्रः साक्षात्कृतः तत्तद्देशवासिभिरिति च शृणुमः ॥

अनाघ्राताक्षरगन्धः कश्चिद्ब्रह्मचारी कदाचिदेतं संयमीद्रं भक्तिप्रवणेन मनसा सर्वतोऽनुगच्छन्नुपासांचक्रे । तदीयेनोपासनेन प्रसन्नः सदाशिवः करुणार्द्रया दृशा तमसकृदवलोकयन्नन्वगृह्णात् । एकदासौ वर्णी श्रीरङ्गे यमिनां योगदृष्टेरञ्जनं देवं रङ्ग-

नाथं सेवितुमात्मनोऽभिलाषं तस्मै सप्रश्रयं न्यवेदयत् । 'तर्हि क्षणं लोचने निमीलय' इति संज्ञामकरोन्मौनी सदाशिवः । सोऽपि यथानिर्देशमाचर्यानुक्षणमेव लोचने उन्मील्य कर्पूरनीराजनेन संभाव्यमानस्य श्रीरङ्गनाथस्य पुरतः साक्षादवस्थितमात्मानं पार्श्वे सदाशिवं चापश्यत् । अथ कतिपयनिमेषापगमे संयमीन्द्रः स्वयमन्तर्हितोऽभूत् । तददर्शनेन विषण्णहृदय. स वर्णी आसन्नवर्तिषु मण्टपेषु प्राकारेषु देवालयेषु चान्विष्य विफलप्रयत्नः पादचारेण महान्तमध्वानं विलङ्घ्य कतिपयैरहोभिः करूर् जनपद माससाद । तत्र च समाधिस्थ संयमीन्द्रं साक्षात्कृत्य भक्तिपरवशः तत्पादयो. पतित्वा सर्वमप्युदन्तं व्यजिज्ञपत् । सोऽपि दयार्द्रहृदयः सैकते अक्षराणि विलिख्य तस्मै मन्त्रानुपादिक्षत् । अनुपदमेव तस्य साङ्गाः सरहस्या आम्नाया सकलाश्च विद्या हृदि प्रादुरासन् । पण्डितोत्तंस इति राजभिरादृतो मानितश्च स वर्णी पौराणिको भूत्वातुलां संपदमार्जितवान्— इति कथयन्ति वर्षीयांसः पुरावृत्तविचक्षणाः ॥

अगणितदेहाभिमानोऽयं संयमीन्द्रः अनवरतमानन्दमये ब्रह्मणि संसक्तमानसः अकुतोभयः अप्रतिहतगतिरवनितले परिभ्रमन् कदाचिन्नारीमणिभिरापूर्णं कस्यचिद्यवनमहीपतेरन्तःपुरं यदृच्छया प्राविक्षत् । अवधूतवेषेणासूर्यपश्यानां राजदाराणामन्तिके चरन्तमेनमवलोक्य सद्यः क्रोधेन ज्वलन्यवनः कृपाणमाकृष्य तस्य योगिवर्यस्य बाहुमेकमच्छिनत् । सदाशिवस्तु निकृत्तो बाहुरित्यविज्ञायैव स्वस्थवदविकारदर्शनो यथापूर्वं तस्मात्प्रदेशादन्यत्र गतोऽभूत् । तादृशीमस्य मनोगतिमवगत्य विस्मयमापन्नो

यवनाधिपः 'महात्मासौ संयमीन्द्रो मया जाल्मेन निकृत्तपाणिरपि किंचिदप्यविगणय्य हृष्टान्तरङ्गो विचरति, अस्य प्रसादनादृते सुखं प्राणितुं न शक्यते वित्तमदमत्तेन सदसद्विवेकशून्येन मया' इत्यात्मानं विनिन्दन् शोकाविष्टचेतनः तमेव संयमीन्द्रं पृष्ठतोऽनुजगाम । अनुससार च छायेव तं सुबहूनि दिनानि । तथानुधावन्तमगणितशीतातपादिखेदं तं यवनमुद्वीक्ष्य दयाविष्टः सदाशिवः 'किमर्थमेव मामनुसरसि?' इति संज्ञया अप्राक्षीत् । सोऽप्यात्मनानुष्ठितस्य महापराधस्य क्षमापणमयाचत । कीदृशोऽयमपराधः? इति पुनरनुयुक्त 'भगवन्! अज्ञेन मया करवालेन भगवतो बाहुरेको निकृत्तः' इति सास्रं व्यजिज्ञपत् । तदनन्तरमेव छिन्नमात्मनो बाहुं विज्ञाय अन्येन पाणिना निकृत्तमसदेशं ममार्ज । सद्य एव यथापूर्वमन्य बाहुं तत्स्थाने प्ररोहन्तं दृष्ट्वा भीतभीतो यवनः दण्डवत्प्रणम्य तदीयमनुग्रहं प्रार्थयामास । योगीन्द्रोऽपि तथेत्यनुगृह्य यथागतमगात् । इदं चात्यद्भुतमपदानमेवमनुवर्णयन्ति सदाशिवेन्द्रस्तुतावभिनवनरसिंहभारतीस्वामिन श्रीमच्छृङ्गगिरिपीठमलंकुर्वन्तो यतिसार्वभौमाः—

"योऽनुत्पन्नविकारः बाहौ म्लेच्छेन छिन्नपतितेऽपि ।
अविदितममतायास्मै प्रणतिं कुर्मः सदाशिवेन्द्राय ॥

पुरा यवनकर्तनस्रवदमन्दरक्तोऽपि यः
पुनः पदसरोरुहप्रणतमेनमेनोनिधिम् ।
कृपापरवशः पदं पतनवर्जितं प्रापयन्
सदाशिव यतीट् स मय्यनवधि कृपां सिञ्चतु ॥" इति ॥

(क्रमशः ।)

भो. श्रीमन्त आर्यमिश्राः (सहृदयासंपादकाः)।

ममाप्येषा परिमिता वाणी श्रीशालिनं जार्जमहाराजमधिकृत्य प्रवृत्ता। अननुमतप्रवेशा नैषा राजदर्शनमर्हति। तदपि गुणरागिणी गुणवतः प्रभोर्गुणलेशकथनेनापि स्वमात्मानमेव कृतार्थयन्ती नापराध्यति। असत्यपि गुणान्तरे प्रतिपाद्यमहिम्ना सहृदया हृदये करिष्यत्येनामिति मे विश्रम्भः। उक्तं च महत्तरैरपि—

'कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति।
नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः॥' इति॥

लोकोत्तरैरिह गुणैः परिकर्मितश्रीः
मान्यो महापुरुष एक उदेति लोके।
वाग्योषितो निजवयोगुणरूपविद्या-
वैषम्यमप्यविगणय्य भजन्ति रागात्॥

इति ति. ई. श्रीनिवासाचार्यः।

श्रीशालिन्, प्रणतसमस्तसामन्तक्षितिपालमौलिमालायमानमहनीयशासन, जार्जनरेन्द्रमणे, गुणानुरागिणी भारतीयं वसुमती कालवर्षोल्लसितनवप्ररोहसस्यमालालंकृता पतिंवरेव त्वत्परिग्रहकाङ्क्षिणी साक्षात्परिग्रहबहुमानं त्वयाद्य दीयमानमासाद्य माद्यति। प्रोषितभर्तृकेव चिरादलब्धभर्तृदर्शना दूतीविस्रम्भशरणा सुरक्षितापि नात्मनि समग्रां प्रीतिमलभत। सांप्रतं तु साक्षात् पतिप्रणयलाभप्रमुदिता कामपि समुन्नतिमभिनवामनुभवतीति प्रकृतीनामुत्साहैः सूच्यते। सेवा हि नाम महदपचयस्थानं मानधनानाम्। सेव्यगुणातिशयस्तु परं तामपि

बहुमानरूपां परिणमयति । तदेवं त्वया सनाथो लोकोऽयं कृत्स्न एव कृतार्थमात्मानं संभावयति । यदि च नाम महाप्रभावस्य शासितुः शासनं विष्वक्प्रसृतं नाभविष्यत् किं तदा सूर्याचन्द्रमसो. प्रकाशेन मन्दानिलस्य वा परिस्पन्देन अन्यैर्वा गन्धरसादिभिः महाभूतगुणैर्जना सुखमध्यगमिष्यन् । अत. प्रकृष्टप्रभावस्य प्रकृतिवत्सलस्य भवद्विधस्य राज्ञः सूर्यादीनुपमानयन्त कवयो वितथस्तवपरिवादमषीलेपस्य न पात्रीभवन्ति इति धन्या पृथिवी । प्रकृष्टभागधया वयं प्रकृतय· ॥

## ॥ श्रीमच्चक्रवर्त्यभिषेकमञ्जरी ॥

श्रीमज्जार्जमहीमहेन्द्र भवता राजन्वती मेदिनी
कीर्तिस्ते हरितां मुखेषु सुमनोदामश्रिय गाहते ।
दीपांशोरिव तेजसा प्रसरता व्यस्त समस्तं तम.
पद्मानीव मनांसि भारतजुषां प्राप्तप्रसादानि नः ॥ १ ॥

कारुण्यामृतसंप्लुता शशिकलालावण्यपुण्यश्रियं
राज्ञामानतमौलिरत्नवलभीविश्रान्तपादाम्बुजाम् ।
यां सन्तो विविदुः सुधाम्बुधिसुतां साक्षान्महीं शासितुं
प्राप्ता कारणतो गुणैरधिगतैरापूरयन्तीं जगत् ॥ २ ॥

तस्या विक्टोरियाया निजगुणमणिभिर्भूषयन्नन्ववायं
मेरीहंसीसहायो निखिलजनदृशां गोचरो राजहंसः ।
भूपद्मं सागराम्बुस्थितमतिमुदितं विस्तृतद्वीपपत्रं
विष्वक् क्रामन् क्रमेण व्यतिषजति महामानसो मानसं नः ॥

तेजो दुष्प्रसहं प्रसन्नमधुरं शीलं च पाल्ये जने
सर्वोत्तुङ्गपदस्थितिर्न लघुतावज्ञा तृणेऽप्यागते ।
प्रौढानामपि दुर्ग्रहा मतिगतिर्बालेष्वपि स्निग्धता
त्वय्येते सुहृदो मिथोऽननुगुणा येऽन्यत्र नैकाश्रयाः ॥ ४ ॥

चन्द्रो याति कलाविलोपमसकृत् स्वर्भानुना ग्रस्यते
लक्ष्मीमुज्झति दर्शने दिनकृत. पूर्णः कलङ्काविलः ।
अप्रक्षीणकलाकलापभरित· प्रत्यर्थिनां दुर्जयः
नित्यश्रीरकलङ्कशुद्धचरितो जार्जस्तु भूचन्द्रमा ॥ ५ ॥

लक्ष्मीं भारतवर्षतो विगलितां प्रत्यानयन्नीश्वरः
कालाद्रिं विधियोक्त्रपाशयमितं क्षिप्त्वा ममन्थोदधिम् ।
अङ्ग्लाधीशकुलात्मकं तदुदितां विक्टोरियामिन्दिरां
एड्वर्डं शशिनं च जार्जनृपतिं मन्यामहे चामृतम् ॥ ६ ॥

अम्भोधेर्मथिताद्धि पञ्चतरवः चिन्तामणि· कामधुक्
लक्ष्मीरप्सरसः सुधाकरमुखाः जाता विभिन्नक्रियाः ।
देवान् प्रापुरतो महीं महयता देवेन सर्वान् गुणा-
नेकत्रोपनिधाय निर्मित इव श्रीजार्जदेवः प्रभु· ॥ ७ ॥

जार्जक्षितीश्वरनिरस्तसमस्तदोषे
त्वय्येकमेव विकलं प्रतियन्ति सन्त. ।
तत्तादृगुज्ज्वलगुणानपि पूर्वभूपान्
विस्मारयन्निजगुणैरुदयं यदेषि ॥ ८ ॥

(क्रमशः)

# विजयिनी ॥

( पूर्वतोऽनुवृत्तम् )

मोदः श्रीगिरिजाधवस्य भवतात्प्रेमप्रकर्षाय नौ
क्रोधोऽप्यस्य समस्तवैरिजनतानाशाय संपद्यताम् ।
आश्लिष्यद्गिरिजागजाननवपुः, संबद्धगङ्गाखुभुक्
भूयाच्छ्रीशशिशेखरः कलिमतां शान्त्यै सतां सर्वदा ॥ १ ॥

इत्येवंविधाभिर्नुतिभिरीश्वरमनुनीयाभिलषितपूर्त्या परितुष्टसकलेन्द्रियौ तावीश्वरसूरेरप्याशिषं सादरं सप्रणाम च परिगृह्य धृतज्योत्स्नाम्बरायां शर्वर्यामुद्यानक्रीडासुखोपभोगाय देवायतनाद्बहिः क्षणमभूताम् । निशीथात्प्रागेव विजयिनी स्वात् गृहान्निववृते । रत्नाकरस्तु तद्विरहसन्दानितमना यत्र कुत्रापि परिभ्रम्य निशावसाने गृहाभिमुखं गन्तुमना बभूव ॥

सरसरमणीयः खलु तदा रत्नाकरस्य प्रभातसमय आसीत् । चेत प्रियेण विजयिनीलाभेनोत्साहितेन्द्रियगणोऽभिनवजीवनसंपदा युक्त· प्रमदवनोपवर्धित इव तरु. रत्नाकर प्रभातरामणीयकाकृष्टहृदयः क्षणमुपत्यकायामाहिण्डमानोऽतिष्ठत् । अधस्तादपहृतधान्येषु केदारखण्डेषु घासार्थं चरन् गोसमज. सन्निहितवत्सत्वाद्विशेषेण प्रीत इवादृश्यत । गिर्यग्रमपि अहमेव तिग्मकरकिरणानुग्रहस्य प्रथमं भाजनमिति विशेषेण प्रीतमिव विभातवायुना कम्पितैर्वृक्षाग्रैः स्वाभिख्यापोषकमुदयगिर्यारोहणोन्मुखं चण्डांशुमाह्वयतीव, तदागमनाशयैव समुत्पन्नमात्मनस्तोषं तरुकुहरविलीनाण्डजविरावामिषेण प्रद

र्शयतीव, तत्स्वागतार्थं चोत्सृष्टनिद्रो मृगगणः इतस्ततः सञ्चरणेन साधनानि संगृह्णातीव, तरुभिः शाखाग्रस्थितान् हिमबिन्दून् दिनराजपथप्रसाधनाय पातयतीवेति चिन्तयन् आनन्दमय इव भूत्वा आनन्दितमिव प्रेमपरीतमिवात्मानमिवाखिलं जगदालोकयन् विस्मृतान्यकरणीयस्तत्रैव मन्दमन्देन पदा आहिण्डमानोऽवतस्थे ॥

यथासमयं च प्राचीपर्वतप्रतिष्ठां प्राप्तः प्रभातप्रदीपकः प्रबोधसाधनं भगवान् सहस्रकिरणः । सरासीव जनमनांसि प्रमुदितानि कुर्वन्नभिनवाभ्युदयसंपत्तेः फलं दुर्विनीतेभ्योऽभिनवलक्ष्मीसमालिङ्गनसञ्जातावलेपेभ्यः समुपदर्शयितुमिव कृतोद्यमः, तिग्मरश्मिरपि प्रभातसमयत्वेनाङ्गीकृतमन्दप्रभः प्रथमाक्रमणे मन्दतेजस्त्वमेव श्रेय इति राजनीतिशौण्डेभ्यो निवेदयितुमिवोररीकृतायासः, अल्पप्रभत्वेऽप्युच्चैरवस्थानं मन्दतेजसां राज्ञामखिलावनीसमाक्रमणशक्तिं ददातीति चोपदेष्टुं स्वीकृतगोत्राग्रारोहणश्रम इवालुलोके भास्करः । रत्नाकरोऽपि अमुना रत्नप्रभावदात्मनस्तेजसानुगृहीतं जगतीतलमालोक्य क्षणेन प्रपद्य च प्रकृतिमुपत्यकात्यागाय गृहगमनाय च कृतमना बभूव ॥

यावद्रत्नाकरः उपत्यकां परित्यज्य राजमार्गाक्रमणं क्रमते तावन्मध्येपथं कश्चित्समुदायः कलहस्य परां काष्ठामारूढस्तस्य नयनविषयोऽभूत् । सरभसं तत्र गत्वा यावदवलोकयति तावदात्मीयाभ्यां भट्टराजमारविजयाभ्यां सह तारस्वरेण विवदमानं कार्तवीर्यपक्षीयेण महता सहचरगणेनानुगतं विजयिनीभ्रातरं तारकापतिनामानमद्राक्षीत् । आमलकीभोजनप्रसङ्गे रत्नाकरोऽन्येऽपि केचनास्य सहचरा वेषान्तरं परिधाय कार्तवीर्यसमाजे सन्निधिमकार्षुरिति ज्ञातवान् तार-

कापतिर्भृशं क्रुद्धः 'किंप्रयोजनं त्वां तत्रानयदित्यस्य कारणमनिवेद्यैव न भवान् गन्तुं प्रभविष्यति' इति मारविजयं साभिनिवेशमप्राक्षीत् । सोऽपि 'नाहं तदा तत्राभूवम्, किं भवेदस्माकं प्रयोजनं दुर्विनिन्दितकार्तवीर्याणामस्मद्विद्वेषिणां समाजसन्निधानेन' इति प्रत्यवातिष्ठत । एवं विवदमानयोस्तयो रत्नाकरस्तत्रागमत्, कलहकारणं चाजानात् । अभिनवसम्बन्धेन तारकापतिविषये समुत्पन्नादरोऽयं महाविक्रान्तैरतर्कितेन कदाचिदप्यप्रयुक्तेन महाभागेति सम्बोधनेन तारकापतिं सान्त्वयितुं प्रावर्तत । प्रवाहित्वसाम्येऽपि घृतस्याग्निविनाशाय तस्मिन्प्रक्षेपणं सर्वथैवासाम्प्रतमित्येष जनप्रवादस्तदा वितथतां प्रायात् । प्रत्युत साधुजनसंस्तुतेन महाभागपदेन सम्बोध्यमानोऽपि तारकापतिः क्रोधमनिगृह्यैव 'धिङ्मूर्ख, किमर्थं त्वया तत्रागमनेनात्मायासितः?' इति स्फुलिङ्गायितलोचनस्तमध्याक्षिपत ॥

आसन्नविनाशानां मतयो विपर्यस्ता भवन्तीति सुस्पष्टमुपदर्शितमेनेनैतादृशानि कठोराण्यक्षराणि गदता । महाविक्रान्तपक्षीया अपि फणधरे मार्दवं प्रयुञ्जानो रत्नाकरोऽकार्यकरणोद्यतः सत्यमित्येकवाक्यं जगदुः । कार्तवीर्यपक्षीयास्त्वनेन रत्नाकरस्य साधुत्वेनाप्यविलज्जितास्तारकापतिं साधुवादेन भृशमुत्साहयामासु. । मारविजयस्त्वनेन रत्नाकराधिक्षेपेण भृशं क्रुद्धस्तं बहुभिरसाधुवचनैर्भर्त्सयामास । अन्ततश्च कलहोऽयमीदृशीमवस्थामाप—यद्वावपीमौ करवालौ विकोशौ कृत्वा युद्धायोद्युयुजतुः । रत्नाकरभट्टराजौ परस्परप्रहाराकाङ्क्षिणोस्तयोः पृथक्त्वेन संस्थापनाय कृतप्रयत्नौ बभूवतुः । अन्येऽपि जनाः विरमतं विरमतमस्मात्साहसादिति चुक्रुशु. । परं सर्वोऽप्ययमुद्यमो विफलो बभूव । तारकापतिः स्वकरवालेन मारविजयस्य शिरःकबन्धं

द्विधा व्यभजत् , विगतचेतनश्च स सर्वमपि सुहृद्बन्धुवर्गमध एवो त्सृज्य दिवं प्रययौ । सुहृद्वधामर्षणभीषणो रत्नाकरः क्षमित्वमेकपद एव सुदूरमुत्सार्य कृपाणपाणिः सद्य एव तारकापतिमभ्यगमदवि-चार्यैव किमपि, परिभाव्यैव सुहृदसुहृद्वचांसि, स्वसुहृदसुहृद क्षणेन नन्दनवनोपभोगायामरभूमिं प्रेषयामास ।

अनेन समयेन गगनमध्यरत्नायमानः समभूद्दिवसकरः । स्वं कार्यजातं निर्वाह्य भोजनसंपादनाय न्यवृतज्जीवलोकः । दिवस-कररश्मिरिवेदं कलहवृत्तमपि पुर्यामस्यां प्रसृतमभूत् । कुतूहलाक्रान्त-हृदयः पौरनिवहो द्रष्टुमिदं तत्र प्रपेदे । अमात्यकुलद्वयमपीमं वृत्ता न्तमन्तरेण परिगतार्थमकारि । ससाध्वसास्तत्कुलप्रमुखाः सोरस्ताड-माक्रन्दमानेन सार्धं वनिताजनेन तां भूमिमनुप्राप्ता । तदानीं राज्ञेऽपि प्रवृत्तिमिमां कश्चन न्यवेदयत् । स चानयोरमात्ययोः कलहेन भृशमु द्विग्नः 'अद्यास्मिन् कर्मण्यपराधिनं कठोरदण्डभाजमेव करोमि' इति निर्धार्य परिमितपरिजनपरिवेष्टितो द्रुतपदं तत्रागमत् । अनुतापपरिभू-तो रत्नाकरः, धिङ्मामविमृश्यकारिणमित्यात्मानं विनिन्द्य कथमेतेभ्य आत्मीयेभ्यो मुखं दर्शयेयमिति चिन्तासंक्रान्तिदूयमानहृदयः स्थलं तत्परित्यज्याविलम्बितमेकलिङ्गेश्वरालयं जगाम । तस्मिंश्च कियन्तं का-लमतिष्ठत् ॥

इतश्च वधस्थाने संमिलितो जनो वधविषयिका विविधा वार्ताः कुर्वन्, विविधाभिः किंवदन्तीभिरात्मानं रञ्जयन्, तत्रागतो राजा किं निर्णेष्यतीति च चिन्तयंस्तत्रैव तस्थौ । विजयिनीजननी रत्नाकरप्रसूश्चात्मनः पुत्रयोर्निरपराधित्वं प्रख्यापयितुं भर्तारौ व्यजि-ज्ञपताम् । (क्रमश )

## भारवेर्जीवनचरितम् ॥

(पूर्वतोऽनुवृत्तम्)

एवं स्वप्रेयस्या ऊरीकृतदेशयात्रः भारविः बत ! पादचारेणैव देशानटितुमारेभे स्वशिष्यवर्गैः सह । इदानीमस्मद्देशस्य अतिचतुरैः लोकोत्तरप्रतिभाशालिभिराङ्गलभूपालैः परिपाल्यमानतया अनायासमतित्वरितं च बहुदूरदेशप्रयाणसाधनानि धूमयानानि वायुविमानानि ऊष्मयन्त्राणि विदेशस्थितबन्धुमित्रादिक्षेमवार्तापरिज्ञानसाधनानि पत्रिकावहनविद्युत्तन्त्रीकार्यस्थानानि अन्यानि चासङ्ख्याकानि बहुविधानि सुखसाधनानि भरतखण्डे सर्वतः समुपलभ्यन्ते । पापम्, अस्मत्प्राचीनाः एतादृशाना वस्तूनां नामधेयान्यपि नाजानन्, किमुत तादृशवस्तुस्वरूपाणि । यद्यपि विद्यन्ते तदानीमपि दैशिकवृषभशकटानि तत्तज्जनपदान्तःसंचरणयोग्यानि, यान्यतित्वरितगमनेपि एकस्मिन् यामे प्रायेण एकमेव क्रोशं गच्छेयुः, तथापि निर्भयं सर्वजनसंचरणार्हाणां समीचीनराजमार्गाणामपि तदानीं स्वल्पतयतया ग्रामशकटाधिरोहणेन विदेशप्रयाणस्य मनसाप्यचिन्तनीयतया गत्यन्तराभावेनाय महाकविः पदचारेणैव देशान्तरं गन्तुं निश्चिकाय ॥

एवं प्रस्थाय कतिपयक्रोशपरिमितमध्वानमतीत्य गच्छतो महाकवेः मध्येमार्गं कोपि ग्रामः दृष्टिगोचरीबभूव । तदानीमस्तंगतः कमलबान्धवः । निशामयोप्यत्यासन्नः । अपरिचिता इमे भूमिभागाः । अतोस्यां निशायामत्रैव समवस्थानं युक्तमिव प्रतिभातीति वितर्कयन् तत्रैव ग्रामे तां निशामनिवाहयामास । तस्मिन् ग्रामे बहवः संपन्नाः धर्माचरणपरायणाः गृहस्था वर्तन्ते ; तथापि ताननव-

लोक्यैव परस्मिन् दिने उषःकाल एव तस्मात् ग्रामात् प्रस्थाय ग्रामान्तरं जगामायं महाकविः। अस्मिन् संदर्भे अयमुन्मत्तवत्प्रतिभातीति केषांचिन्मनसि समुदियात् कोपि विशय, यतोयं दौर्गत्यपीडितोपि बहुकुटुम्बभरभरितोपि धार्मिकसंपन्नगृहस्थभूयिष्ठं ग्राममुपगतोपि तत्रत्यान् धार्मिकान् गृहस्थाननवेक्ष्य तेभ्यो वित्तमगृहीत्वैव 'करस्थमुदकं त्यक्त्वा घनस्थमभिवाञ्छति' इति वचनस्य दृष्टान्तायमानो वर्तेत इति। मास्तु तादृशः संदेहः केषामपि। कुत इति चेत् 'प्राणानपि परित्यज्य मानमेवाभिरक्षयेत्' इति निर्णयवानय महानुभावः, न तु येन केनाप्यतिनीचेनाप्युपायेन धनसपादनतत्परः। परं तु अयं महाकविः अभिमानधनः कुलाभिमानी। आनुषङ्गिकफलापेक्षापराङ्मुखः, अस्थिरप्राणपरित्यागेनापि स्थिरयशःसंपादनाभिलाषी च। अपि च मनस्विगर्हितं पन्थान मनसाप्यनुसर्तुं नाभिलषत्ययं कविवरेण्यः। नायं स्वकपोलपरिकल्पितः पन्था. यदयं कविरीदृशस्वभावशालीति। किं तु तस्य तादृश एव स्वभाव इति सुव्यक्तमनुमीयते, यदि किरातार्जुनीयद्वितीयैकादशसर्गस्थितानि कतिचित्पद्यरत्नानि सकृत्पठ्यन्ते सहृदयै। अपि च कीदृशः पुमान् तच्छब्दवाच्यः अन्वर्थनामधेयश्च भवति, कीदृश. पुरुषः तत्त्वेन परिगण्यते, लक्ष्म्या च समाश्रीयते, पुरुषेण कथं वर्तितव्यम्, इत्यादिका विषयाः निपुणं मनोहरं च निरूपितास्तत्रैव श्लोकरत्नेषु महाकविना श्रीभारविणा। अन्यच्च, अतिमूढ एव नीतिमार्गादुत्क्षिप्यत इति, नयहीनाज्जनोऽपरज्यत इति, न्यायाधाराः साधुजना इति, प्राणलाभेन तेजस्त्यागे परिभवो भविष्यतीति, भयाद् सूनेव सुखमुज्झन्ति मानिनः, न तु कदापि स्वकीयं तेज इति, श्रियो

हि बहुचञ्चला नीचानीचविशेषानभिज्ञाश्च, अतस्तास्वत्यासक्तो मूर्ख इति, मानहीनस्य जन्मिन तृणस्य च नास्तीषदप्यन्तरमिति, जातिमात्रावलम्बिना पुरुषशब्देन न किमपि प्रयोजनमिति च युधिष्ठिर-भीमसेनयोः इन्द्रार्जुनयोश्च संवादमुखेन वर्णयन्नात्मीयाभिप्रायमेव विशदीकरोतीवेति नितरामभिनन्दनीया व्यङ्ग्यमर्यादासरणिर्महाकवे-र्भारवेः । तथा हि——

अभिमानधनस्य गत्वरै.
असुभिः स्थास्नु यशश्चिचीषत. ॥
अचिराशुविलासचञ्चला
ननु लक्ष्मी फलमानुषङ्गिकम् ॥

२. सर्गे १९. श्लोकः ।

अभिभूतिभयादसूनत
सुखमुज्झन्ति न धाम मानिनः ॥

२. सर्गे २०. श्लोक. ।

अतिमूढ उदस्यते नयात्
नयहीनादपरज्यते जनः ॥

२. सर्गे ४९. श्लोकः ।

लक्ष्मीमिव चलाचलाम् ।
न्यायाधारा हि साधवः ॥

११. सर्गे ३०. श्लोकः ।

नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढाः वामशीला हि जन्तवः ॥

११. सर्गे २४. श्लोकः ।

शक्तिवैकल्यनम्रस्य नि सारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥
११. सर्गे ५९. श्लोक. ।

तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥
११. सर्गे ६२. श्लोक ।

स पुमानर्थवज्जन्मा यस्य नाम्नि पुर स्थिते ।
नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥
११. सर्गे ६३. श्लोकः ।

कृतं पुरुषशब्देन जातिमात्रावलम्बिना ।
योऽङ्गीकृतगुणै. श्लाघ्य. सविस्मयमुदाहृतः ॥
११. स ७२. श्लोकः. इति

सामान्या जना अपि स्वाभिमानं न परित्यजन्ति । किमुताद्वितीयपाण्डित्यप्रकर्षा श्रीभारविप्रमुखाः कविकुलोत्तसाः । उक्तं च श्रीभर्तृहरिणापि--

'कुसुमस्तबकस्येव द्वे वृत्ती तु मनस्विनः ।
सर्वेषां मूर्ध्नि वा तिष्ठेत् विशीर्येत वनेऽथवा ॥'

उक्तं हि श्रीपण्डितरायेणापि—

'एक एव खगो मानी चिरं जीवतु चातकः ।
पिपासया वा म्रियते याचते वा पुरंदरम् ॥

अन्यच्च--

मनस्वी म्रियते वापि स्वोत्कर्षं नैव मुञ्चति ।
अपि निर्वाणमायाति नानलो याति शीतताम् ॥' इति

(क्रमश.।)

चिन्तयामास—

'इयं सा वेला, यस्यां च मदेकान्तविनोदात् जानती च मद्वियोगं शयनतलविलीनगात्रयष्टिरनुभवेदहमिवैतामभिनवोदयभीषणामननुभूतविकारामचिन्तितोपनतां विरहव्यथां दाक्षिण्यपेशलहृदया प्रणयिनी । तथा हि— सा खलु नाभिनन्देत् परिजनम्, नोपलालयेज्जीवितनिर्विशेषाः प्रियसखीः, नाभिकाङ्क्षेत् शरीरस्थितिसाधनानि, नाशंसेत् स्नानानुलेपनादीनुपचारान्, नेच्छेच्छयनानि, न बहुमन्येत भूषणानि, नार्थयेत कुसुमानि, नाभिवाञ्छेत्तौर्यत्रिकम्, न सारयेद्वीणाम्, न प्रीयेत संलापैः सखीनाम्, न मोदेतालापैः शुकशारिकाणाम्, अपि चोद्विजेच्चन्द्रादपि, बिभीयान्मृदुपवनादपि, खिद्येत तनुलताया अपि, लज्जेत सखीभ्योऽपि, शङ्केत परिजनादपि, किं बहुना? विषीदेज्जीवितादपि, अन्यच्च उद्वहेत् तरलताम्, आवहेद्वैलक्ष्यम्, चिन्तयेन्मामेव, विचिन्तयेन्मदनुभावान्, विचारयेच्च मत्प्रयाणविधिम्, पृच्छेद्यातव्यान् देशान्, परिमिमीयात्प्रत्यागमनावधिसमयम्, किं च तिष्ठेत् स्तम्भितेव, घूर्णेत हतेव, प्रलपेदुन्मत्तेव, मुह्येन्मूर्छितेव । अहो! कथं नाम विस्मर्येताकृत्रिमप्रेमानुरक्तः सौजन्यमधुरो विनयभूषितोऽभिजनमान्यो गुणवानदोषः निरतिशयरूपविलासनिधिः अभिनवयौवनविभ्रममोहितो विशुद्धः शुद्धान्तजनः । अथापि कार्यगौरवादवस्थाप्य धैर्यावष्टम्भेन पारिप्लवं मनः व्यापारयेयमवश्यकरणीयेष्वर्थेषु । यदि पुनरुपेक्षेय दृढानुरक्तः हृदयहारिणि तस्मिन्नेवंरूपमर्थम्, कथं नु योजयेयमात्मानं श्रेयसा? । जाने साधु अविज्ञातनागरचर्याणां काननौकसां जीवतां वन्यैरेव मदेकरक्ष्याणां धर्मविलयमेवानुशोचतां तपस्विनां

प्रीणनादन्यन्न श्रेयसे राज्ञां धार्मिकाणाम्, विशेषतो ममेति । अहं खलु कलिनैव विलयं प्रापिते सुमहति काले, कुरुपाण्डवानां दिव्यास्त्र दवदहनविप्लुष्टस्तदङ्कुर इवोज्जीवितोऽस्मि क्षेमायैव धर्मस्य सर्वज्ञेन धर्ममयेन भगवता कृष्णेन । इदानीं च कथावशिष्टेषु विख्यातचारित्रेषु धार्मिकेषु महामहिमसु पितामहेषु, अन्येष्वपि राजर्षिष्वापूर्वामलैर्निजयशोभिः सुरभीकृत्य रोदसी उपगतेषु कालगतिम्, तस्मिंश्चाप्रतिममहिम्नि संस्थापनायैव धर्मस्य प्रकटितमानुषभावे वासुदेवेऽधिरूढे स्वं धाम, निरन्तरायमाक्रामति लोकं कलिः; येन क्षीयते धर्मः । तमद्य नालं मदन्यः परित्रातुम् । अपि च नात्र हेतुर्मज्जननीविलापः, न कुन्तीपरिदेवनम्, न कृष्णानुनयः, न सुभद्रादैन्यम्, न पाण्डवावरोधरुदितम्, न पार्थप्रणय, नाजातशत्रुगौरवम्, नाभिमन्युवत्सलता, न पित्रोः प्रीणनम्, न संबन्धानुबन्धः; यत्प्रोज्जीवनं जातमात्रस्यैव परासोर्ममार्तशरण्येन हरिणा यदुनन्दनेन; किं तु अचिरभाविन एवंविधस्य धर्मोपप्लवस्य प्रतिचिकीर्षैव । सर्वथा अनुद्वहन् योगक्षेमौ न्यासीकृताया मय्येव पूर्वपुरुषैः पृथिव्या धर्मस्य च, कथमुपगच्छेयामानृण्यं तेषाम्— यस्मिन् जातोऽस्मि यस्मादभवं येन च प्रत्युज्जीवितोऽस्मि ॥

अन्यच्च स्वतःकरणीये ममास्मिन् कर्मणि अनुल्लङ्घ्यनियोगास्तपस्विनो ब्राह्मणा अपि मां प्रेरयन्ति । प्रतिज्ञाता च मया धर्मप्रतिष्ठा तेभ्यः । न ब्राह्मणभरणादन्यदस्ति गुरुतमं पौरवाणाम् । सर्वथा तद्व्यवस्थापनमेव श्रेयो मम । हन्त ! इदमपि मे कम्पयति चिन्तयतो हृदयम्; यदपि धर्मरक्षणायैव पर्यटता महीं सबलेन मया दण्ड्या एव तद्विरोधिनो राजानो राजपुत्रा

अन्येऽपि च । प्रायेण पाण्डववैरानलनिर्दग्धानि पृथिव्यां राजकुलानि । अद्य तु कलिमहिम्ना परित्यक्तधर्मेषु न जानामि केऽवस्कन्द्याः, के वध्याः, के जेयाः, के संधेयाः, के निग्राह्याः, के भेद्याः, के वा दण्ड्या इति । तथापि यतमानेन श्रेयसे मया शिक्षणीया एव तद्विरोधिनः । अहो कष्टतरा हि राज्ञां प्रकृतिः— अर्थमेव बहुमन्वाना न स्नेहं रक्षति, न दाक्षिण्यं गणयति, न सबन्धमनुकरोति, न प्रणयं प्रमाणीकरोति, न प्रीयते विश्वासेन । धर्मो हि राज्ञां नान्योऽस्ति रञ्जनादृते प्रजानाम्, ताः खलु रञ्जिता राज्ञा रञ्जयन्ति भूमिपतिम्, मानयन्ति मानिताः, सुखयन्ति वर्धिताः, मोदयन्ति मोदिताः, विश्वसन्ति विश्वासिताः, वर्धयन्ति राष्ट्रकोशबलानि ॥

तत्रापि ब्राह्मणेभ्यः प्रतिज्ञातवतो मम यतमानस्य सर्वतोऽपि धर्मगुप्त्यै न बहुमान्या भ्रातरो नोपलाल्या दाराः न प्रियो बन्धुजनो न भोग्यं राज्यं न कौतुकाय संपदो नाभिमतं जीवितम् । किं करोमि? धर्म एवाबद्धा न चलति मतिः । स हि व्यवस्थापितो योजयेदेव मां निश्रेयसेन । यदि नामैवंविधाभिः पौरुषभङ्गकारिणीभिर्विकल्पनाभिर्विरमेयमस्मात् व्यवसायात् तदा योजयेयुरेव मां शापेन तपस्विनः । तीक्ष्णतरा प्रकृतिर्मुनीनां न कस्योत्पादयेद्भयम् । आचक्षते हि नीतिविदः— सर्वमपि भज्यते स्वयोनौ यथाप्सु तेजः, शिलासु लोहम्, ब्रह्मणि क्षत्रम्— इति । अपि च बलवान् मुनिशापो ददाह वधीरितसुरासुरवैभवं निरतिशयमहिमातिप्रभूतं कुलमपि— इत्यन्यानि चाकलयन् संभृतरणरणकेन मनसा शनैर्निद्रामुपययौ ॥

अनन्तरं चार्धयामावशिष्टायां रजन्यां वाद्यमानेषु प्रयाणपट-

हेषु पूर्यमाणासु काहलीषु तत्क्षणोद्बुद्धानां संनह्यतां प्रस्थानसंभ्रमकलकलेन सैनिकानां प्रबोधनस्तुतिभिर्वैतालिकाना प्रतिबुद्धो नरपतिरुत्थाय शयनीयात् कृतयथोचितपरिकर्मा निर्गत्य भवनादवस्थापितपूर्वं रथचर्याकोविदेन सारथिना स्यन्दनमधिरुह्यानुगम्यमानः संनद्धया चतुरङ्गिण्या तस्मात् देशात् प्रतस्थे । तत क्रमेण परिक्रम्य भुवं विनमयन् युद्धेन दुर्हृदयान्, अवस्कन्दयन्नवस्कन्द्यान्, संभावयन्ननुरक्तान्, पालयन्नार्तान्, दण्डयन् दुर्वृत्तान्, व्यवस्थापयंश्चलितान्, मानयन् साधून्, रक्षन् धार्मिकान्, स्वीकुर्वन्नुपायनानि, गृह्णन् करान्, साधयन्नसिद्धानि, उन्नमयन् शरणागतान्, विचारयन् देशगुणदोषान्, पश्यन् नगराणि, विलोकयन् गिरिवननदीसरांसि, वीक्ष्यमाणो ग्रामाखेटपक्कणान्, प्रविशन्नाश्रमाणि, पूजयंस्तापसान् परिचक्राम भुवम् ॥

एवमतिक्रम्य भारतं वर्षं ततो भद्राश्वं तस्माच्च केतुमालं ततः पीलावृतं ततः किंपुरुषाख्यं च वर्षमतिक्रम्य तेषु तेषु शृण्वन् श्रवणरमणीयानि गीयमानानि गायकैः वर्ण्यमानानि कविभिः प्रस्तूयमानानि कथाकोविदैः— धर्मैकनिष्ठतामजातशत्रोः, सौभ्रात्रं पाण्डवानाम्, विक्रमं धनंजयस्य, संबन्धं पार्थयादवानाम्, माहात्म्यं कृष्णस्य, मैत्री वासुदेवार्जुनयोः, अनुग्रहं च सौजन्यप्रणयदौत्यसारथ्यसंबन्धसाचिव्यबलोद्योजनविस्रम्भैः पाण्डवेषु भगवतः, क्रूरतां गुरुतनयस्य, प्रत्युज्जीवनमात्मनो भगवता कृष्णेन–– इत्येतान्यन्यांश्चात्मगुणानुबद्धा हृदयहारिणीः कथाः, परितुष्टश्च तेभ्यो धनान्याभरणानि रत्नानि वसनानि चार्पयन् पारितोषिकानि, किंच महामहिमनि भगवति वासुदेवे निरुपाधिकी भक्तिमाबध्नन्, व्यवस्थापयन्

निखिलामपि भुवं स्वशासने, विश्रामयन् बहुदुरयानखिन्ना चतुरङ्गिणीं क्वचिन्मासमेकमन्यत्र द्वौ मासौ अपरत्र चतुरो मासान् इति विचचार सर्वामपि भुवम् ॥

एवमतीतेषु प्रस्थानप्रभृति चतुर्षु वत्सरेषु प्रतिनिवृत्त्य तेभ्यः सफलबलविक्रमैः सिद्धार्थैर्नगरगमनसमुत्सुकैरानुयात्रिकैस्तत्र तत्र संमान्य यथार्हं प्रतिनिवर्त्य स्वदेशेभ्यः कृतविविधाभिनवसंविभागसंतोषितान् सबलाननुगच्छतो राज्ञः सपक्षान् , किं च सहैवानयन् दृष्टबलवीर्यान् शूरान् परीक्षितनयविनयविद्याविज्ञानगुणान् मन्त्रिणः, अपूर्वविविधविचित्रविरचनाकोविदान् शिल्पिनः, रक्तकण्ठान् गीतकुशलांश्च गायकान्, समग्रगुणभूषिता रूपविभ्रमावधीरितविबुधवेशयौवता नर्तकीः, दासान् , दासीश्च, महार्घाण्याविकाजिनकम्बलानि, अनर्घाणि मणिभूषणवसनभाजनानि, रत्नमयान् विविधान् रथान् , सततमद वर्षिणो दन्तिनः, जवाधिकांस्तुरगान्, बहुभारवाहिनो बलीवर्दान्, गाश्च घटोध्नीर्हृष्टपुष्टनरवाहनया वरूथिन्या पुरीं प्रतिनिववृते ॥

आगच्छन्नेव पूर्वेण कुरुजाङ्गलं सरस्वत्यास्तटाटवीनिरूढेन वर्त्मना अदूर एव पथोऽतिनृशंसकर्मणा दण्डपाणिना बलवदभिताड्यमानम्, दीनेनाक्रन्दितेन पूरयन्तमरण्यानि, जराजर्झरितोच्छुष्कशरीरम् , वृषलदण्डाभिघातपरिकम्प्यमानम्, मृणालधवलतनुम्, एकसंतानैरस्रबिन्दुभिः सिञ्चन्तं धरणीम्, छिन्नचरणत्रयतया प्रस्फुटितखुराग्रवान्तरुधिरधारेण शिथिलितेनैकेन पदा भुवमधितिष्ठन्तम्, अतिशोच्यरूपं वृषभम्, अन्तिक एतस्याप्राप्तग्रासलवपरिक्षीणामश्रुजललवलुलितदीनमुखीं रुदतीं नटेनेव नृपलिङ्गानि दधता वृषलेन पदाभिहन्यमानां विच्छायमुपगम्य प्रदेशं संतप्यमानामातपेन गा

च ददर्श ॥

अवलोक्य च तादृशीं तयोरवस्थां जातहृदयोत्पीडः तत्क्षणविजृम्भितेनामर्षेण प्रकम्पितगात्रो मनस्येवमकरोत्— 'हन्त? शासत्यपि पाण्डवान्वये मयि भुवनं, नातिचिरादिव प्रवृत्तेऽपि च शिक्षणायासाधूनां, क्रियत एतादृशं कर्म लोकेन । कोऽसौ वृषभः?। केनास्य विलूनास्त्रयः पादाः? । कथमेकेनैव पदा धारयति दुःस्थेन तनुम् । किमपराद्धमस्मै वृषलायानेन? । कोऽसावेवंविधे प्रवृत्तोऽधर्मे वेषच्छन्नो नट इव लक्ष्यते; यत् स्पृशति पदा पूजनीयामपीमां धेनुम् । का नु भवेदियं गौः; या खल्वनाथा दुःखमिममनुभवति । हा? हतोऽस्मि । महानयमनयो मम, यदिह शिक्षणायैवोल्लङ्घितमर्यादानामेवंविधानामसतामुद्यतायुधे सबले मयि पर्यटति वसुमतीमनार्यमिदमनुष्ठीयते लोकेन मत्संमुखमेव । किं ममोद्यतेन दण्डेन? किं शस्त्रैः? किं दूरपरिभ्रमणश्रमेण? किं सैन्येन? किं धैर्येण? किं व्यवसायेन? किं वा मया व्यपदिशता कुलं पाण्डवानाम्? हा किमियं माया? मत्परीक्षणाय दर्शितमिदं दैवेन किमिन्द्रजालविलसितम्? अथवा धर्मेणैव सनातनेन भगवता श्रीकृष्णेन तदेकाश्रयैश्च मत्पितामहैः परित्यक्तेऽस्मिन् महीवलये, अधर्मरुचिरतिगर्हितेषु कर्मस्वभयं प्रवर्तते लोकः । कथमन्यथा अभयायैवातानां गृहीतशस्त्रस्य मे समक्षमेव पीड्यत इदमनाथमिव गोमिथुनम् । सर्वथा दुर्विभाव्येनामुना व्यतिकरेण दृढं खलु पर्याकुलहृदयोऽस्मि संवृत्तः । भवतु नाम त्राणायैवापन्नानां विधृतेनामुना शस्त्रेणैव प्रतिकरोमि—' इत्यवधार्य ससंभ्रममाकृष्य कोशान्निशातं खड्गमतिप्रवृद्धरोषावेशगुरुभिः पदन्यासैः कम्पयन्निव महीं दुर्निरीक्षवदन

विलम्बितुम्—' इति ॥

ततः परीक्षिद्वचसा समाश्वासित इव स वृषभः प्रत्यवादीत्—'आयुष्मन्! धर्मोऽस्म्यार्षभेण प्रतिच्छन्नो वेषेण चरामि भुवम् । मामंस्था जातिरेषा ममेति । क्रूरकर्मा कलिर्मद्विरोधिनोऽधर्मस्यांशैश्चतुर्भिः स्मयसंगमदानृतैर्विश्वकद्रुभिः परिवृतो व्याध इव मामनुबध्नात्यनुधावति च । मम हि तपःशौचदयासत्त्वाख्याः चत्वारः पादाः । तैश्च धारितः पुष्टाङ्गो व्यचरमेतावतो दिवसान् । किंच प्रवया अपि मत्पोषणायैव भुवमवतीर्णैर्मदायत्तशीलवृत्तिभिर्मदेकाश्रयेण भगवता कृष्णेन मदर्थमेवारोपितमहामहिमभिः पितामहैर्भवतस्तारुण्यमुपपादितो भुवनमाक्रमम् । इदानीं चानुपममहिम्नि आश्रये च शिथिलीकृते परित्यक्तलोकेषु मद्रक्षणोद्यतेषु पूर्वराजर्षिषु क्वाप्यलब्धत्राणः वयसा चातीतेन परिक्षीणप्राणः शिथिलाङ्गो भग्नगतिश्च गृहीतोऽस्म्यनेन कलिना व्याधेन । अद्य तु तत्परिग्रहैः स्मयसंगमदैर्विश्वकद्रुभिर्मृगदंशकैराक्रम्य विलुप्ताः क्रमेण तपःशौचदयारूपास्त्रयो मम पादाः । शिष्टमेकं सत्यं चरणं जिघृक्षत्ययमनृतभषकः । अनेन च व्यतिकरेण परिक्षीणोऽस्मि । मद्विनाशायैव हन्त्येवंविधमपि मामयं निर्घृणः । मदायत्तोल्लासा धारयन्ती गोरूपं मामेवानुव्रता भगवती विश्वंभरा ; यया चानेनैव रूपेणाभ्यर्थितः सकलजगदवनदीक्षितो भगवान्नारायणोऽवतीर्य यदोरन्वयेऽवरोपयामास दुर्भरं महीभारम्, कुलिशकलशजलजरथचरणशरासनाङ्काभिः श्रीमतीभिरात्मचरणविन्याससमुद्राभिर्भूषितामेनामधारयन्महत् सौभाग्यम् । सेदानीमनुभवत्यवचनीयमश्राव्यमचिन्तनीयं चातिविततमनवधिकं दुःखं सिञ्चन्त्युष्णोष्णाभिरश्रुधाराभिर्महीम् 'अदर्शनं गते स्वप्नोपलब्ध इवाधिराज्ये तादृशि

व्यवहारस्तु भाक्त. । स्वयंप्रार्थितत्वं च नेष्टसाधनताज्ञानाधीनेच्छाविषयत्वम्; पश्वादेस्तथात्वासंभवेन तदर्थचित्रादेः पुरुषार्थत्वानुपपत्तिप्रसङ्गात् । किं तु शास्त्राधीनेष्टसाधनताज्ञानानधीनेच्छाविषयत्वम् । तच्च पश्वादावपीति न दोष' ॥

स्वयंप्रार्थितभिन्नोद्देशेन विहितत्वं क्रत्वर्थत्वम् । संभवति चेदं प्रयाजादीनां क्रतूपकारोद्देशेन विहितानाम् । तत्र 'ब्राह्मणः प्रतिग्रहादिना द्रव्यमार्जयेत्, जयादिना राजन्यः' इत्यादिविधिसिद्ध. प्रतिग्रहनियमः क्रत्वर्थः पुरुषार्थो वेति विशये पुरुषार्थत्वे फलकल्पनापत्ते. क्रत्वर्थत्वमेवेति तदार्जितद्रव्यस्यापि सर्वस्य क्रत्वर्थत्वमेवेति प्राप्ते, श्रुत्याद्यभावात् अदृष्टकल्पनस्य च क्रत्वर्थत्वपक्षेऽपि तुल्यत्वात् न क्रत्वर्थत्वम्, किं तु पुरुषार्थत्वमेव । ततश्च तदार्जितद्रव्यस्य विहिताविहितसाधारण्येन सर्वकृत्यशेषत्वम् । अन्यथा जीवनलोपात् सर्वतन्त्रपरिलोपापत्ति' । तस्मादार्जननियम अदृष्टार्थ. सन् पुरुषार्थ इति । एवं पशुना यजेतेत्यत्र पश्वेकत्वं विवक्षितमविवक्षितं वेति विशये 'गृहं संमार्ष्टि' इत्यादौ गृहैकत्ववत् पश्वेकत्वमपि अविवक्षितमेवेति प्राप्ते उद्देश्यविशेषणस्य विवक्षायां वाक्यभेदप्रसङ्गेन प्रतिप्रधानगुणावृत्तिन्यायेन सर्वेषां गृहाणां संमार्जनीयत्वनिर्णये कति गृहाः संमार्जनीयाः इत्याकाङ्क्षाविरहेण गृहैकत्वस्याविवक्षायामपि पश्वेकत्वं विवक्षितमेव । तथा वाक्यभेदविरहात् । गृहं संमार्ष्टीत्यत्र हि एकत्वं न प्रकृत्यर्थे अन्वेति । सुबर्थसंख्यायाः समानाभिधानश्रुत्या कारकएवान्वयस्य व्युत्पन्नत्वात् । ततश्च गृहस्य एकत्वस्य च कर्मतया भावनान्वयो वाच्यः । स च न संभवति । करोतिपर्यायभावनाया एककर्मकत्वनियमात् । अतः एकस्मिन् वाक्ये अनेकोद्देश्यान्वयासं

भवात् वाक्यभेद आवश्यकः । 'पशुना यजेत' इत्यत्र तु न तथा । एकत्वस्य समाभिधानश्रुत्या आधेयत्वेन सामानाधिकरण्येन प्रथमतः कारकान्वये पश्वेकत्वोभयविशिष्टैककारकविधाने पश्चात पार्ष्ठिकः पशौ आश्रयतया एकत्वान्वय इति । एवं कतिभिः पशुभिर्यागः कार्यः इत्याकाङ्क्षावशादपि एकत्वविवक्षाया आवश्यकतेति पश्वेकत्वं क्रत्वर्थमेवेति तदभावे क्रतुवैगुण्यमेव स्यादिति ॥

एवं चातुर्मास्येषु प्रथमे पर्वणि 'तप्ते पयसि दध्यानयति । सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रुतम् । तत्र दध्यानयनस्यामिक्षा वाजिनं चेत्युभयं प्रयोजकम्, उत, आमिक्षैवेति चिन्तायामुभयमेव प्रयोजकमिति युक्तम् । तप्ते पयसीति वाक्यस्य हि तप्तपयोधिकरणकानयनेन दधि संस्कुर्यादिति न वाक्यार्थः । दध्न उपयोगाभावात् । अतः 'सक्तून् जुहोति' इत्यत्रेव द्वितीयायाः करणत्वलाक्षणिकतामङ्गीकृत्य तप्तपयोधिकरणकदधिकरणकानयनेनेष्टं भावयेदिति वाक्यार्थे योग्यताबलात् तादृशदध्यानयनजन्यामिक्षाया इव तज्जन्यवाजिनस्यापि तत्फलत्वस्यावश्यंभावकतया उभयोरपि प्रयोजकत्वमावश्यकमेवेति प्राप्ते 'सा वैश्वदेव्यामिक्षा' इत्युत्तरवाक्ये तच्छब्देन प्रधानपरामर्शनात्पूर्ववाक्ये आमिक्षाया प्राधान्यावगतेरामिक्षैव प्रयोजिका न तु वाजिनम्। आमिक्षा हि पयोरूपैवेति अष्टमे वक्ष्यते । ततश्च उक्तप्राधान्यावगत्यनुरोधेन सप्तम्याः कर्मत्वलाक्षणिकतामङ्गीकृत्य तप्तं पयः दधिकरणकानयनेन संस्कुर्यादिति वाक्यार्थस्याश्रयणीयतया आमिक्षायाः संस्कार्यत्वाभ्युपगमः आवश्यक इति वाजिनस्यानुनिष्पन्नतया तद्यागस्य स्विष्टकृदादिवत् अनुनिष्पन्नप्रतिपत्तित्वावगतेर्न प्रयोजकत्वमिति । दर्शपूर्णमासयोः पुरोडाशकपालेन

तुषानुपवपतीति विहिततुषोपवापस्य न कपालोपादानादिप्रयोजकत्वम् । परप्रयुक्तकपालोपजीवित्वप्रतीतेः । एवं तत्रैव 'प्रयाजशेषेण हवींगूँष्यभिघारयति' इति श्रुतम् अभिघारणं हवि संस्कारः प्रयाजशेषप्रतिपत्तिर्वेति विशये हवींगूँषीति द्वितीयया अभिघारणापेक्षया हविषां प्राधान्यावगते उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वाच्च हविःसंस्कारत्वमेवेति प्राप्ते, अदृष्टकल्पनाप्रसङ्गात् न हविःसंस्कारत्वम् । किन्तु प्रयाजशेषप्रतिपत्तित्वमेवेति । तथा सति आकीर्णकरतानिवृत्तिरूपदृष्टप्रयोजनसंभवात् । इत्थ च हवींगूँषीति द्वितीयया कर्मत्वं च लक्षयित्वा प्रयाजशेषं हविःषु प्रक्षिपेदिति वाक्यार्थः समाश्रयणीय इति ॥

इति चतुर्थेऽध्याये प्रथमः पादः ॥

---

## अथ द्वितीयः पादः ॥

द्वितीये पादे स्वरुप्रभृतेः छेदनादियूपधर्माप्रयोजकत्वादिनिरूपणरूपः अप्रधानस्य प्रयोजकत्वविचार. । तथाहि— अग्नीषोमीये पशौ श्रूयते 'यूपस्य स्वरुं करोति । स्वरुणा पशुमनक्ति' इति । तत्र किमेष स्वरु यूपात् पृथक् छेदनादीनां यूपधर्माणां प्रयोजकः, उत, न, इति विशये प्रयोजक एवासौ यूपधर्माणाम् । तत्र हि प्रथमवाक्ये स्वरुकर्मिकैव भावना विधीयते । तस्याश्च करणेतिकर्तव्यतापेक्षाया यूपशब्देन खदिरादिवृक्षः करणत्वेन छेदनादयो धर्माश्च इतिकर्तव्यतात्वेन समर्प्यन्ते । तथोत्पन्नश्च स्वरुणा पशुमनक्ति इति विनियुज्यते । अतो युक्तं प्रयोजकत्वमिति प्राप्ते करणेतिकर्तव्यता-

विशिष्टभावनाविधाने बह्वर्थविधानात् गौरवम् । मुख्यस्य च यूपशब्दस्य लक्षणा । अत. स्वरुणा पशुमनक्तीति वाक्येनाञ्जनसाधनं स्वरुरित्यवगम्यते । कुतोऽसावुपादेय इत्याकाङ्क्षायां यूपस्य स्वरुं करोतीति वाक्येन स्वरुमुपादत्त इति यत् तत् यूपादिति विशेषणमात्रविधानम्, लाघवात् । करोतेर्जघन्यस्यैव उपादानलाक्षणिकत्वाच्चेति न छेदनादिप्रयोजक. स्वरुरिति ॥

## इति चतुर्थोऽध्याये द्वितीयः पादः ॥

---

## तृतीयः पादः ॥

तृतीये पादे फलविचार । तथाहि— 'यस्य पर्णमयी जुहूर्भवति न स पापगँ श्लोकगँ शृणोति ' इत्यत्र किं पर्णमयत्वं क्रत्वर्थम्, उत, पुरुषार्थम्, आहोस्वित् उभयार्थमिति विशये फलश्रवणात् पुरुषार्थमेव । अथवा अव्यभिचरितक्रतुसंबन्धेन क्रत्वपूर्वप्रयोजकताव्याप्यजुहूत्वरूपेण क्रतूपस्थितेः तदर्थत्वेऽपि फलश्रवणात् पुरुषार्थत्वस्यापि संभवात् उभयार्थमेवेति प्राप्ते, अव्यभिचरितक्रतुसंबन्धेन क्रतूपस्थितौ तदर्थतयैव प्रयोजनाकाङ्क्षायाः शान्तेः कामपदादिराहितस्य न स पापमित्याद्यर्थवादस्य फलसमर्पकत्वासंभवात् केवलक्रत्वर्थत्वमेवेति । एवं विश्वजिता यजेतेति एकाहकाण्डपठितविश्वजिदादावश्रुतफलके भावनाया. भाव्याकाङ्क्षाया विधिसमभिव्याहारेण धात्वर्थत्वस्य भाव्यत्वासंभवात् फलवाचिपदमध्याहार्यम् । तच्च फलमेकमेव, तत एव नैराकाङ्क्ष्यात् । तच्च किमित्याकाङ्क्षायां स्वर्गरूपमेव, न पुत्रादि, स्वर्गस्य 'यन्न दु.खेन संभिन्नम्—' इत्यादिवाक्येनातिशयितसुखरूपतया प्रतीतेः

बहुभि: प्रार्थ्यमानतया शास्त्रस्य महाविषयतालाभादिति । एवं ज्योतिर्गौरायुरिति रात्रिसत्राभिधानानि कर्माणि विधाय 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति श्रुतम् । अत्र किमेतानि कर्माणि स्वर्गफलकानि, उत, आर्थवादिकप्रतिष्ठाफलकानीति विशये पूर्वोक्तन्यायेन स्वर्गफलकान्येव । प्रतितिष्ठन्तीत्यादिकं तु न स पापमित्यादिवदर्थवादः इति प्राप्ते, स्वर्गोपस्थितितद्वाचकपदोपस्थित्यादिकल्पनागौरवात् प्रतितिष्ठन्तीत्यस्य सन्नन्ततया विपरिणाममुपयन्तीत्यस्य लेट्त्वं यच्छब्दस्य व्यवहितान्वयं चाङ्गीकृत्य ये प्रतिष्ठासन्ति ते रात्रीरुपेयुः इत्यर्थस्यैव लाघवेन समाश्रयणीयतया आर्थवादिकप्रतिष्ठाफलकान्येव एतानि कर्माणीति ॥

इति चतुर्थाध्याये तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

अथ चतुर्थपादे विदेवनादीना राजसूयाद्यङ्गताविचारः । तथा हि— अनुमत्यादीनि विदेवनादीनि च यागायागकर्माणि प्रकृत्य 'राजसूयेन स्वाराज्यकामो यजेत' इति श्रूयते । अत्र विदेवनादीनां क्रत्वर्थत्वम्, उत, पुरुषार्थत्वं वेति संशये सर्वेषामप्यविशेषेण फलसाकाङ्क्षत्वात् राजसूयशब्दस्य च राज्ञा क्षत्रियेण सूयते निष्पाद्यते इति व्युत्पत्त्या सर्वेषामभिधानसंभवात् तृतीयया तेषां करणत्वप्रतीतेश्च सर्वेषां फलभावनायां करणत्वम् । यजिधातुः छत्रिन्यायेन लक्षणया यागायागसमुदायमनुवदन् आख्यातसाधुत्वमात्रार्थः इति प्राप्ते, आख्यातोपात्तभावनायां समानपदोपात्तधात्वर्थस्यैव करणतयान्वयः, नोपपदार्थस्य । 'परिपूर्णं पदं पदान्तरेण संबध्यते' इति न्यायेन भाव-

नायां धात्वर्थान्वयात् प्राक् उपपदार्थान्वयायोगात् । ततश्चानुमत्यादियागानामेव फलभावनाकरणतया प्राधान्ये फलवत्फलन्यायेन विदेवनादीनामयागानामङ्गतया क्रत्वर्थत्वमेव । न च राज्ञा सोमः सूयते अभिषूयते अस्मिन्निति व्युत्पत्त्या सोमयागमात्रस्यैव राजसूयपदेनाभिधानात् तन्मात्रप्राधान्यमस्त्विति वाच्यम् । राजसूयशब्दस्य क्वचिदपि प्रसिद्धत्वाभावेन राज्ञा सूयत इति प्रागुपदर्शितव्युत्पत्त्या सर्वयागपरत्वसंभवेन यजिधातुसंकोचे प्रमाणाभावात् । न ह्यप्रसिद्धस्य नाम्नः यजिसंकोचकत्वं संभवतीति । दर्शपूर्णमासवत् प्रसिद्धस्य हि नाम्न यजिसंकोचकत्वम् । तत्र हि आग्नेयादिषु उत्पत्तिवाक्यावगतकालसंबन्धेष्वेव दर्शपूर्णमासनामप्रसिद्ध्या तदनुरोधेन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र यजेः संकोचात् नाज्यभागादीनां प्राधान्यमिति ॥

एवं 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन किं सोमयागमात्रस्यैव फलोद्देशेन विधानम्, किं वा प्रायणीयादीनामपीति चिन्तायां यागत्वाविशेषात् सर्वेषामेव फलोद्देशेन विधानम् । न हि ज्योतिष्टोमशब्दः कुत्रचित् यागे प्रसिद्धः, येन दर्शपूर्णमासवत् यजिसंकोचः स्यात् । ज्योतिष्टोमशब्दो हि ज्योतिराख्यस्तोमसंबन्धं निमित्तीकृत्य प्रवर्तते । 'त्रिवृत्पञ्चदशः सप्तदश एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः' इत्यर्थवादेन तथावगमात् । स्तोमा नाम स्तोत्रीयागतसंख्याः; स्तोत्रीयाः स्तोत्रसाधनभूता ऋचः । इत्थं च स्तोमसंबन्धस्य बलसंबन्धस्योत्तरकालिकतया यूपं छिनत्तीत्यादौ यूपादिशब्दवत् भाविप्रवृत्तिनिमित्तमादायैव ज्योतिष्टोमशब्दस्य प्रवृत्तिर्वाच्या । शाटकं वयेत्यादौ लोकेऽपि शाटकादिशब्दानां तथा

प्रवृत्तिदर्शनात् । अतः सर्वेषामेव फलसंबन्धात् प्राधान्यमिति प्राप्ते 'गृहं वा गृहीत्वा चमसं वोन्नीयस्तोत्रमुपाकुर्यात्' इति क्रमविधायकवाक्येन स्वाश्रयऋक्साध्यस्तोत्रोपाकरणपूर्वकालिकग्रहणकत्वरूपस्य स्तोमसंबन्धस्य सोमयागेऽवगमात् ज्योतिष्टोमनाम्न. तत्र प्रसिद्धतया यजिसंकोचकत्वोपपत्त्या तस्यैव फलसंबन्ध । प्रायणीयानां तु तदङ्गतया क्रत्वर्थत्वमेवेति ॥

इति चतुर्थाध्याये चतुर्थः पादः ॥

समाप्तश्च चतुर्थोऽध्यायः ॥



## अथ पञ्चमोऽध्यायः ॥



### प्रथमः पादः ॥

एवं पादचतुष्टयपरिमितेन चतुर्थाध्यायेन प्रयुक्तिविचारे वृत्ते पञ्चमाध्यायेन क्रमो निरूपित. । क्रमो नाम एकपदार्थनिष्ठापरपदार्थाव्यवहितोत्तरत्वम् । तत्र प्रथमपादेन क्रमनियामकानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि षट्प्रमाणानि निरूपितानि । तत्र श्रुतिर्नाम वृत्त्या क्रमबोधकः क्लृप्तः शब्द· । स चाथशब्दादिः । तत्र अथशब्दस्य शक्त्यैवानन्तर्यवाचकत्वम् । क्त्वाप्रत्ययादीनां तु पूर्वकालादिवाचिनामपेक्षानुरोधात् क्रमपरत्वं लक्षणया । अर्थादिषु कल्प्यशब्दस्यैव क्रमबोधकत्वात् क्लृप्तेत्यनेन तद्व्यावृत्तिः । तत्र श्रौतक्रमोदाहरणम् 'द्वादशाहे सत्रात्मके अध्वर्युर्गृहपतिं दीक्षयित्वा ब्र

दीक्षयति' इति श्रूयते। अत्र क्त्वाप्रत्ययेन लक्षणया बोध्यमानं ब्रह्म दीक्षायां गृहपतिदीक्षानन्तर्यं किमनूद्यते विधीयते वेति विशये श्रुत्यर्थविधिसंभवे वाक्यार्थविधेरन्याय्यत्वात् दीक्षैवेह विधेया । ततश्च पाठप्राप्तः क्रमोऽनूद्यते इति प्राप्ते, 'सत्रे ये यजमानास्त ऋत्विज.' इति यजमानानामेव ऋत्विक्कार्ये विधानात् तेषां चोदनादेव दीक्षाप्राप्त्या न तस्या विधेयत्वसंभवः । ततश्चान्यतः प्राप्तिविरहात् क्रमस्यैव विधेयत्वमिति । अर्थो नाम प्रयोजनम् । तच्च व्युत्क्रमे अनुपपद्यमानं सत् क्रमे प्रमाणम् । यथा 'अग्निहोत्रं जुहोति । यवागूं पचति' इत्यत्र यवागूपाकस्य पाठक्रमेण पश्चात्करणे पाकसंस्कृताया यवाग्वाः होमरूपप्रयोजनानिर्वाहः । होमो हि 'यवाग्वा अग्निहोत्रं जुहोति' इत्यनेन यवागूत्पादकपाकं प्रति प्रयोजनत्वेनावगम्यते । अतोऽत्र प्रयोजनवशेन क्रमनिर्णय इति पदार्थबोधकवाक्यपाठक्रमोऽपि पदार्थक्रमे प्रमाणम् । 'समिधो यजति । तनूनपातं यजति' इति क्रमेण पठितानां यागानां क्रमनियमोऽस्ति न वा इति विशये पूर्वोक्तनियामकाभावात् नास्ति क्रमनियम इति प्राप्ते पाठक्रमेणैव पदार्थानां स्मरणात् तेनैव क्रमेणानुष्ठानमित्यस्त्येव क्रमनियम इति ॥

एव प्रवृत्तिरपि क्रमनियामिका । तथाहि वाजपेये– 'सप्तदश प्राजापत्यान् पशूनालभते' इति विहिता. प्राजापत्या पशवः सह क्रियन्ते । तत्रोपाकरणनियोजनादयः संनिपातिन प्रतिपशु आवर्तनीयाः । आवृत्तिश्च प्रथमं सर्वेषामुपाकरणं कृत्वा ततः सर्वेषां नियोजनमित्येवंरूपा । न तु एकस्मिन् पशौ उपाकरणादिकं सर्वं कृत्वा ततः पश्वन्तरे तत्करणमित्येवंरूपेति वक्ष्यते । तत्रोपाकरणं यतः कुतश्चित् पशोरारभ्य यत्रकुत्रचित् पशौ समाप्यते। नियोजनादौ तु संदेहः । किं

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकल परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे मार्गशीर्षमासः । [संचि. ९.

## सुभाषितानि ॥

पत्रं मुग्धतरं फलं सुमधुरं सौरभ्यमभ्युन्नतं
चञ्चत्काञ्चनजित्वरं पुनरिदं त्वत्केसरं सुन्दरम् ।
लावण्यं पुनरुत्तमं किमपरं किं तु स्फुरत्कण्टक-
व्यग्रं नालमिदं सरोरुह परं तेनातिदूयामहे ॥ १ ॥

नैवालोकि सरोजिनी न हि मनाग्गुञ्जारवैस्तोषिता
जातिः किं च गलन्मरन्दमधुना(?) नालिङ्गिता मालती ।
चित्रं किं तु मधुव्रतेन सहसा संपादिता सांप्रतं
भिन्ना रीतिरियं लवङ्गमुकुलान्यालोक्य मन्यामहे ॥ २ ॥

नासौ पश्यति मालतीं न हि मनाक् प्रेमाणमालम्बते
चञ्चच्चम्पककोरकेषु कुरुते मोदं न मल्लीकुले ।
स्मारंस्मारमुदारकेसरलतां नालोकते पद्मिनीं
क्षामः किं तु मधुव्रतोऽयमधुना गुञ्जन्मुहुर्भ्राम्यति ॥ ३ ॥

भट्टवीरेश्वरस्य ।

# श्रीसदाशिवेन्द्रसरस्वती ॥

(पूर्वतोऽनुवृत्तम्)

———❀———

एवंभूतापरिमेयाश्चर्यशक्तिविद्योतितदिव्यानुभावानां जीवन्मुक्ताग्रेसराणां संयमीन्द्राणामेतेषां जन्मना भूषितः पवित्रीकृतश्चायं दक्षिणापथ इति महदिदं भागधेयमगस्त्यपरिगृहीताया दिशः। दक्षिणापथवास्तव्या जना योगिवर्यस्यास्यात्यद्भुतान्यपदानान्यद्यापि साभिनिवेशमुद्गायन्ति, अदसीयमहिमानुचिन्तनमपि पावनमाकलयन्ति ॥

विशुद्धेन चारित्रेण, निर्मलेनान्तःकरणेन, अनितरसुलभेनारिषड्वर्गोन्मूलनेन, असाधारणेन अध्यात्मविद्याकौशलेन च ईश्वरांशसंभूता इव विराजमानाः श्रीमच्छृङ्गगिरिपीठमलंकुर्वन्तो यतिसार्वभौमा अपि अहर्निशमस्य सदाशिवेन्द्रस्यानुभावविशेषानुवर्णनेन प्रतिकृतिदर्शनेन चात्मानं पवित्रीकुर्वन्तीति इदमेवास्य महानुभावस्यावाङ्मनसगोचरं वैभवमवगमयतीति नातः परं कथयितुं प्रभवामः ॥

प्रतिकृतिरियमेतैरेव श्रीशृङ्गगिरिपीठाधिपतिभिरादरातिशयेन शिष्यप्रीत्या च श्रीवाणीविलासमुद्रायन्त्रालयाध्यक्षाय अनुगृहीता ग्रन्थरत्नस्यास्य भूषायमाणा विलसति ॥

सदाशिवेन्द्रेण विरचितेष्वध्यात्मविद्याग्रन्थेषु ब्रह्मसूत्रवृत्तिः प्रधानतयोपकरोति प्रस्थानत्रयपठनाभिलाषिणाम्। सन्त्येवानेका ब्रह्मसूत्रवृत्तयः, अथाप्येताः ललितया भारत्या, मधुरया आश-

याविष्करणसरण्या, आवर्जिकया हेतूपन्यासवैखर्या च समुपेतस्यास्य वृत्तिग्रन्थस्य शततमीं कलामपि न स्पृशन्तीति विशदीभवेदेवाध्यात्मविद्याप्रवचनचणानाम् । प्रतिसूत्रमस्यां फलभेदोपपादनपूर्वकं पूर्वपक्षसिद्धान्तयोः सङ्क्षेपतो निरूपणम्, सूत्रसंगतिः, अधिकरणसंगतिः, पादसंगतिरित्यादयो विषया निपुणं निरूपिताः श्रीमच्छंकरभगवत्पादभाष्यनिगूढनिक्षिप्तमर्थजातं विशदावभासं विरचयन्तीत्यध्यात्मविदो मन्यन्ते । सरससरसामलाविष्कृतामुपपादनरीतिमनुशीलयन्तो विद्यार्थिन. 'कोशवानाचार्यः' इत्यभियुक्तोक्तेरर्थमनुसंदधत इव ॥

ग्रन्थमेनमन्तरा अनेन संयमीन्द्रेण द्वादशसंख्यानामुपनिषदामपि दीपिका विरचिता इत्यवगम्यते । तासामपि मुद्रणभागधेयमस्य मुद्राशालाध्यक्षस्य न चिरादेव भविष्यतीति विश्वसिमः ॥

संयमीन्द्रोऽसौ योगाभ्यासनिरतानामत्यन्तोपकाराय पतञ्जलिना 'अथ योगानुशासनम्' इत्यारभ्योपदिष्टां सूक्ष्मदृष्टिभिरेवावगन्तव्यां गहनार्थां ब्रह्मसाक्षात्कारसरणिं विशदयितुं योगसूत्राणां योगसुधाकरनाम्नीमिमामतिरमणीयां वृत्तिं प्रणीय, ध्रुवकूर्मादिनाडीविज्ञानं समाधिस्वरूपं यमनियमादिभिरभ्यासैरन्तःकरणनिग्रहप्रकारादिकं चोपपाद्य, कैवल्यानन्दप्राप्तेर्मार्गदर्शी भूत्वा सत्यमेव अज्ञानान्धकारे निमग्नस्यास्य जीवलोकस्य स्वयमपि सुधाकरायते ॥

सर्वास्वप्यस्य सूक्तिषु परामृश्यमानासु अनुवाचकानां पार्थिवभोगेष्वरुचिः, परमात्मसाक्षात्कारः, परानन्दनिर्वृतिश्च स्वयमेवाविर्भविष्यतीति निश्चिनुमः । यथोक्तमनेनैव संयमीन्द्रेण—

संत्यज्य शास्त्रजालं संव्यवहारं च सर्वतस्त्यक्त्वा ।
आश्रित्य पूर्णपदवीमास्ते निष्कम्पदीपवद्योगी ॥

वैराग्यविपुलमार्गं विज्ञानोद्दामदीपिकोद्दीप्तम् ।
आरुह्य तत्त्वहर्म्यं मुक्त्या सह मोदते यतिराट् ॥

आशावसनो मौनी नैराश्यालंकृतः शान्तः ।
करतलभिक्षापात्रस्तरुतलनिलयो मुनिर्जयति ॥

---

## पुस्तकसमालोचना ॥

### लघुकाव्यानि ॥*

इह खलु जगति दुरतिक्रमेण कलिविलसितेन सर्वतो विलुप्तप्रसरेषु महाकविप्रणीतेषु तेषु तेषु सुभाषितेषु, विशृङ्खलालापेषु च जगद्विप्रलम्भकेषु कविकत्थकेषु, दाम्भिका परं पूजार्हाः, शून्यवादा एव नितान्तमर्हणीयाः, कुहनापटव एव प्रथमपुरस्करणीया इत्येवं विपरिवृत्ते जीवलोके, मधुमयभणितीनीमानि काव्यानि सरसगभीराभिर्वचनचातुरीभिस्तमिमं लोकं पुनरपि स्वां प्रकृतिमापादयन्ति, नन्दनीयेन पदविन्यासेन, आस्वाद्यतमेन भावमाधुर्येण, सरसया घटनभङ्ग्या, अत्युत्तमेन मुद्रणेन, विलोभनीयेन परिष्करणेन च श्रीवाणीविलासमुद्रालयात् बहिरवतारितानि नूनमावर्जयन्ति सहृदयानां मनांसि ॥

* The Minor Poems of Nilakanta Dikshita, Sri Vani Vilas Press, Srirangam As. 12. Postage extra

प्रणेता चैषा भरद्वाजकुलजलधिकौस्तुभात् चतुरधिकशतप्रबन्धनिर्माणदिगन्तविश्रुतकीर्तेः सुगृहीतनाम्न श्रीमदप्पय्यदीक्षिताल्लब्धान्ववायः शिवलीलार्णवाद्यनेकप्रबन्धप्रणेता महाकविः श्रीनीलकण्ठदीक्षितः । सोऽयं महाकविः स्वयं तिरुमलैनायकराजसदसि आस्थानपण्डितपदवीमधिरूढः तदा तत्रागतानां पण्डितंमन्यानां केषांचित् वितण्डावावदूकतां कोलाहलमात्रसारतां बहुशो विकत्थनतां मिथ्यास्तवपरितोषिताद्राज्ञः पारितोषिकसंपादनचतुरतां तथान्येषामात्मनां मान्त्रिकत्वप्रख्यापनेन राजकुलविप्रलम्भकतां चावेक्ष्य नितान्तनिर्विण्णमानसः कलिविडम्बनं नाम प्रथमं शतकं प्रणिनाय ॥

तत्रेमानि पद्यान्यनुवाचयन्तो रसिकमहाशयाः कलिकालस्थितिं यथावस्थितमनुवर्णयतोऽस्य महाकवेरन्यादृशं लोकानुभवमवगच्छेयुरिति सहृदयाः प्रमाणम् । तथाहि—

'असंभ्रमो विलज्जत्वमवज्ञा प्रियवादिनि ।
हासो राज्ञः स्तवश्चेति पञ्चैते जयहेतवः ॥ १ ॥

जिगीषुणा ह्रियं त्यक्त्वा कार्यः कोलाहलो महान ॥ ५ ॥

स्तोतारः के भविष्यन्ति मूर्खस्य जगतीतले ।
न स्तौति चेत् स्वयं च स्वं कदा तस्यास्तु निर्वृतिः ॥ ७ ॥

यदि न क्वापि विद्यायां सर्वथा क्रमते मतिः ।
मान्त्रिकास्तु भविष्यामो योगिनो यतयोऽपि वा ॥ १० ॥

आयुःप्रश्ने दीर्घमायुर्वाच्यं मौहूर्तिकैर्जनैः ।
जीवन्तो बहु मन्यन्ते मृताः प्रक्ष्यन्ति कं पुनः ॥ १६ ॥

वासः पुण्येषु तीर्थेषु प्रसिद्धश्च मृतो गुरुः ।
अध्यापनावृत्तयश्च कीर्तनीया धनार्थिभि ॥ ८७ ॥

किं चार्थपद्धतौ—

"यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ते ॥"

इति भर्तृहरिसुभाषितमेवार्थं महाकविरसौ

"अध्यापयन्ति शास्त्राणि तृणीकुर्वन्ति पण्डितान् ।
विस्मारयन्ति जातिं स्वां वराटाः पञ्चषाः करे ॥"

इति सचमत्कारं निरूपयन् रञ्जयति सहृदयानां मनांसि ॥

अन्यत्र च 'शतश्लोकेन पण्डितः' इत्युक्तरीत्या कतिचिच्छलोकपठनमात्रेणान्यान् पाठयितुमुपक्रान्तान् मध्ये शिष्यकृतानां प्रश्नानां 'समयोऽद्यातीतः । श्वो भवतु । स्पष्टमग्रे भविष्यति' इत्यादिकमेवोत्तरयतो लोकप्रतारिणश्च कांश्चन पण्डितंमन्यान्,

"वाच्यतां समयोऽतीत. स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ॥"

इत्यादिभिः सरसं परिहसत्यसौ दीक्षितः ॥

"आनन्दबाष्परोमाञ्चौ यस्य स्वेच्छावशंवदौ ।
किं तस्य साधनैरन्यैः किंकराः सर्वपार्थिवाः ॥"

इति पद्येन दाम्भिकस्वरूपं लोकप्रतारणोपायांश्च सुनिपुणं निरूपयति ॥

एवमेतादृशैः पद्यशतैः कलिकालस्य विडम्बनं कविकुलहृदयंगमया सरण्या कुर्वन् सहृदयानाह्लादयति ॥

द्वितीये सभारञ्जनशतके--

"षड्दर्शनीपरिज्ञानमण्डितैरिव पण्डितैः ।
स्तम्भैश्चित्रैर्वितानैश्च सभा किमवभासते ॥

उद्यन्तु शतमादित्या उद्यन्तु शतमिन्दवः ।
न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तमः ॥"

इत्यादिभिः पद्यरत्नैः विद्वज्जनरहिताया परिषदो निर्गन्धस्येव कुसुमस्यानादरणीयतामुपवर्णयन्, अन्यादृशं विद्वज्जनमहिमानम् 'विद्याख्यमन्तर्धनं येषां तान् प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते' इति भर्तृहरिणोपवर्णितमुक्तिभङ्ग्याविष्करोतीति रसिका मोदन्ते ॥

किं च नीरसचटुलपदविन्यासजटिलशास्त्रकर्कशधियामनाघ्रातसाहितीरसगन्धानां केषांचित् तार्किकमल्लभल्लूकानां साहित्यामनादरमपुरस्कारं चासहमानोऽसौ कविवरः—

"साहित्यादपि शास्त्राणि विशिष्टानीति चेन्मतिः ।
ततोऽपि वेदाध्ययनं ततोऽपि शिवकीर्तनम् ॥"

इति सरसमवहेलयतीति, हन्त! वेदाभ्यासपराणां जडता 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इत्युपक्रान्तवतः पतञ्जलेरारभ्य कविकुलक्रमेणानुवर्णिता सार्वजनीनाभूदिति धिङ् निरर्थकनिगदाध्ययनमात्रपरताम् ॥

तृतीये शान्तिविलासे एकपञ्चाशत्पद्यात्मके—

ऐहलौकिकस्य काम्यसुखजातस्याल्पास्थिरतां दुरितोदर्कतां च सरस प्रतिपादयन् प्रकृतिमण्डलमिदं सकलमेव सांसारिकात् जनिमरणादिकृच्छ्रनिबिडितात् भोगजातात् प्रतिनिवर्तयितुमुपक्रमतेऽसौ दीक्षितः ॥

तुरीये वैराग्यशतके—

कामलोभतृष्णाकबलिताय जीवलोकाय बहुभिर्निदर्शनैर्वैराग्यमुपदिशन्, मध्ये 'परोपदेशे पाण्डित्यम्' इति केषांचित् परोपदेशे चतुरिमाणं स्वानुष्ठानवैकल्यं च,

"पितृभिः कलहायन्ते पुत्रानध्यापयन्ति पितृभक्तिम् ।
परदारानुपयन्तः पठन्ति शास्त्राणि दारेषु ॥"

इति सनिदर्शनमुपवर्णयन् चमत्करोति सहृदयान् ॥

पञ्चमे आनन्दसागरस्तवे,

श्रीहालास्यनाथदयिताया जगदम्बिकाया आनन्दसागर चरणारविन्दयुगलं संसारसागरतरणौपयिकमुपश्लोकयति ॥

षष्ठे अन्यापदेशशतके,

बहून्यन्यापदेशपराणि सहृदयहृदयाह्लादनानि च पद्यरत्नानि ग्रथयति ॥

सप्तमे शिवोत्कर्षमञ्जर्याम्,

सप्तसप्तिप्रभनिटिलेक्षणस्य धूर्जटेरेव पारम्यं तदितरदेवानां नाम्नाप्यनाम्नातव्यतां चोपवर्णयन्नात्मनः परममाहेश्वरत्वमवगमयति ॥

———✻———

# विजयिनी ॥

( पूर्वतोऽनुवृत्तम् )

एतादृशं कालस्याकिञ्चित्करत्वं दीर्घत्व च विशेषतो विप्रयोगिनां हृदयेषु परिस्फुरति । ते हि स्वाभिलषिता नायिकां नायकं वा चिरं ध्यायन्तः कालस्य सत्तामपि विस्मरन्तीति हन्त प्रभुत्वं दुरात्मनः कुसुमशरस्य! भवत्वक्ष्णोः प्रभातम्, भवतु जगत् खरतरभानुकरोद्वेजितम्, भवतु रमणीयतम सायंसमयाभिगम·, प्रादुर्भवन्तु शरच्चन्द्रिकाधवलाः क्षपाः वसन्तो मधुयामिनी च, वियोगिनां मनसो गोचरीभूत· पदार्थ एक एव— नायको नायिका वा । उपर्युपदर्शितेनैव पथा रत्नाकरो विजयिनी च कालं यापयतः स्म । ईश्वरसूरिणा प्रेषितानि विजयिन्या लिखितान्यक्षराण्येवाशानिबन्धनानि रत्नाकरस्याभूवन्, तस्याश्च तस्य । परमेतावीश्वरसूरिश्च कदास्माद्विप्रयोगादनयोर्भविष्यति मोक्ष इति नाज्ञासिषुः । विजयिनी च पितृगृहे कथमपि कालं यापयन्ती कस्मिन्नपि कर्मण्युपस्थापितभावा किमपि मनसि कुर्वाणा तदेव चिन्तयन्ती चिन्तादग्धशरीरा विशुष्कप्रायाभूत् । इमामीदृगवस्थां सखीमुखात्परिज्ञाय पितरौ, ननु विवाहचिन्तैवास्या व्याधेर्निदानमिति निश्चिक्यु· ॥

एकदा पाथोधिपतनोन्मुखे दिनराजे कार्तवीर्यो भार्यया सह विजयिनीमित्यैतस्या अकथयत्—' वत्से, अतिक्रान्तः खलु सुमहान् कालस्तव विवाहचिन्तादावविदग्धचेतसोरावयो ; पूर्वमेव ननु प्रत्यक्षीकृतमस्माभिः, यत्त्वमधुनानुरूपवरप्राप्तावतिमात्रमुत्कण्ठिता कृष्णपक्षे दिनेदिने क्षीयमाणेव चान्द्रमसी कलाऽन्तर्दह्यमानशरीरा तिष्ठसीति । एतदेवास्माकं परमं प्रमोदस्थानं यत्त्वानुरूपेण वरेण घटनायां

त्वया प्रयतमानया धीरत्वमुपदर्शितम् । अत्रान्तरे चोपदर्शितं प्रभुत्वं दैवेन, येन समूलघातमुन्मूलितः कार्तवीर्याणामाशातरुरेकाकी सूनुरावयोस्तव च भ्राता । अस्तु नामैतत्; गतस्यार्थस्य कृते परिदेवन नाम यद्यपि मानुषाणां स्वाभाविको भावस्तथापि तस्य वैयर्थ्यं प्रतीतवतामस्माकं न तावते परिदेवनाय कल्पते । परं क्षीणं तव सुकुमारमङ्गकं बलवदनुदिनं क्षीयमाणमालोक्य विधिरद्यापि वामोऽस्माकमिति निश्चयेन पश्यतामपि कथं कथमपि– अप्रदर्श्यैव एकाकिनस्तनयस्य मरणशोकम्– तव विवाहविधौ प्रयतितव्यमवश्यकर्तव्यतामापतति । तद्ब्रूहि वत्से, कार्तवीर्यपक्षीयः को युवानुरूपेण रूपेण गुणैश्च तवानुकुर्वन् भर्तृपदवीमारोढुमर्हति ' इति । क्षते क्षारनिक्षेपसदृक्षेणानेन वाक्यजालेन स्तम्भितामिवोद्विग्नामिवैनामालोक्य न लज्जा मुखरीकरोतीत्यवधार्य कार्तवीर्यः पुनर्वक्तुं प्राक्रमत–– ‘अथवा पाटलिपुत्राधिपस्तवानुरूप इत्यस्माकं मति'। यौवनचपलतानिष्टं द्रष्टुं न पारयतीत्यत एव गुरुजननिर्धारितो भर्तैव त्वयोररीकर्तव्यः । अपि च नैव सोऽपि तेऽपरिचितो येन तमविदितगुणशीलं स्वानुरूपं मन्तुं प्रभवसि । तत्सुविचार्य गभीरेण प्रशान्तेन चेतसाऽस्मिन्नायुष सुखदुःखनिर्णायके पाणिग्रहणविषये आलोच्य सकलान् भावान्, समीक्ष्यात्मनः पाणिग्रहीतुश्च गुणवत्ताम्, निवेदयास्मभ्यं यत्तव रोचते न वा पाटलिपुत्रः’ इति । अनुपदमेव कार्तवीर्यः सह भार्यया कार्यान्तराहूतो गृहेभ्यस्तेभ्यो निश्चक्राम, विजयिन्यपि किमपि विदिशमीक्षमाणा स्वहस्ततलनिहितकपोलभागा विनिन्दन्ती स्वभागधेयम्, नयनयुगलविनिःसृतास्रबिन्दुव्यासेन कपोलयुगलेन चन्द्रिकालिङ्गितं हिमकर विडम्बयन्ती क्षणमतिष्ठत् ॥

विजयिनी तु चिन्ताशतैः समभिव्याप्तान्तरा, किमहं करवाणि ? को ममाधुना पन्थानं दर्शयेदिति विचारयन्ती परिणेतृविवासनोत्पादितेन दुःखेनात्मानं धारयितुमप्यशक्नुवती तत्रापि समापत्तिसमापतितेन तातादिष्टेन विवाहानुकूल्येनात्मनश्चारित्र्यदोषं निर्धारयन्ती, ईश्वरसूरिरेवात्र शरणमिति मनसि कुर्वाणा गिरिजाजानिदर्शनमिषेण देवालयमगादीश्वरसूरिं च दृष्ट्वा तं प्राणंसीत् । स विपुलाभिराशीर्भिरभिनन्द्यैनामवादीत्— 'वत्से, किमिति भवती सविशेषमेवाद्य विवर्णवदना दृश्यते ? केन कारणेनातर्कितागमेन त्वं मामपि रत्नाकरस्यात्याहिताशङ्किनं करोषि ? अपि न दृष्टो भवत्या रत्नाकरस्य पूर्वो लेख ? अपि विद्यते किमपि विलम्बनासहं पुनरपि निवेदनीयान्तरम् ?' इति । विजयिनी तस्यात्मनि प्रेम्णो निरतिशयमाधिक्यं दृष्ट्वा नितान्तं हर्षनिर्भरा किञ्चिदुत्तेजितमनाश्च भूत्वा तस्मै सकलमपि तातनिर्दिष्टं न्यवेदयत् , किमत्रानन्तरकरणीयं तन्निवेदयतु भगवानिति व्यजिज्ञपच्च ॥

ईश्वरसूरिस्तु मनसि बहुधा विचिन्त्यानेनैव क्रमेणानयोः पाणिग्रहणविधिः प्रकाशतां नेतव्य इति निर्धार्य, किञ्चिदुपजातस्मितस्तां प्रत्यवादीत्— 'अयि वत्से, ननु निश्चीयतामधुना यदवसिताः खलु रत्नाकरस्य विवासनदिवसाः, सुष्ठ्विदं संपन्नं यद्भवदीयः पितैव तव विवाहविधावभिनिवेशवान् ; तद्यद्यस्ति मयि ते विश्वासः, यदि विद्यते गुरुजनकथनीयेष्वादरः, यद्यवशिष्टास्ति स्वल्पापि मयि भक्तिः, यदि वाञ्छयते रत्नाकरेणाचिरात्समागमः, यदि चेष्यते सुखानुभवोऽचिरेणैव, तर्हि दर्शय क्षिप्रमस्य विवाहस्यात्मनोऽनुकूलतां पितुः ।' अनेन वचनकदम्बकेन संभ्रान्तामिवावलोक्य विजयिनीमीश्वरसूरिः पुनर्वक्तुं प्राक्रमत— 'मा बिभीहि वत्से, न कि-

मपि परिहीयेत तवामुना । अतस्त्वं विवाहदिनस्य पूर्वरात्रे गुटिकामिमां सेवस्व, येन त्वं मृतेव संलक्षिता भविष्यसि । एकाकिनीं दुहितरमुत्सृष्टजीवितामवेक्ष्य कार्तवीर्यो दुःखाभिभूतः ' यः कश्चनेमामुज्जीवयिष्यति, तस्याभिलषितपूर्तिमहं कियतापि प्रयासेन करिष्यामीत्युद्घोषयेत् । अहमपि च तदा तत्र सन्निधिं कृत्वा केनचनापदेशेन त्वामुज्जीवयिष्यामि, अभिलषितं च सर्वेषां संपादयिष्यामि, आह्वास्यामि चात्र रत्नाकरम् । तदशङ्कितं गृहं गत्वा मदादिष्टं समाचर ' इत्युक्त्वा तूष्णीमभूत् । सापि नेदृश्य आकृतयो रूपविसंवादिन्यो भवन्तीति चेतसि निधाय गृहानगात् ॥

अन्येद्युर्विजयिन्यभिप्रायज्ञानाय समागता जननी भृशमानन्दतुन्दिला बभूव । इदमेवास्या विमनस्कत्वस्य कारणमिति तया निरणायि । परं विजयिनी तु कृतकप्रमोदभरितमिवात्मानं दर्शयितुं प्रारभत । ईश्वरसूरिवचनेन समुत्पादितं धैर्यमानन्दरूपेण परिणतमुन्मत्तानन्दसदृक्षतां प्रययौ । वृत्तमपीदमखिले मन्त्रिकुले प्रसृतमभूद्यदचिरादेव विजयिनीपाटलिपुत्राधिपयोर्भविता विवाहः स एव च वरो विजयिन्या अभिमततम इति । अनेन कालेन विजयिनीविमनस्कत्वेन सहादर्शनमगान्मधुमासः ॥

माधवालिङ्गिता निसर्गलक्ष्मीरुपबृंहितेन रामणीयकेन जनमानसान्याकर्षयन्ती व्यराजत । पाणिग्रहणविधिप्रसङ्गेनात्तदक्षिणो भिक्षुकगणस्तृप्तो भूत्वा यजमानायाशिषं प्रयुञ्जानो विटपिवल्लरीभिः स्वविभवेन मकरन्दादिना सत्कृतेन द्विजेन सदृक्षतां प्रायात् । वारणावती तु कार्तवीर्यदुहितृविवाहमिषेण आत्मानं विभूषयन्तीवादृश्यत ॥

(क्रमशः ।)

# आर्यभाषाचरितम् ॥

(पूर्वतोऽनुवृत्तम्)

प्राचीनैरपि स्वर्णलुब्धका इत्याख्यातैर्दरददेशीयैरजातशत्रो राजसूयसमये पिपीलिकाशब्दवाच्य: कश्चित्कांचनविशेष उपायनमानीत इति माहाभारती कथा पूर्वोक्तकथां द्रढयति । आखुजातीयक: कश्चिज्जन्तुविशेष: इलावृतवर्षे (Tibet) पुत्तिकावद्वसुधोत्खननपटु: भूश्वभ्रेषु निवसन् दृष्ट: । अनेन जन्तुना उत्खातोद्धृतेषु वसुंधरारज:कणेषु तपनीयांशा संदृष्टा । पिपीलिकाशब्दस्तस्यैव जन्तोर्वाचक इति लासन्पण्डितो मन्यते । आकर्णान्तं चर्मावृतशरीरा: कौलेयकानुगता: खनित्रैर्भुवं खनन्त: प्रभूत चामीकरमधिगच्छन्त: केचन मनुष्या: इलावृतवर्षे शोधकैर्दृष्टा: । इयं पिपीलिकाकथा तत्परैवेत्यन्ये समर्थयन्ति ॥

अन्यासु देशभाषास्वपि स्वर्णपर्याया दृश्यन्ते; यथा इटालियन्भाषासु—आरम्—आसम्—अरोरा—इत्यादय: । अरुगो अमोसाशब्दावपि तज्जातीयकौ । एतेषां पदाना धात्वर्थ: कान्ति: । पारशीकभाषायां सिर्ण सोर्णि जार्णीतिशब्दा हिरण्यपर्याया उपलभ्यन्ते ।

अस्सीरियादेशचैत्यमन्दिरेषु सर्वलोहपरिसंख्याने स्वर्णादपि पूर्वं रजतस्योक्तत्वात् रजतं स्वर्णादपि प्राचीनतरदिति चरित्रान्निश्चीयते । किंतु पर्वतगर्भेष्वेव दृष्टत्वान्नदीसिकतास्वनधिगतत्वाच्च स्वर्णवत् रजतस्य प्राचुर्यं तदानी नासीदिति वस्तुस्थिति: । आदौ सेमिटिक्जातिषु रजतनामानि दृष्टानि, यथा— सर्पु जर्फु कस्पु केसफ् इत्या-

दयः । वाजसनेयसंहितोक्तलोहपरिगणने हिरण्यस्यानन्तरमयः अभिहितम् । अयःशब्दोपि ऋग्वेदे हिरण्यपर्यायत्वेन प्रयुक्तो दृश्यते; यथा—

प्र यो वां मित्रावरुणाजिरो दूता अद्रवत् । अयःशीर्षा मदे रघुः ॥

हे मित्रावरुणौ वा युवां अजिरो गमनशीलो यो यजमानः प्राद्रवत् अभिगच्छति स देवानां दूतो भवति । अयःशीर्षा हिरण्यालंकृतशिरस्कश्च भवति । मदे रघुर्मदकरे धने गन्ता च भवति ॥

किंतु यजधातुनिष्पन्नयजतशब्दवत् दृशूधातुजदर्शतशब्दवत् रञ्जधातूत्पन्नो रजतशब्दोपि श्वेतिमार्थे प्रयुज्यते; यथा— रजतं हिरण्यमिति दानानर्हत्वप्रतिपादनप्रकरणे भणितम् । अहिगुप्तभाषायां रजतपर्यायौ हाट् चाट्शब्दौ प्रथमं कान्तिपरत्वेन व्यवहृतौ दृश्येते । रजतशब्दः अथर्ववेदे लोहपरत्वेन प्रयुक्त. । छन्दोऽवस्थाने इरिजतशब्दोऽस्ति । इतरभाषास्वपि एतल्लोहपर्याया दृश्यन्ते । यथा आर्गट्– आर्गेंट्, आरियट्, आबेंट्, अहैंजे, आर्जेटम् ॥

ताम्रमहिगुप्तदेशे राज्ञे आसियाखण्डवासिभिरनुवत्सरं करदीकृतमासीत् । ततो हिन्दूशर्मण्यप्रजानां ज्ञानगोचरीकृतमेव । सर्वलोहेष्विदमेवाद्यमिति केचन मन्यन्ते । हिन्दूशर्मण्यभाषागणे कासुचिद्भाषासु–उरुद्–नुहस्–वस्–वेस्क–पटारो इत्यादिभिः अन्यासु भाषासु–बाकिर् इत्यादिशब्दैश्च व्यवह्रियते । तस्मात्सर्वेप्येते हिन्दूशर्मण्यजनाः आदिकालात्प्रभृति अधिगतताम्रविषयकज्ञाना इति चरित्रात् तत्तद्भाषागतशब्देभ्यश्च निश्चीयते । यथा—

लॅटिन्–एस्

योधिक्–यैङ्
संस्कृत–अयस्
छन्दोवस्थानम्–अयन् ॥

एतच्छब्दानां व्युत्पत्यर्थं विज्ञातुं दुःशकम् । एस्– अहेस्– नेस्– अहिनम्– इत्येतत्रिकं ताम्रस्य ताम्रमिश्रितस्य कांस्यरूपापर-लोहस्य च वाचकं भवति । ऋग्वेदे श्याममयः लोहितमय इत्यादिप्रयोगदर्शनात् अयःशब्दो लोहसामान्यवाची आसीदिति ज्ञायते । तस्मिन्नेव विद्युत्स्फुरणानि वनपोत्रिभिरुपमितानि अयोदंष्ट्रा इत्याख्यायन्ते । सायंतनकिरणोपलक्षितः सूर्यः अयःस्थूणेनोपमीयते । वाजसनेयसंहितायां (१८—१३) हिरण्यम् अयस्— श्यामं लोहं सीसम् इति त्रिष्वपि कथितत्वादयःशब्दस्य ताम्रमेवार्थः । महीधर-प्रभृतयः प्राचीनव्याख्यातारः अयःशब्दं ताम्रार्थकेन लोहपदेन व्याचख्युः । नवीनास्तु अय इत्येव ॥

सीसत्रपुशब्दौ ऋग्वेदभाषायां दृष्टौ । किं त्वितरभाषासु एक-शब्देनैव लोहद्वयमपि व्यवहृतमिति भाति । तद्वाचकपृथक्शब्दा-भावात् हिन्दूशर्मण्योत्पत्तिस्तयोर्मृग्येत्यनुमीयते । त्रपुषः प्राचीननाम– प्लुम्बम् अल्बमित्यासीत् । सेसिटिक्भाषासु केचनशब्दास्त्रपुवाचका दृश्यन्ते । ते यथा–– कासजातिरइङ्कस्थुरु–कोसिटेरु–कोसिटर्–कोसिटोरियु–कास्तीर् ॥

अथ तरुगुल्मलतादिविज्ञानम्—

अस्त्यैरोपाखण्डे भारतभूम्यां च प्रवर्धमानः बर्च–बर्कि–ब्रज्–बेर्जास्–ब्रिजा इत्यादिविदेशीयभाषापदैः भूर्ज इति गीर्वाणशब्देन च

व्यपदिश्यमान· महानेक आरण्यमहीरुहः । भ्राजृदीप्तावित्यस्माद्धातोर्निष्पन्न. स्यादयं शब्द. । औत्तरीयाक्षरेष्वासु प्रचीयमानं श्वेतभूर्जतरुमेवाभिधत्ते । ऐरोपाखण्डस्य दक्षिणभागेष्वय भूरुहो मृग्यः । अशोकतरुवाचिना फ्रग्जिनसि तिवेटिन् शब्देन संबद्धोयं शब्द इति केचित् शाब्दिका मन्यन्ते । शार्मण्यभाषायां भूर्जवृक्षस्य ल्यूडर् ल्यूडरन्नित्यपरौ पर्यायशब्दौ स्तः। श्रीकुदेशे भूर्जवृक्षस्याभावात् कनोपीति तद्देशीयभाषाशब्द. भूर्जतरोः सजातीयं यल्दुरिति वृक्षविशेषं निर्दिशति । शरस्य विल्लो इति ऐरोपानाम आपारशीकं व्याप्तम्—

वेटिन्—विटेल्स्

जंड्—वैटि

पारशीक—विड्

ऐरोपाखण्डस्थभाषापदविमर्शनेन सकलतरुनामसु विसंवादो नास्तीत्यधिगन्तुं शक्य. । अखिलवृक्षाधिराज्यपदभागैरोपाखण्डे प्राचीनदास्तव्य ऊकुशब्दाभिलपनीय महानवनीरुहोऽस्ति । तस्य तत्फलस्य च त्रीणि वाचकपदानि सन्ति । तानि यथा— लेटिन्—केर्कस्, जर्मन्—फर्हा—फेरिहा । पूर्वमैरोपाखण्डे ऊकरण्यानि बहुलान्यासन् । शर्मण्यदेशस्योत्तरदिग्भागे बहुषूद्देशेषु सान्द्रपर्णसमूहनिचोलितानोकहानां स्थाने सूच्याकारवृक्षाः प्ररूढाः । ऊकुतरूणां स्थानं देवदारुभिः समाक्रान्तमिति ग्रन्थरक्षागारानुसंधानेन ज्ञायते । तस्मात्पूर्वोक्तकेर्कसादिशब्दानां व्युत्पत्त्यर्थपर्यालोचनया प्रथमं ऊकुतरु·, अनन्तरं देवदारुद्रुमश्च व्यवह्रियत इति स्पष्टम्। अन्यच्च यदेव ऊकुतरुवाचि तदेव द्रुमनामान्यवाचित्वेनाधोलिखितशब्दसंघातविमर्शनेनोपलभ्यते ।

अधस्ताच्च तस्य प्राचीनाग्रेषु दर्भेषूपकल्पितासनं संनिरुद्ध-सकलेन्द्रियप्राणतया निष्पन्दावयवं विलम्बिजटापटलपरिवेष्टितशरीरतया वल्लरीवलयपरिवेल्लितमिव स्थाणुं कृष्णमृगाजिनावच्छन्नशरीरं चिरविधृतसामाधितया जातविश्वासैः पल्लरथैरासेवितस्कन्धदेशमाश्रम-मृगैश्चोपारूढपरिचयैराश्रिताङ्कदेशं दक्षिणामूर्तिमिवास्थितदृढयोग भसितावच्छादितमिव जातवेदसमाङ्गिरसं मुनिमवलोकयामास । विलोक्य चैतादृशं तापसमवरुह्य तुरगात् 'भोस्तपस्विन्! पौरवोऽहं राजा परीक्षित् मृगयां गतः पीड्यमानस्तृषा पानीयमभिकाङ्क्षन् त्वदाश्रममुपगतः । निवेदय जलाशयम्' इत्यपृच्छत् ॥

अथ चिरनिरुद्धेन्द्रियग्रामतया लब्धबाह्यप्रसरेणातिक्रान्त-स्थानत्रितयेन लयमुपगतेन परस्मिन् ज्योतिषि हृदयेनाक्रमागतमपि नृपतिमचेतयमाने तूष्णीं स्थिते तपस्विनि अतिप्रभूततया क्षुधो दुःसहतया तृष्णाया दुःखदायितयाटवीपरिभ्रमणस्य संतापहेतुतया मध्यंदिनदिनकरातपस्यानतिक्रमणीयतया च विधेः अभूतपूर्वेण सर्वाङ्गोपतापिना हृदयकलुषीकरणनिपुणेनानुबध्नता पापं क्षपयता साधून् अवधीरयता गुरून् कारयता अकार्याणि, किं बहुना? अखिलानर्थहेतुना किंचात्मपरिभवासहिष्णुना निष्क्रियाप्रतीक्षेणेव कलिना कोपेन बलवदाविष्टः विज्ञातधर्मोऽपि विद्वानपि विनीतोऽपि ब्रह्मण्योऽपि दान्तोऽपि धीरप्रकृतिरपि विमृश्यकार्यपि विलुप्तविवेकः कापुरुष इव तत्क्षणमेवमचिन्तयत्—'अहो मिथ्यायोगदुर्ललितेनामुना तापसेन स्वयमुपागतोऽप्याश्रमं पिपासार्दितोऽपि याचमानोऽपि पानीयं न संभावितः प्रत्युद्गमनेन, न पूजितोऽर्घ्येण, नोपलालित. पाद्येन, न प्रीणित आसनेन, नार्चितो मधुपर्केण, न तर्पित आतिथ्येन नापि श्रावितः सूनृतां वाचम् ।

सर्वथाऽयं मदवधीरणायैव धारयतीमं मृषायोगम् । दण्ड्य एवायं धर्मातिलङ्घी, यो मां भर्तारं वसुन्धराया माननीयं लोकस्य न गणयति । ब्राह्मणोऽयम्, विशेषतो वनेचरो मुनिः नोग्रमर्हति दण्डम् । तदुचितं करोमि संविभागमस्य' इति तत इतो दत्तदृष्टिरवलोक्या विदूरे परासुमुरग तमुत्क्षिप्य धनुषः कोट्यासज्यांसदेशे मुनेरनुपशान्तमन्युरेव तस्मादतिक्रम्य दविष्ठे वर्त्मनि कुहचिन्निजान्वेषव्यग्रेणानुचरवर्गेण संगत. स्वनगरमुपासदत् ॥

आगतश्चात्मकृततादृङ्महर्षितिरस्करणापराधस्मरणमुषितचेताः अधिरुह्य राजभवनप्रासादं द्वारि निषिद्धाशेषपरिजनप्रवेश· अनभिनन्दन् सुहृदः अविचारयन् राजकार्याणि अननुपालयन् जीवितनिर्विशेषामिरावतीमनपेक्षमाणो मन्त्रिण अनभिकाङ्क्षन्नुपचारान् अभिभूत इव कृतमहापातक इव हृतराज्य इव हतश्रीरिव विविक्त आसनन्यस्ततनुरेकाकी दुरन्तां चिन्तामिमामकरोत्— 'अहो निर्निमित्तदोषाविष्टेन मया बालेनेव विमानित· समवधीरितः स तपस्वी । नियतमयं वैरनिर्यातनोद्यतः कलिराविश्य मामात्मोचितमचेष्टयत् । कथमन्यथाहमेवेदमसद्बहुमतमतिनृशंसं कर्माकरवम् । मया खल्वैश्वर्यावलेपनिर्दग्धविवेकेन क्रोधान्धेन न चिन्तित कुलममलम् । न विभाविताः पितामहाः । न परिज्ञातो महिमा महर्षीणाम् । न विवेचितो धर्माधर्मभेद· । न विचारिताः कालदेशप्रकृतय. । अपि च, विस्मृतानि शास्त्राणि । अवधीरिता गुरूपदेशाः । सर्वथैकस्मिन्नेव क्षणे समस्तमपि तत् व्यर्थतामुपनीतम्, यद्धुतं यद्दिष्टं यच्चाधीतं यदपि तप्तं यद्वा विज्ञातम् । हन्त ! प्रवृत्तोऽस्मि यं निरसयितुं तेनैव बलवदाविष्टोऽस्मि कलिना । उद्यतोऽस्मि यं व्यवस्थापयितुं तमेव धर्मं नाशयितुं व्यवसितोऽस्मि ।

उद्युक्तोऽस्मि यं निःशेषयितुं तमेव स्वयमाचरमधर्मम् । प्रयते यत्प्रतिष्ठापनाय तामेवाशङ्कमलङ्घयं मर्यादाम्। शिक्षणाय यादृशां शस्त्रमधारयं स एवास्मि संवृत्तः। किं बहुना? यदर्थं च परित्रातोऽस्मि भगवता कृष्णेन सर्वमपि तदवसादितमेकपद एव मया क्षेमावहं जगतः प्रजानामन्वयस्यात्मनश्च । कथं नु निवेदयेयमविनयमात्मनो गुरवे? कथं च सुहृद्भ्यः? कथममात्येभ्य ? कथमिरावत्यै? सर्वथाऽभवमवहेलनीयः खलानां, शोच्य. सताम् । आस्तामिदम् । तपोवने च प्रतिबुद्ध. समाधे· स महर्षिर्विलोक्यात्मनस्तादृशमसदृशं न्यक्कारं परिकुपितो महदनिष्टमुत्पादयेन्मम, शिष्यगणो वा तस्य? आसन्नकोपाः खलु मुनयो विनाशयेयुर्महदेव वागस्त्रै.—' इत्यन्यानि च विकल्पयन् संभृतदुरन्तदु.खसंततिसंततदंदह्यमानेन स्वान्तेनाप्रकटयन् ह्रिया तमुदन्तं मन्दादर एव करणीयेषु गमयामास दिवसान् ॥

तस्य च महर्षेस्तनयः शृङ्गी नामाविदूर एवाश्रमस्य विहरमाणः सवयोभिर्मुनिकुमारकैः वाक्कलहप्रवृत्तेन केनचित्— 'अरे रे बलवदवलिप्तोऽसि । पिता ते समाधिनिविष्ट आश्रमागतमतिथिं राजानं न संभावयामासातिथ्येन । ततस्तादृशीमवधीरणामसहमानेन क्षुत्पिपासार्दितेन रोषितेन राज्ञा धर्मातिगामी नूनं शिक्षणीय इति कृत्वा अंसदेशेऽवसक्तः सरीसृपकुणपः। तदेषा प्राप्ता अनर्हणादर्हणीयस्य पित्रा ते धर्षणा'– इति बलवदुपालब्धो मुनिकुमारकस्तत्क्षणोज्जृम्भितमन्युरखिलजगद्दहनपटुर्धूर्जटिकटाक्ष इव तार्तीयीकः सवयोभिरपि दुर्दर्शवदनो बालतया तनीयस्यप्यागसि महान्तमुद्वहन् कोपमाशीविषकुमार इव गरलज्वालामुद्गिरन् मुखेन गिरमेनां व्याजहार—

'अहो अनतिचिरपरित्यक्तेयं वराकी भगवता कृष्णेन पीड्यते कलिना वसुमती । कथमन्यथा राजा व्यपदिशन् कुलं पाण्डवानां नृपवेषच्छन्नो दस्युरिवाकार्यमिदमतिक्षेपणमाचरेत् । धिक् तमनार्यमवनीपालम्, यः खलु शिथिलीकृतविवेक ऐश्वर्यमदेनाश्रमवासिन्यपापे समाधिनिश्चलेऽपि तापसे पापमेतदकार्षीत् । को न्वत्रापराधो महर्षेर्यदनेनोपसेवमानेन निद्रामिव समाधिं न संभावित आश्रमागतस्तृषितो नरपतिः । हन्त, विपर्यस्तो लोकः; यद्ब्राह्मणार्थायैव नियुक्तः पालने क्षत्रबन्धुर्ब्राह्मणानेव तिरस्कुरुते । श्वाऽपि खलु प्रातिहारिको न भक्तं दूषयति स्वामिने अर्पितम् । सर्वथायमन्वयपासनो न वेद विलयं ब्राह्मे क्षात्रस्य । किं चातिक्रान्तलोकमर्यादमपगतधर्मं दण्ड्यतममात्मानमचेतयमानोऽदण्ड्यानेव दण्डयितुं व्यवसित । जानीते चाकुतःप्रतिरोधमात्ममहिमानम्, न बहुमेने तपःप्रभावम् । अपि च न शास्त्रं प्रमाणीचकार । न विचारयामास धर्मम् । नाजीगणच्छीलम् । नाचिन्तयत् कुलम् । न सस्मार ब्राह्मणभरणैकान्तधर्मणां पितामहानाम् । न विभावयामास भगवन्तं वासुदेवम् । तदिदानीमेव दण्डयाम्युद्धतमेनम् । पश्यतु मे तपोबलम्—' इति वदन्नेवाशक्नुवन् मन्युभारं धारयितुमुपस्पृश्य शुचितमं पयः कौशिक्याः 'योऽयमुपशान्ते पितरि ममैवमविनयमाचरत् तमितोऽष्टमेऽहनि तक्षक एव स्वयमागत्य नाशयतु' इति शशाप ॥

ततस्तादृशेन व्यतिकरेणासंहृतकोप एवाश्रममुपगम्यावलोक्य तादृगवस्थमेव पितरं बालतया युगपदभियातो लज्जाक्रोधाभ्यां मुक्तकण्ठमुच्चैररोदीत् । अथ धारणाक्रमवशात् रुदितध्वनिना च बालकस्य चिरादुन्मील्य विलोचने अपसार्य स्कन्धावसक्तमुरगशरीरमन्तिक-

एव निशम्य प्रलपितं निशाम्य च क्षितितलविलुठितं सोरस्ताडम-ब्रह्मण्यमुच्चैः क्रन्दन्तं बालकं चाभूतपूर्वेण विकारेण तस्य तादृशेन पर्याकुलहृदयो मुनिरपृच्छत्— 'वत्स कुत इयमागता तवावस्था? केन ताडितोऽसि? केनाधिक्षिप्तोऽसि? केनाभिशप्तोऽसि? केनापकृतं ते? समाश्वसिहि । पश्य माम्— इति । एवमनुनीत. पित्रा चिरेण संस्तभ्य मन आवेगविकीर्णाक्षरं गद्गदिकोपरुद्धकण्ठमुवाच— 'तात! त्वय्यास्थित समाधिं, मयि चानध्याययोगात् सब्रह्मचारि-भिर्बालकैः सह खेलितुं गतेऽन्यं प्रदेशम्, अन्येषु च कन्दमूल-फलसमित्कुशपलाशाहरणायारण्यमुपगतेषु मुनिकुमारकेषु, बलिकर्म-व्यग्रेषूटजाभ्यन्तरवर्तिषु तापसेषु, भक्तश्रपणनिरतासु मुनिपत्नीषु मृगयां गतेनानुसरता मृगान् अपज्ञातमागतेनाश्रमं याचमानेन पानीयं राज्ञा परीक्षिता अलब्धार्हणतया बलवदभिकोपितेनाजानता माहात्म्यं तपसस्त्वमेव धर्षित इति श्रुत्वा युगपदभिभूतो लज्जा-क्रोधाभ्यामितोष्टमेऽहनि तस्य नृशंसवृत्तेः राज्ञस्तक्षकात्तनुविनाशमु-दीर्याश्रममुपगम्य विलोक्यैवंविधं तिरस्कार तवापारयन् सोऽढुं दुःखं शोचाम्येवम्— ' इत्यादित सर्वमप्युदन्तजातं निवेदयामास ॥

मुनिरपि तेन दुःश्रवेणातिगर्हितेन वृत्तान्तेन पीडितहृदयः प्र-त्युवाच—'हा हताः स्मो वयमकारणदोषदूषितेनापक्वबुद्धिना आत-तायिना बालिशेन त्वया । किमिदमनुरूपं तपसाम्? किमनुरूपमाश्र-मवासस्य? किमुचितं शान्तेः? किं युक्तरूपं दमस्य? किमभिरूपं ब्रा-ह्मण्यस्य? किं चाविमृश्यकारितेयमकार्यासंगोऽयमविवेकविलसितमिद-मनात्मज्ञतेयमधर्माचरणमिदं चापलविजृम्भितमेतत् साधुजनावधीरण-मेतत् । अपि च विहतिरेष धर्मस्य, विनाशस्तपसः, अपचय इष्टापूर्ता-

नाम्, अवसादनमध्वराणाम्, अन्तरायो व्रतानाम्, अनर्थोपगमः श्रुतीनाम्, अफलावाप्तिः स्वाध्यायानाम्, अकाण्डविलय आश्रमाचाराणाम्, विलोपनं नियमानाम्, अनभिमतमार्याणाम्, अप्रशस्यं वृद्धानाम्, अभव्यं तापसानाम्, अपवादस्तपोधनस्य, अतिक्षेपणं मुनिवृत्तीनाम्, किं बहुना? अभाग्योदयो राष्ट्रस्य, यदखिलधरणीपालककुलमणिमकुटकोटीघटितपादपीठः आहर्ताश्वमेधानामनेकावभृथपरिपूत अत्युदारप्रकृतिः राजा परीक्षिदल्पेऽप्यपराधे योजित अतिक्रूरेण शापेन। हन्त, योगक्षेमावेव प्रजानामवसन्नौ। धिक् बालिशतां तव; यया चाभ्युदयनिदानं जगतो भागधेयमेवं विनाशयितुं प्रवृत्तोऽसि। अराजके हि लोके जनाना न भोग्यानि धनानि, न सेव्यानि गृहाणि, न फलन्ति कृषय, न वार्ता सिध्यति, न सेवन्ते दासा दास्यो वा स्वामिनम्, न शुश्रूषन्ते गुरून् शिष्याः, नानुचरन्ति स्त्रियो वा पतीन्, नश्यति मिथो दस्युभूयिष्ठो लोकः, विहन्यन्ते धर्माश्चातुर्वर्ण्यस्य, विच्छिद्यन्ते चाश्रमविधयः, केवलं तुदन्ति झषा इवाबलान् बलिनः, आः! किमिदमकार्यमनुष्ठितमकरुणेनाभिदेनेव कुटुम्बिभवनेषु स्वामिघातुकेन त्वया। अस्मिंश्च निःश्रेयसनिदाने विश्वंभराया महनीयाभिजने विनष्टे राजनि, को दण्डयेत् दण्ड्यान्? कः पालयेत् भुवम्? को रञ्जयेत् प्रजाः? कः सान्त्वयेत् त्रस्तान्? को रक्षेत् साधून्? क उद्वहेद्योगक्षेमौ तापसानाम्? कः शरणमनाथानाम्? कस्त्राता दीनानाम्? का गतिरार्तानाम्? क उपायः सौराज्यस्य? को न्वत्रापवादो राज्ञः परीक्षित; यत्तेन तद्विषयवासिषु तदेकरक्ष्येष्वस्मासु प्रकाशितमप्रतिहतं स्वातन्त्र्यम्। राजा ह्यखिललोकगुरुरपरोक्षं दैवत केन न पूजनीय? केन वा नार्हणीयः? विशे-

षतस्तु मान्यस्तपोवननिवासिना तापसजनेन । तमेवाश्रमगतमखिल देवतामयं राजानमपूजयन् कथं न भवेयमुत्पन्नधर्म ? तादृशस्य दण्डादृते नान्यत्पावनं मम । अप्रमादो हि सर्वत्र श्रेयसे मुनीनाम् । सर्वमपीह राजायत्तं नस्तप स्वाध्यायोऽग्निहोत्राणि यज्ञानि य समाधिरिति । तदेवमवश्याचरणीये खलु धर्मे प्रमत्तेन मया दण्ड्यतामुपनीत आत्मैव शोच्य । किं च शिक्षिते हि मयि सापराधेऽवि ज्ञाय धर्माणां गतिमुन्मत्त इवाकार्यमिदमनुष्ठितवानसि । किं करोमि ? न शक्नोमि शापमिममन्यथाकर्तुम्—' इत्येतैरन्यैश्च कुत्सयन् कुमारमनुपशान्तहृदयोऽथ एवान्तिकवर्तिनमाहूयान्यतमं शिष्यं निवेदयितुमिमं वृत्तान्तं राज्ञोऽन्तिकं प्रेषयामास ॥

सोऽप्यतिक्रम्य दूरमध्वानमतित्वरितगतिरागत्य नगरोपकण्ठभुवमाज्ञप्तोऽपि गुरुणा नियन्त्रितोऽपि गौरवेणानर्थावेदनकातरेणात्यासन्ननरपतिविनाशम्लानेन मनसा दुरन्ता चिन्तामुपययौ— 'अद्य हि राजभवनद्वारमुपागत मा प्रत्युद्गम्य सत्कुर्वते मदागमनप्रमुदितायाभिनन्दते स्वागतेन मां पृच्छते कुशलमाश्रमवासिना प्रमुदितहृदयाय राज्ञे कथमिव निवेदयेयमिमं दुर्वचमतिदारुण शापवृत्तान्तम् । कथं वा विलोकयेयमभ्यर्णोदीर्णतनुविनाशाकर्णनक्षणसमुन्मिषितदु -खावेशविवर्णमानन तस्य ? अथ कथचित् सहजधैर्यावष्टब्धहृदयो जानान एकान्तविनाशं जगदेव निश्चिन्वानोऽप्रतीकारां भवितव्यतामभिव्यञ्जयेद्वा न विकारम्, कथं वा शृणुयां मदालापश्रवणविदीर्णहृदयानां नृपासन्नवर्तिनाममात्यानां राज्ञामधिकारिणामन्येषा च तत्क्षणोद्भ्रान्तबाष्पधाराविलवदनानामुच्चावचान् प्रलापान्, दिगन्तविसारिणं परिदेवननिनदं चावरोधजनस्य, क्रमेण च प्रसृते तस्मिन् सर्वतोऽपि

नगरमुपजातत्रासभराणामितस्ततः परिभ्रमतां प्रवृद्धदवदहनज्वाला जालपरिवृतानां वनमृगाणामिव दीनाक्रन्दितं नागरिकाणाम्। सर्वथा दुःखदानायैव केवलमुत्पन्नोऽस्मि लोकस्य । यद्यनिवेद्यैवेममुदन्तं प्रतिगच्छेयमाश्रमं ततो गुरुनियोगोल्लङ्घनसंभवं महदेन स्पृशेन्माम् । किं चाविज्ञातोपगमेन कालधर्मेणाभिभूते राजनि विनश्येरन्नव स्थापितानि राजकार्याणि । न प्रयतेतैवामुष्मिकनिःश्रेयसायार्थाय राजा । न स्थापयेद्वात्मनः पदेऽन्यम् । जानाम्यहमरण्यगोचरोऽपि बुद्ध्यैव बहुविधरोषोन्मेषव्यतिकरविषयं राजधर्मम् । किं च स्वार्थ-लुब्धैरन्तःपुरजनैर्बन्धुभिः राजाभिरमात्यैः सेनाग्रणीभिरन्यैश्च पर्याकुलिते राज्यतन्त्रे नश्यन्ति अनाथा बहुनाथा वा प्रजाः । सर्वथा अशक्नुवन्निवेदयितुं प्रपन्नोऽस्मि विषमा दशाम् । किं च न प्रभवाम्यात्मनश्छन्देन चेष्टितुम् । प्रमाणं हि गुरुरेवात्र । भवत्वषट्कर्णमावेदयामि राज्ञे—' इति । अवधार्य चैवं राजभवनमाससाद ॥

अथ द्वाःस्थैर्निवेदिततापसागमनेन राज्ञा सत्कृतः प्रविश्याभ्यन्तरं तन्निर्दिष्टमासनं भेजे । ततः स्वागतेनाभिनन्दितः किमपि वक्तुकामो निश्चलपक्ष्ममालाभ्यां लोचनाभ्यां तूष्णीं राजानं विलोकयामास । तदानीं च विदिताभिप्रायेण नरपतिना उपह्वरमुपनीय परिपृष्ट अखिलमप्यात्मागमनप्रयोजनं निवेद्य तेन चानुज्ञातो विषण्णवदनो दूयमानेन चेतसा कृतमहापातक इव लज्जमानो जनेभ्यः अप्रसक्तदृष्टिरन्यतो धरणीमेवावलोकयन् निर्गत्य शनैः शनैः नगरात् स्वाश्रममुपययौ ॥

गते च तापसे विबुध्य त्वासन्नमात्मनस्तनुविनाशं रहसि संमन्त्र्य गुरुणा शारद्वतेन ज्येष्ठं सुतमात्मनः श्रेष्ठमात्मगुणैर्जनमेजयम्

एवं "रौद्रं वास्तुमयं चरुं निर्वपेत्" इति प्रकृत्य "एतया निषादस्थपतिं याजयेत्" इति श्रुतम् । तत्र किं निषादानामधिपतेः त्रैवर्णिकस्याधिकारः, उत निषादात्मकस्य स्थपतेरिति विशये, विद्यावतो निषादाधिपते· त्रैवर्णिकस्यैवाधिकारः, न तु निषादस्य, विद्याविधुरत्वात् तदाक्षेपे गौरवात् । अतो निषादानां स्थपति. निषादस्थपतिरिति षष्ठीसमासमाश्रित्य त्रैवर्णिकाधिकार एव युक्त इति प्राप्ते, षष्ठीसमासे पूर्वपदे विभक्त्यन्तार्थविशिष्टे लक्षणामाश्रित्य उत्तरपदार्थे अभेदसंबन्धेनान्वयो वाच्यः । नामार्थयोरभेदातिरिक्तसंबन्धेनान्वयस्याव्युत्पन्नत्वात् । अत. कर्मधारयस्यैवाश्रयणीयतया निषादस्यैवाधिकारः ॥

अथ उक्तव्युत्पत्त्यनुपगमेऽपि क्षत्यभावः । न च राजा पुरुष इत्यादौ स्वत्वसंबन्धेन राजादे· पुरुषादौ अन्वयप्रसङ्ग इति वाच्यम्, समासातिरिक्तस्थले नामार्थयोः परस्परान्वयस्यैवाव्युत्पन्नत्वात्, सिद्धान्ते राजा पुरुष इत्यादौ राजादेः पुरुषादौ अभेदसंबन्धेनाप्यनन्वयात् । राजा पुरुष इत्यादौ हि अस्तीत्यध्याहारः, 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इति महाभाष्यकारवचनात्, क्रियान्वयमन्तरेण शाब्दबोधापर्यवसानाच्च । तत्र धात्वर्थः सत्ता । आख्यातार्थ आश्रयत्वम् । आख्यातार्थे राज्ञः पुरुषस्य चाधेयतासंबन्धेनान्वय. । तत्र च राजनिष्ठं पुरुषनिष्ठं सत्ताश्रयत्वमिति शाब्दबोधः । राजपुरुषयोरभेदबोधस्तु औत्तरकालिको मानस एवेति चेन्न, राजा पुरुष इत्यादि समानाधिकरणपदस्थले पार्ष्ठिकमानसबोधस्याभेदविषयकत्वात् कदाचित् स्वत्वादिसंबन्धविषयकत्वापत्तिवारणाय नामप्रयोज्यतदर्थान्वयबोधस्याभेदविषयकत्वनियमाङ्गीकारेण राजपुरुष इत्यादितत्पुरुषे

राजादेः पुरुषादौ स्वत्वादिसंसर्गेणान्वयायोगात् । ततश्चाभेदान्वयाय तत्पुरुषे लक्षणाया आवश्यकत्वेन श्रुत्यर्थलिप्सया कर्मधारय एवाश्रयणीयः । विद्याक्षेपकत्वगौरवं तु फलमुखत्वान्न दोषाय ॥

इति षष्ठाध्याये प्रथमः पादः ॥



## अथ द्वितीयः पादः ॥

द्वितीये पादे अधिकारिधर्मनिरूपणम् । तथा हि—'ऋद्धिकामाः सत्रमासीरन्' इत्यादौ अनेककर्तृकसत्रप्रयोगादेकं फलं किं सर्वैः कर्तृभिः अवयवशो भुज्यते किं वा कृत्स्नमिति विशये एकप्रयोगादनेकफलनिष्पत्त्यङ्गीकारे एकेन ज्योतिष्टोमादिप्रयोगेणानेकस्वर्गाद्यापत्त्या तदसंभवादेकमेव फलमवयवशो भुज्यते । यद्यपि ऋद्धिस्वर्गादीनां मुख्यावयवासंभवः, तथापि ऋद्धित्वस्वर्गत्वादीनां तत्तत्कर्मजन्यतावच्छेदकानां समुदायपर्याप्तत्वाङ्गीकारात् तद्घटकेष्ववयवस्य व्यवहार इति प्राप्ते, एकप्रयोगादेकात्मनि युगपदनेकफलोत्पत्त्यसंभवेऽपि भिन्नाभिन्नेष्वात्मसु प्रत्येकं कृत्स्नफलोत्पत्तिसंभवात् सर्वैरपि प्रत्येकं कृत्स्नमेव फलं भुज्यते, ऋद्धित्वस्वर्गत्वादीनां व्यासज्यवृत्तित्वे मानाभावाच्च । ततश्च तत्तत्कर्मजन्यतावच्छेदकीभूतधर्मावच्छिन्नरूपकृत्स्नफलभोक्तृत्वं सर्वेषां संभवतीति तादृशकृत्स्नफलकामनावत एवाधिकार इति ॥

इति षष्ठाध्याये द्वितीयः पादः ॥



## अथ तृतीयः पादः ॥

तृतीये पादे नित्यानां कर्मणां यथाशक्त्यङ्गोपसंहारेण कर्तव्यता । काम्यानां तु सर्वाङ्गोपसंहारेणैव । नित्येषु श्रुतद्रव्यापचारे प्रतिनिध्युपादानम् । काम्येषु तु आरम्भोत्तरं तदपचारे प्रतिनिध्युपादानादिकं यथाशक्त्यनुष्ठानं निरूपितम् । तथाहि-- 'यावज्जीवमग्निहोत्रं जुहोति । यावज्जीवं दर्शपूर्णमासाभ्या यजेत । वसन्ते वसन्ते ज्योतिषा यजेत' इति किं सर्वाङ्गोपसंहारेणाधिकार·, उत यथाशक्त्यङ्गोपसंहारेणेति विशये यथाविनियोगमधिकारस्य प्रागुक्तत्वात् सर्वाङ्गोपसहारसमर्थस्यैवाधिकार इति प्राप्ते, जीवनादेर्निमित्तस्य स्वान्वयव्यतिरेकानुविधाय्यनुष्ठानकत्वानुरोधेन यदा यावन्त्यङ्गान्युपहर्तु शक्नुयात् तदा तदुपसंहारेणानुष्ठेयत्वसिद्धिः । काम्ये तूक्तन्यायाभावात् सर्वाङ्गोपसंहारेणैवाधिकारः । उपक्रान्तस्य तु काम्यस्यासमापने प्रत्यवायात् यथाशक्त्युपबन्धः । परं तु तत्र न फलोत्पत्तिः । पापक्षयस्तु नित्यवदस्त्येव । नित्यस्थले अवश्यानुष्ठेयत्वावगत्त्या प्रत्यवायजनकाभावप्रतियोगिकृतिविषयत्वमाक्षिप्यते । तावतैव प्रवृत्त्युपपत्तावपि भावनायाः भाव्याकाङ्क्षायां 'धर्मेण पापमपनुदति' इति शास्त्रान्तरानुसारेण पापक्षयस्य भाव्यत्वेनान्वयः । एवं काम्यस्य उपक्रमानन्तरं फलकामनायां निवृत्तायामपि उपक्रान्तकर्मासमापने शिष्टगर्हादिना प्रत्यवायसत्वात् प्रत्यवायजनकाकरणप्रतियोगित्वेन प्रवृत्तावपि पूर्ववत् पापक्षयसंभव इति । तथा काम्ये आरम्भोत्तरं नित्ये ततः पूर्वमपि श्रुतद्रव्यालाभे द्रव्यान्तरं प्रतिनिधेयं न वा इति चिन्तायामशक्तावङ्गत्यागेन प्रयोगेपि अनङ्गग्रहणे प्रमाणाभावात् न द्रव्यान्तरं प्रतिनिधेयमिति प्राप्ते, व्रीहिभिर्यजेतेत्यादिद्रव्यविधिना

नियमविधिरूपेण कर्मशास्त्रस्य द्रव्याक्षेपकत्वमिति व्रीहिलाभ एव प्रतिपद्यते, न तु तदलाभेऽपि । ततश्च कर्मविध्याक्षिप्तद्रव्यान्तरं प्रतिनिधेयमेवेति ॥

एवं सर्वस्यापि प्रतिनिध्युपादाने प्रसक्ते देवतायाः आहवनीयाद्यग्नेः मन्त्रस्य प्रयाजादिक्रियायाश्च न प्रतिनिधिः । तथाहि— देवतात्वं हविस्त्यागकालीनोच्चारणकर्मत्वविशिष्टविधिगतशब्दत्वसमनियतमखण्डोपाधिरूपं वृद्धव्यवहारसिद्धम् । तच्च न शब्दान्तरे संभवति । अर्थस्य देवतात्वपक्षेऽपि तादृशविधिगतशब्दप्रतिपाद्यत्वस्य तत्समनियताखण्डोपाधेर्वा देवतात्वरूपतया न प्रतिनिधिसंभवः । एवमाहवनीयाद्यग्निमत एवाधिकारितायाः प्रागुक्ततयाऽनग्निकस्यानधिकार एवेति नाग्नीनां प्रतिनिधिः, यथाशक्तिन्यायाविषयत्वात् ॥

एवं मन्त्राणामपि न प्रतिनिधिसंभवः, ध्यानादिना अनुष्ठेयार्थानवगमे तदर्थप्रतिपादकत्वज्ञानासंभवात् तदवगमे चास्मिन् स्मारकापेक्षाविरहात् । एवमदृष्टार्थानां प्रयाजादीनामपि न प्रतिनिधिः, तददृष्टस्य अन्यत उत्पत्तौ मानाभावात् । एवम् 'अयाज्ञिया वै माषाः वराकाः कोद्रवाश्च' इति माषादीना यज्ञसाधनत्वप्रतिषेधात् न तेषां प्रतिनिधित्वमिति ॥

एवं प्रतिनिधौ विचारिते किं सति संभवे सदृश एव प्रतिनिधिः उत अनियम इति कर्मचोदनया यत्किंचिद्द्रव्यमात्राक्षेपात् सदृशनियमे मानाभावात् अनियम एवेति प्राप्ते, सदृश एव प्रतिनिधिः । तथाहि— व्रीहिशास्त्रेण व्रीहित्वजातेः साधनत्वे प्रमिते अमूर्तायास्तस्याः साधनत्वासंभवात् अर्थात् तत्परिच्छिन्नस्यावयविनः साधनत्वमवगम्यते । तस्यापि चावयवोपादानव्यतिरेकेण साधनत्वा-

अत्र पूर्वपक्षे प्रतीकालाभे, प्रतीकसदृशस्यापि प्रतिनिधितयोपादानम्, सिद्धान्ते तु सोमसदृशस्यैवेति प्रयोजनं बोध्यम् ॥

## इति षष्ठाध्याये तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

चतुर्थे पादे उत्पन्नहविर्नाशे आज्येन समापनमित्यादिकं विचारितम् । तथाहि— 'दर्शपूर्णमासयोर्मध्यादवद्यति । पूर्वार्धादवद्यति' इत्यादि श्रूयते । तत्र यदावत्तस्य नाशदोषादि भवति तदा किं 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा अज्येनैता देवताः परिसंख्याय यजेत' इति चोदितहविर्नाशनिमित्ताज्ययागः कार्य. उत तस्यामवस्थायां शेषादेव पुनरवदेयमिति चिन्तायां व्यवदाननाशेऽपि पुनर्मध्यादिसंभवात् तत एवावदेयम्, तन्मात्रस्यैव शास्त्रार्थत्वात् । कृत्स्नहविर्नाशादावेव तु आज्ययाग', तदानीमेव तु हविरन्तरापेक्षया न्यायबलेन हविरन्तरोत्पत्तौ प्रसक्तायां वचनेनाज्यविधानात् इति प्राप्ते, कृत्स्नस्य पुरोडाशस्य यो मध्यदेशः तदपादानको यस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रोऽवयवः सोऽवदातव्यः । यस्तु तस्याधस्तनो ऽवयवः सोऽवदेयस्यापादानभूतः । नत्वसाववदातव्यः । अतो नासौ हविः । यत्तु हविस्तन्नष्टम् । अतो हविर्नाशनिमित्ताज्ययागः कार्यः । न च सर्वाणीति वचनात् सर्वहविर्नाश एवाज्ययाग इति भ्रमितव्यम्, हविर्नाशस्य निमित्तत्वात् सर्वशब्देन विशेषणासंभवात्; निमित्तमपि ह्युद्देश्यम् । एवं दर्शपूर्णमासयोः सायंदोहप्रातर्दोहौ प्रकृत्य श्रुते "यस्योभयगँ हविरार्तिमार्च्छेत् । ऐन्द्रं पञ्चशरा-

वमोदनं निर्वपेत्' इत्यत्र नार्तिमात्रस्य निमित्तता, सर्वदैव कस्यचिद्वस्तुनः आर्तिसत्वेन नित्यतया निमित्तत्वानुपपत्ते. । अत. 'अर्धमन्तर्वेदि मिनोति । अर्धं बहिर्वेदि' इत्यत्रेव लक्षणया हविरार्तिर्निमित्तमिति सर्वैराश्रयणीयम् । तत्रोभयत्वमपि निमित्तकोटिप्रविष्टं न वा इति विशये उभयत्वमप्यन्तर्भाव्यलक्षणामङ्गीकृत्य उभयहविरार्तिरेव निमित्तमिति वक्तव्यम्, अन्यथा उभयपदवैयर्थ्यापत्ते· । न हि गृहं संमार्ष्टीत्यत्र एकवचनस्य साधुत्वार्थत्वमिव इहोभयपदस्य किंचित् प्रयोजनं संभवति । अत उभयत्वमपि निमित्तकोटिप्रविष्टमेवेति प्राप्ते, उभयपदस्य उभयमपीत्येवं पूर्वोक्तैकैकनाशप्रायश्चित्तापेक्षया उत्कर्षेण स्तावकतयाप्यर्थवत्वोपपत्ते. न तदर्थान्तर्भावेण लक्षणाश्रयणं युक्तम्, अन्यथा गृहं संमार्ष्टीत्यत्रापि एकवचनानुरोधेन एकत्वान्तर्भावेण लक्षणाङ्गीकारापत्तेः । अत उभयत्वं न निमित्तकोटिप्रविष्टम् । ततश्च एकैकहविर्नाशेऽपीदं प्रायश्चित्तमिति ॥

इति चतुर्थाध्याये चतुर्थः पादः ॥

---*---

## अथ पञ्चमः पादः ॥

पञ्चमे पादे कतिपयप्रायश्चित्तविचारः । तथा हि— "ज्योतिष्टोमे दक्षिणादानात् प्राक् बहिष्पवमानार्थं तद्देशे कच्छं धृत्वा प्रसर्पतामुद्गातृप्रतिहर्तृप्रस्तोतॄणां मध्ये यद्युद्गाताऽपच्छिन्द्यात् अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत । तत्र तत् दद्यात् यत्पूर्वस्मिन् दास्यन् स्यात् । यदिप्रतिहर्ता सर्ववेदसं दद्यात् । यदि प्रस्तोता ब्रह्मणे वरं दद्यात्" इत्यादिना तत्तत्कर्तृकापच्छेदे निमित्ते प्रायश्चित्तं श्रुतम् ।

तत्रोद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे प्रायश्चित्तद्वयप्राप्तौ किं विकल्पः समुच्चयो वेति विशये अष्टदोषदुष्टस्य विकल्पस्यान्याय्यत्वात् समुच्चय एव, तेन पुनर्यजेतेति प्रयोगद्वयसत्त्वेन पूर्वस्मिन्नदाक्षिण्यम् उत्तरस्मिन् सर्ववेदसमित्यविरोधादिति प्राप्ते, यत्र हि प्रयोगे निमित्तं तस्यैव हि नैमित्तिकं प्रायश्चित्तमङ्गं प्रयोगान्तरे क्रियमाणेन प्रायश्चित्तेन निमित्तवतः प्रयोगस्य साद्गुण्यासंभवात्। ततश्च एकस्मिन्नेव प्रयोगे अदाक्षिण्यसर्ववेदसयोः प्राप्त्या विरोधाद्विकल्प इति । एवं यत्र क्रमेण निमित्तद्वयसंनिपातः तत्र पूर्वनिमित्तमुत्तरनिमित्तकं वा प्रायश्चित्तनिमित्तमिति चिन्तायामसंजातविरोधित्वात् पूर्वनिमित्तकमेवेति प्राप्ते पूर्वाबाधेन उत्तरानुपपत्तेः उत्तरनिमित्तकमेव प्रायश्चित्तम् । उपक्रमाधिकरणन्यायस्तु पूर्वापरवाक्ययोरेकवाक्यतया परस्परसापेक्षतायामेव । परस्परनिरपेक्षत्वे तु पूर्वदौर्बल्यमेवेति ॥

इति षष्ठाध्याये पञ्चमः पादः ॥



## अथ षष्ठः पादः ॥

षाष्ठे पादे सत्राधिकारविषयविचारः । तथा हि— दर्शपूर्णमासयोः कल्पभेदः श्रुत.। “ राजन्यवासिष्ठादीनां नाराशँसो द्वितीयः प्रयाजः । तनूनपादन्येषाम् ” इति । अत्र द्वितीयप्रयाजक्रमे समाम्नातयोर्नाराशंसतनूनपान्मन्त्रयोरव्यवस्थया विकल्पेन द्वितीयप्रयाजसंबन्धित्वेन प्राप्तयोर्वासिष्ठसंबन्धमात्रं नराशंसस्य क्रियते । अत एव नाराशँस इति तद्धितः । द्वितीयप्रयाजपदं चानुवादः । ततश्च परिशेषात् तनूनपान्मन्त्रे अन्यसंबन्धसिद्धेः तनूनपादन्येषामित्यनुवाद एव।

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्ष पौषमासः । [संचि. १०.

## सुभाषितानि ॥

संध्यारागविपाटलं किसलयं पुष्पाणि मुक्तावली-
शोभामाददते फलानि च तव द्राक्षामतिं तन्वते ।
अस्त्येतत् पिचुमन्द मन्द विरसास्वादोऽसि यत् सर्वश-
स्त्यक्तस्तद्रसवेदिभिर्मृगयसे काकोष्ट्रसंभावनाम् ॥ १ ॥

आयाता जलदावलीयवनिकामाक्षिप्य चन्द्रानना
ताराहारलसत्पयोधरभरा ज्योत्स्नावदाताम्बरा ।
आरादुन्मदराजहंसपरिषद्वीता शरल्लासिका
प्रावृट् सा मलिनाम्बरावृतरुचिः क्षुब्धाशया निर्गता ॥

पुष्णासि श्रियमैन्दवीमपनयस्यन्धं तमो दूरतः
पन्थानं विशदीकरोषि च नवारोप प्रदीपोत्तम ।
आधातुं हरितां मुखेषु विमलां लक्ष्मीं चकोरोत्सवं
हासं कैरविणीषु लोकममृतैः सेक्तुं च नासि क्षमः ॥ ३ ॥

शतावधानम् . ति. ई. श्रीनिवासाचार्यः ।

# पुस्तकसमालोचना ॥

## *पातञ्जलदर्शनम् ॥



महाभाष्यकृता भगवत्पतञ्जलिना प्रणीतमिदं योगदर्शनमनन्तभट्टकृतया पदचन्द्रिकाख्यया व्याख्यया समलंकृतं श्रीवाणीविलासालयमुद्रापितं नूनमाविष्करोति तन्मुद्रालयाधिपस्य श्रीबालसुब्रह्मण्यार्यस्यानितरसुलभं रासिक्यम् । यद्यपि दर्शनमेतन्मुद्रितपूर्वं द्वित्रेषु मुद्रणालयेषु, तथापि न तान्यर्हन्ति मात्रयाप्यनुकर्तुमदसीयं मुद्रणसौष्ठवं परिष्करणरामणीयकं चेति निश्चप्रचं मन्यामहे ॥

पादचतुष्टयपरिमितेऽस्मिन् दर्शने प्रथमे समाधिपादे— 'अथ योगानुशासनम्' इत्युपक्रम्य 'योगश्चित्तवृत्तिनिरोधः' इति योगस्वरूपमुपवर्णयन् प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपपञ्चतयवृत्तिसहितचित्तनिरोधस्य दुष्करतामतिक्लेशसाध्यत्वं च स्वयमेवोद्भाव्य 'ईश्वरप्रणिधानाद्वा' इति सूत्रेण

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥'

इति श्रीभगवद्गीताचार्योपदिष्टं सर्वकर्मणामीश्वरे समर्पणमेव सुगममुपायमुपदिशत्यसौ योगिपुङ्गवः । स्वैः क्रियमाणानां कर्मणां तत्फलानां च तेषु स्वसङ्गत्यागपूर्वकमखण्डानन्दरूपे भगवत्यर्पणमेव च सर्वधर्मपरित्याग इति त्रय्यन्तविदां संप्रदायः ॥

अनन्तरं च स्वकृतस्य 'ईश्वरप्रणिधानाद्वा' इति सूत्रस्य

---

* **Patanjala Darsana** with the commentary of Ananta Pandita, Sri Vani Vilas Press, Srirangam Cr. 8vo. **As. 6.** Postage extra.

मूलभूते 'सर्वधर्मान्—' इत्यादिगीतावाक्ये आप्तोक्तत्वं संदिहान इव 'स एव पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति सूत्रेण भगवतः परमाचार्यत्वं शास्त्रसिद्धं तन्मुखेनाप्ततमत्वं च साधयति ॥

ततश्च इतोऽपि सुगममुपायान्तरमन्विष्यन् 'तस्य वाचकः प्रणवः' 'तज्जपस्तदर्थभावनम्' इति सूत्रद्वयेन त्रयीसारभूततया[1] भगवद्वाचकतया च सर्वमाङ्गलिके[2] प्रणवे घटकानामकारोकारमकाराणामर्थानुसंधानमेवातिसुगमं योगमुपवर्णयन् योगेनैतादृशेन व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वादीनामन्तरायाणामपगमवर्णनमुखेन

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
नश्यन्ति सर्वपाप्मानि तस्मिन् दृष्टे परावरे ॥'

इति शास्त्रार्थं सम्यगुपपादयति ॥

द्वितीये साधनपादे— तपःस्वाध्यायेश्वरभजनादीनां व्युत्थितचित्तस्यापि समाधिभावनोपायतामुपपाद्य यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाधिरूपाणामष्टयोगाङ्गानां स्वरूपमुपवर्णयति ॥

तृतीये विभूतिपादे— समाधिफलं भूतजयं तद्द्वारा अणिमाद्यष्टैश्वर्यसिद्धिं च प्रतिपादयति। तत्राणिमा—परमाणुष्वप्यन्तः-

---

१. 'अकार चाप्युकार च मकारं च प्रजाततिः । वेदत्रयान्निरदुहत् भूर्भुवः स्वरितीति च ॥'

२. 'ओकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥'

प्रवेशानुकूलमणुत्वम् । महिमा— आकाशादीनां विभुपदार्थाना-मपि सर्षपतुल्यत्वापादकं महत्त्वम् । गरिमा— विश्वातिशायि गुरुत्वम् । लघिमा— तूललेशस्येव स्वल्पेनापि वायुना हरणा-नुकूलं लघुत्वम् । प्राप्तिः— अङ्गुल्यग्रेण चन्द्रादिस्पर्शनशक्तिः । प्राकाम्यम्— इच्छानभिघातः । शरीरान्तःकरणेश्वरत्वमीशित्वम् । सर्वतः प्रभविष्णुत्वं वशित्वम् । सर्वभूतानि तदुक्तं नातिक्राम-न्ति । त एते अणिमाद्याः समाध्युपयोगिनः भूतजयात् योगिनः प्रादुर्भवन्ति । एता एव महासिद्धय इत्युच्यन्ते ॥

चतुर्थे कैवल्यपादे— विश्वामित्रादीनां ब्राह्मणादिजात्य-न्तरसिद्धिप्रकारमुपपादयिष्यमाणः प्रथमं सिद्धेः जन्मौषधिमन्त्र-तपःसमाधिजत्वमुपपादयति । तत्र जन्मजाः कपिलादीनाम् । ओषधिसिद्धयः पारदादयः । मन्त्रसिद्धिराकाशगमनादिः । तपः-सिद्धिर्विश्वामित्रादीनाम् । समाधिजा उक्ताः । तत्र विश्वामि-त्रस्य ब्राह्मण्यप्राप्तौ 'जात्यन्तरपरिणामः प्रकृत्यापूरणात्' इति पाश्चात्यजन्मप्रकृतीनां पूर्वजन्मविकारापूरणत्वं हेतुमभिवर्णयति । अन्ते च दशभिः सूत्रैः कैवल्यस्वरूपं विशदमुपपादयति । तत्र 'सर्वावरणापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम्' इति सूत्रेण ज्ञानो-दयादविद्यादिरूपावरणनिवृत्त्या शरद्गगनप्रतिमस्य ज्ञानस्यानव-च्छेदात् अक्लेशेनैव सर्वविषयकं ज्ञानमुत्पद्यत इति विशदमुपपा-दयति । अन्तिमेन च 'पुरुषार्थशून्यानां प्रतिप्रसवः कैवल्यं स्व-रूपप्रतिष्ठा वा चितिशक्तिः' इति सूत्रेण समाप्तभोगापवर्गलक्ष-णपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमः— तस्य परि-णामस्य समाप्तौ विकारानुद्भवः— तस्य, अथवा वृत्तिसारू-

व्यपरिहारेण स्वरूपप्रतिष्ठा चितिशक्तिरेव कैवल्यमिति च द्विधा कैवल्यस्वरूपमुवर्णयन्नवसाययति ॥

अस्यैव दर्शनरत्नस्य राजयोगिश्रीसदाशिवेन्द्रसरस्वत्यनुगृहीता *योगसुधाकराख्या व्याख्यापि श्रीवाणीविलासालयाध्यक्षेणैव प्रकाश्यकारि। तेन च सर्वोऽपि लोकः दुरवगममपि योगरहस्यं करतलामलकवत्पश्येदिति सुदृढं विश्वसिम. ॥

---

## ॥ चक्रवर्तिपट्टाभिषेकः ॥

प्रथमः— सखे! अपि जानासि कुत इदमशेषमेव भारतं वर्षमवाङ्मनसगोचरं कमप्यभूतपूर्वमानन्दमुपगतमिति?

द्वितीयः— मित्र! किं न भवतः कर्णपथमुपागतम्, यद्भारतदेशसार्वभौमः आङ्गलदेशाधिपश्च जयार्जो नाम चक्रवर्ती स्वयमेव भारतं देशमिममासाद्य निर्भरानन्दभरित अभिषेकोत्सवमन्वभवदिति ॥

प्रथमः— अहं किल कार्यगौरवात् ग्रामं गत्वा अद्यैव प्रतिनिवृत्तः। निवृत्तमात्र एव 'प्रतिहतमितो भारतीयानां कृच्छ्रजातम्' इति संघशः संलपतां जनानां मुखादश्रौषम्। कथय, कदा स चक्रवर्ती भारतं देशमलंचकार। कदा वा अभिषेकमहोत्सवमन्वभवत्? ॥

* **Yogasutravritti** named *Yogasudhakara* by the great Raja Yogin Sri Sadasivendra Saraswati, Sri Vani Villas Press, Srirangam Cr 8vo. **Re. 1. As. 8.** Postage extra

द्वितीय:— एकादशाधिकैकोनविंशतिशततमे समतीते संवत्सरे डिसम्बर्मासस्य द्वादशे दिने भारतदेशे डिल्लीत्यधुना व्यवह्रियमाणायां हस्तिनापुर्यां महानभिषेकोत्सव: समभवत् ॥

प्रथम:— हस्तिनापुरी किल दिगन्तविश्रान्तकीर्तिभिर्युधिष्ठिरप्रभृतिभि: नृपवरैरधिष्ठितपूर्वा ललामभूता मध्यमस्य लोकस्येति बहुशो मया समनुश्रुतम् । तादृश्या महत्यां राजधान्यामेष पट्टाभिषेकोत्सवमन्वभवदिति नूनमदसीयोनन्यसुलभो महिमा लोके प्रतीयते । दिष्ट्या सनाथा च सा राजधानी ॥

द्वितीय:— यथा च युधिष्ठिरादीनां नृपपुङ्गवानामभिषेककाले अन्ये भूपालास्तद्गुणाकृष्टचित्ता: स्वयमेव सपरिवारं सुबहून्युपायनान्युपगृह्य तत्पादयो: प्रणेमु:, तथैवाद्यत्वेपि भारतदेशीया इतरदेशीयाश्च सुबहवो राजानस्तत्र गत्वा तमभिषेकोत्सवममन्देनानन्देन समीक्ष्य चक्रवर्तिकटाक्षविषयभूता: कृतार्थानात्मन: संपादयामासु: ॥

प्रथम:— तर्हि महान् संमर्दस्तत्र संजात: स्यात् । एतादृशस्य महतो जननिवहस्य सा नगरी कथं पर्याप्ता समभूत् । सा हि पुरी बहुशो विनष्टप्रासादसौधारामादिका केवलं नाम्नैवाद्यावशिष्यते ॥

द्वितीय:— अहो! पूर्वमेव तत्र तत्र सौधनिर्माणादिषु आधिकारिकान् नियुज्य यथा चागतानां किंचिदपि कदाचिदप्यसौकर्यं न जायेत; यथा चागतानां परस्परं संघर्षस्तज्जनित: क्लेशो वा नैव भवेत्, तथा निपुणं परिकल्पितं राजकीयै: प्रधानाधिकारिकपुरुषै: ॥

प्रथमः—— तथा सति सुखकरमेव स्यात् । मासगम्ये देशेऽतिमहता विभवेन भोगाननुभवतोऽस्मच्चक्रवर्तिन. महाकृच्छ्रसाध्येऽस्मिन् भारतदेशागमने कथमभिरुचिः समुत्पन्ना? एतावत्पर्यन्तमाङ्गलमहीपेषु न कोऽप्यत्रागत्य एतादृशमभिषेकोत्सवमन्वभवत् । तन्मन्ये भारतीयानां मूर्तेनेव भाग्यनिवहेन केनापि तत्समीपवर्तिना महापुरुषेण समुत्पादितकुतूहलः सार्वभौमोऽत्राजगामेति ॥

द्वितीयः—— न केनापि प्रबोधितः । अतीतस्य वर्षस्य जून्मासि आङ्गलदेशे अस्यैव सम्राजः तद्देशीयैरभिषेकमहोत्सवो महता विभवेन कारितः । तादृशमभिषेकमनुभूतवतश्चक्रवर्तिनस्तत्क्षणमेव समुदियाय मनसि महत् कौतूहलम्—— यथाहमत्रैतद्देशीयैः कारितं महान्तमभिषेकमन्वभवम्, एवमेव भारतदेशीयैः क्रियमाणमभिषेकोत्सवमनुभूय तद्देशीयानपि यथोचितं संभावयेयमिति ॥

प्रथमः—— अहो निष्कारणवत्सला हि महात्मनां चित्तवृत्तिः । एवमाचारा हि राजानः प्रकृतीनां मनांस्यनुरञ्जयन्ति ॥

द्वितीयः—— तदैव च चक्रवर्तिना तस्यामेव परिषदि मधुरगम्भीरया गिरा इत्थमभिहितम्—— 'अस्मिन्नेव हायने डिसम्बर्मासस्य द्वादशे दिने अहं भारतदेशमधिगत्य तत्र तद्देशीयैः क्रियमाणमभिषेकमहोत्सवमनुभवितुम्, तेन तान् संभावयितुं चाभिलषामि । तदर्थं च नवम्बर्मास एवेतः प्रस्थास्ये । तत्क्रियन्तां तदुचितानि संविधानानीति ॥

प्रथमः—— अहो! अनतिलङ्घ्यता राजाज्ञायाः, निसर्गवत्सलता

चास्मच्चक्रवर्तिनः; यत् स्वयमेवात्रागत्यास्मद्देशीयान् संभावयितुमभिलषति । नूनमनेनैव महीपालेन वसुमती राजन्वती भवितुमर्हति । कथय, ततः किं वृत्तम्?

द्वितीयः— तत्क्षण एव भारतदेशवासिने राजप्रतिनिधये इमं विषयमुद्दिश्य तन्त्री प्रहिता । मेडिनानाम्नी च काचन महती बाष्पनौका च सज्जीकृता ॥

प्रथमः— अखण्डलवसुमतीमण्डलशासितुरस्मच्चक्रवर्तिनः किं परिहीयेत? ॥

द्वितीयः— ततश्च भारतदेशप्रयाणवार्तयैव समतीतेषु पञ्चषेषु मासेषु नवम्बर्मासे परिमिताधिकारिकपुरुषसहितः स चक्रवर्ती सापत्य· समहिषीकश्च प्रस्थाय मेडिनानौकया भारतदेशमलमकार्षीत् ॥

प्रथमः— अभिषेकादिने राज्ञा भारतीयाः कथं संभाविताः? कीदृशश्च चक्रवर्तिना स्वाशय आवेदितः ॥

द्वितीयः— भारतीयान् अतीव राजभक्तिसंपन्नान् बहुधा समुपन्यस्य, अन्ते, पूर्वकृतं बङ्गालदेशस्य द्विधा विभजनमयुक्तमिति प्रत्याचख्यौ । श्रुत्वैव चातिचिराकाङ्क्षितां कर्णयोरमृतासारवर्षिणीं गिरमेनां सहसा सर्व एव सामाजिकाः सहस्तताळं परमानन्दमावेदयामासुः ॥

प्रथमः— तर्हि प्रसन्नाश्चिरस्य भारतदेशीया देवताः । सम्राडेष आचन्द्रतारं महीमिमां सपुत्रबान्धवः समहिषीकश्च पालयतु ॥

———*———

## विजयिनी ॥

(पूर्वतोऽनुवृत्तम्)

सर्वतः सुविस्तीर्णा रथ्या जलसेचनादिना संस्कृता भानुकराणामल्पमात्रमपि शमनायोपकल्पिताभिरिव वैजयन्तीभिश्चित्रिता इव नयनगोचरीबभूवुः । कार्तवीर्यगृहं तु कौबेरनिधिव्ययेन निर्मितमिवाभात् । तेषु तेषु कर्मसु विनियुक्तो जन आत्मन. कर्मण्यप्रमत्तो भर्त्राज्ञासमकालमेव तदनुष्ठानपरस्तस्मिश्च सविशेषमुत्सुको ददृशे । रमणीगणोऽपि विजयिनीं विविधैरनुयोगैरनवरतं व्याकुलीचकार ॥

समुपस्थितो विवाहमङ्गलदिवस ; तैस्तै. कार्यजातैश्चिन्ताशतैश्च व्याकुलीक्रियमाणान्तरात्मा कार्तवीर्य क्षणेनैव निर्वृतिमनुभविष्यामीति मनसि कलयन् वरागमने दत्तदृष्टिः, सर्वोऽपि भृत्यवर्ग स्वे स्वे कर्मण्यप्रमत्त एवेति ज्ञात्वा दुहितु प्राभातिकी प्रवृत्तिमजानानः क्षुब्धहृदयोऽपि बाह्यतः शान्त इव समतिष्ठत । कियता कालेन तमुद्बोधयितुमिव प्रवृत्तो भेरीमृदङ्गपटहादीनां मङ्गल स्वन । श्रुत्वेमं ससम्भ्रममुत्थाय कार्तवीर्यो विजयिनीं विवाहवेषालंकृता विधत्तेति परिजनमादिश्य भाविनं जामातरं मधुपर्केणोपातिष्ठत । कालेनाल्पेन वरोऽनुरूपवेषालङ्कृतेन सम्बन्धिजनेनानुगतो द्वारप्रदेशमागमन् ॥

कार्तवीर्यसमादिष्टो जनो यावद्विजयिनीप्रासादं समुपगत्य पश्यति तावत्तत्र कस्यापि रुदितध्वनिमाकर्ण्य विस्मयाविष्ट एवाभूत् । द्रुतपदं तत्र गत्वा स्वच्छप्रच्छदपटाच्छादिते विकीर्णे शयने पतिताम्, विमुक्तकेशाम्, विगलितोत्तरीयाम्, आभरणरहिताम्, जीवनकलारहितामप्यविरूपशरीराम्, सुखशयितामिव दृश्यमानां विजयिनीम-

वलोक्य 'हा हताः स्म' इत्याक्रोशन्नखिलममात्यकुलं किमिदमस्मिन्मङ्गलकाले समापतितमिति चिन्तासन्दानितं चकार । श्रुत्वैतद्विजयिनीमाता तत्रागत्य कन्यां च विगतजीवितामवलोक्य स्वीयेनातिकरुणेनाक्रन्दनेन सर्वमपि वस्तुजातं निरानन्दं निरुत्सवं निर्गतचेतनं च चकार ॥

वरस्वागतोद्युक्तः कार्तवीर्यः कन्यान्तःपुरप्रादुर्भूतमतिकठोरं रोदनस्वनमाकर्ण्याशुभं कथयतेव मनसा कथमपि पाटलिपुत्रं मण्डपस्थ आसने समुपवेश्य कन्याप्रासादमेवागात् । विगलितधीरपि धीरमिवात्मानं दर्शयन्, 'किमिदम्, कथमिदं संजातम्, कदेदं परिजनेनावगतम्,' इति करुणापूर्णहृदयः परिजनमप्राक्षीत् । सोऽपि भीतभीतेन चेतसा कम्पितेन स्खलितेन च स्वरेणाकथयत्— 'देव, गतायां याममात्रायां यामिन्यां शयनार्थिनी भर्तृदारिका शयनगृहं प्रविष्टा । प्रातर्यावद्वयं तां प्रबोधयितुमागतास्तदा उदयाद्रिमारूढेऽपि भास्करे निद्रितामेवेमामवलोक्य कदाचित्प्रथमे भागेऽप्राप्तनिद्रेयं भवेदिति नास्माभिरुत्थापिता । यदा च स्वामिनाज्ञप्ता इमामुत्थापयितुमनसो वयमिमामीदृगवस्थामद्राक्ष्मेति । समाकर्णनसमकालमेव कार्तवीर्यो जड इवानधीनेन्द्रियो विकल इव शून्यकरणो भूमौ पपात । अधिगतचेतनश्च सोरस्ताडमतिकरुणं चक्रन्द ॥

आस्थानमण्डपस्थः पाटलिपुत्राधिपस्तु परम्परया श्रुतवृत्तान्तो भृशमस्याः कृतेऽनुशोचन् किमप्यनुक्त्वैव प्रास्थित । निरधारयच्च यथा नानया सह मे जगति वासो भवानीजानेरभिमत इति ॥

कन्याप्रासादगतः कार्तवीर्य एकाकिन्याः प्रियतमायाः दुहितुर्नाशेनापहृतसर्वस्वमिवात्मानं कलयन्, कथं विवाहकर्मयोग्यमिदं

फलपुष्पादिकं वस्तुजातं निवापकर्मण्युपयोक्तुं प्रभविष्यामीति परिदेवमानः, प्रथममेव भुवनान्तरगतपुत्रशोकपरिभूतोऽधुना कन्यावियोगेन द्विगुणीकृतशोकावेशः, 'यः कोऽपि कन्यामिमां प्रयत्नशतैः प्रत्युज्जीवयेत्, तस्याभीष्टं प्राणपरिव्ययेनाप्यहं सम्पादयिष्यामि' इति वार्तामन्तरेणाखिलं नगरं विदितवृत्तान्तमकरोत्। परिचारकगणाद्वृत्तमिदमुपलभ्य राजापि मन्त्रिप्रवरं सान्त्वयितुं तत्राजगाम ॥

अत्रान्तरे भिक्षार्थमटन् केनाप्यलौकिकरूपप्रभावशालिना दिव्येनेव यूनानुगत ईश्वरसूरिर्जनसंमर्दाद्विजयिनीमरणस्य वार्तामुपलभ्य कार्तवीर्यप्रासादमागत्य परिजनदत्तप्रवेशावसरस्तत्समीपमागम्याब्रवीत्—अमात्यवर, श्रुतिपथमस्माकमागतेयं वार्ता यथा त्वमेकाकिनोऽपत्यस्य वियोगदुःखेन नितान्तपीडितोऽसीति। समुद्घोषितं च भवता यद्यः कोऽपि प्रत्युज्जीवनसमर्थः सिद्धिमस्मिन्कर्मण्याप्नुयात्तस्याभीष्टसिद्धिमहं सम्पादयिष्यामीति। महत्किल ते भागधेयं यदद्यैव काश्मीरेभ्यः समागतो गौरीगुरुशिखरनिवासिभिर्महानुभावैः कृतानुग्रहोऽयं युवा मन्त्रतन्त्रमण्योषधीनां प्रभावस्य ज्ञाता, अधीती चतुर्ष्वपि वेदेषु षट्सु शास्त्रेषु च, विश्वदर्शनाख्यो योगीश्वरः; तदुत्तिष्ठ प्रणम निवेदय चास्मै सर्वं यद्वृत्तं येन प्रतीकारसाधनसुलभता सम्पद्येत' इति। दवदहनदग्धस्योपरि हिमसेकेनेव मृतस्य सञ्जीवनेनेवामृतकल्पेनेश्वरसूरिवचसा समुत्तेजितः कार्तवीर्यस्तदादिष्टमनुष्ठाय तस्मै यूने प्रणामपुरस्सरं निखिलं वृत्तान्तं निवेदयामास। सोऽपि तच्छ्रवणानन्तरं किमपि विचारयन्निव क्षणमवस्थाय कार्तवीर्यमवोचत्— 'अमात्येश्वर, यद्यस्ति मयि ते विश्वासः, तव दारिकां प्रत्युज्जीवयितुं यतिष्ये। परमिदं त्वया मनसि कर्तव्यं यथा यद्यहं सिद्धिं लभेय,

मदादिष्टसम्पादने त्वयावश्यं प्रयत्नः करणीयः । कुलव्रतभङ्गः, सम्पत्परित्यागः, वनोपसेवनम्, चिरपरिचर्या, इत्येतानि चान्यानि चातिकठिनानि कर्माणि तेऽनुष्ठेयानि भविष्यन्ति । अप्यस्ति भवान् समर्थः सर्वमिदं निर्वर्तयितुम्?' इति । 'जीवन्ती चेद्भविष्यति विजयिनी, इमान्यन्यानि च दुष्कराणि कार्याण्यङ्गीकर्तुं न शङ्केत मे मनः' इत्येवंवादिनि कार्तवीर्ये विश्वदर्शन. कमण्डलुगतमुदकं विजजिन्याः शरीरे प्राक्षिपज्जपश्च किमप्यवतस्थे ॥

अनेन समयेन परिणतो दिवसः । शोकवेगेन खिन्नान्तरात्मामात्यपरिजनोऽप्रतिपन्नस्नानभोजनस्तत्रैवावास्थित । राजापि यूनस्तस्यालौकिक्या प्रभावसम्पदा समाकृष्टचेतास्तत्र किं भवतीति जिज्ञासया तस्थौ । यामषट्कं च समाप्तमभूत् शयनीयं गताया विजयिन्याः । समाप्तप्रभावा गुटिका मुनिप्रक्षिप्तं जलं वा तस्याः प्राणान् परावर्तयदिव ददृशे । विकसितान्यभूवन् निखिलानां वदनसरोजानि । कार्तवीर्यस्य तद्भार्याश्वाश्वायमानन्दातिशयो जठरं भिन्दन्निवावालोक्यत ॥

क्रमेण विजयिनीवदनं विकसितकुशेशयस्य श्रियं प्रतिपद्यमानमात्मना सह निखिलायापि बन्धुवर्गाय तुल्यरूपां श्रियमदात् । ईश्वरसूरिः सिद्धो विश्वदर्शनश्च कृतकृत्यतां प्रदर्शयन्तौ किमतः परमाचरणीयमिति विचारयांचक्रतु । अन्ततश्च विजयिनी शयनादुत्तस्थौ । मिलितं जनसम्मर्दे बन्धुवर्गमीश्वरसूरिं चावलोक्य प्रणामक्रियोद्यताभूत् । उत्थिता यावदीश्वरसूरिमवलोकयति तावत्तस्य सहचरं दृष्ट्वा किञ्चिदिव सम्भ्रान्तचेतसा मुखकमलं परावर्तयन्ती कटाक्षनिक्षिप्तदृष्टिरवनतमुखी निश्चलातिष्ठत् । (क्रमशः)

## आर्यभाषाचरितम् ॥

(पूर्वतोऽनुवृत्तम्)

यथा—

सस्कृत }
छन्दोवस्थान } द्रु = वृक्ष

सेक्सन्–द्रुवो–दारु
आर्स्वेनियन्–द्रु–दारु
ग्रीक्–ओम्पस्–ओङ्क
जर्मन्–द्राग्–दारुपत्रम्
सेक्सन्–ड्रिवो–दारु
गोथिक्–द्रियो–तरु.
नार्मन्–टिर–देवदारुः ॥

ओङ्कतरुवाचिषु दारुवाचिषु च शब्देषु परस्परमर्थव्यत्यासो दृश्यते— डाबु ओङ्क डाब्रु जिम्बर् इन्धनम् रोवरिति वेतिने शब्द-अचो व्यत्ययेन आर्वेरिति संजात इति वक्तुं शक्यते ॥

ऐरोपाखण्डस्य मध्यमपश्चिमप्रदेशेषु प्ररोहत बीचितरोर्वाच-कशब्देन उत्कृष्टो मनुष्यजातिशास्त्रीयांश. कश्चिदधिगन्तुं शक्यते। यथा— बौहाबोसीशब्दयोः फेगन्बुकीशब्दयोश्च ओङ्कवृक्षाभि-धाने ऐक्यसत्वात् एते शब्दा. प्रथमं बीचितरुमेवाभ्यदधतेति लेटि-न्भाषाभि. संवादो ज्ञायते। ग्रीक्भाषापरिशोधने तु बीचितरुवाचि पदं मृग्यं भवति। तस्मात् ग्रीक्देशीयाः पुरा कदाचित् लेटिन्भाषा-व्यवहारिभिः सहोषुरित्यनुमीयते ॥

इतरारण्यवृक्षवाचकान्यपि पदानि विविधाभिः ऐरोपाभाषाभिः संबद्धानीत्यधोलिखितशब्दकदम्बकेनाधिगम्यते । यथा— संस्कृत प्राचीनशर्मण्यभाषा लिधूनियन् आर्मिनियन् ॥

पीतदारु. पिहुट. पुसूजित्. पिसि.
मालहा. सालहा.

पूर्वोक्तांशे विमर्शनेन यथा ऐरोपासियाखण्डौ सस्तनजन्तुवाचिपदविषये सादृश्यं बहतस्तथा वृक्षवाचिपदविषये न बिभ्रतः सादृश्यमित्यवगम्यते । हिन्दूऐरोपाप्रजाः आदिनिवासस्थानपरित्यागात् पूर्वं विरलारण्यव्याप्तप्रदेशेषु न्यवात्सुः । ऐरोपाजना एव प्रथममरण्यानीसमाक्रान्तभूमीरध्यवात्सुरित्येतावान् हेतुकलापः परिकल्प्यते ॥

केषांचित् फलवृक्षाणां नामानि ऐरोपासकलभाषाशाखासु साधारण्येनोपलभ्यन्ते । यथा—

कार्नस् कार्नल्
प्रूनस् प्लम्
मालम् यपिक्
पीरस् पियर्, इति ।

एतेषु चरमपदत्रयं ग्रीक्भाषाया उपात्तमिति प्रतिभाति ॥

अस्मद्देशेऽरण्यभूरुहाणां भाषाचरित्रमपि प्राचीनतया दृश्यते । वृक्षविषये अस्माकं पूर्वेषामार्याणां यादृशी भावना यादृशो विश्वासश्चासीत् तत् सर्वमनया दिशैव ज्ञातुं शक्यते । एतद्विदेशीयेभ्यो गृहीतं तदेतत् सर्वमत्र सम्यग्विचारणामर्हति । ऐरोपाखण्डस्यौत्तराहा रोमकग्रीक्देशीया इव वृक्षाः सजीवाः सात्मका

इति विश्वसन्ति । यतो वृक्षोऽपि मनुष्य इव जायते वर्धते फलति विशरारुरूर्ध्वशोषं शुष्यति च । ततः स प्राणिधर्मेति संभाव्यते । प्रथमं मनुष्यजातिर्वृक्षेभ्य एव समुत्पन्नेति तत्कालीनानां दृढप्रत्ययः । ग्रीकुदेशालंकारभूतो होमर्नामा कश्चित् कविशिरोमणिः स्वग्रन्थे अमुमेव सिद्धान्तं स्थापितवान् ऐरोपाखण्डस्योत्तरभागे । 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' इति श्रीकोक्ताश्वत्थसंवादी यड्रसील्नामकः कश्चिद्विश्वाकारवृक्षोऽस्तीति काचित् पौराणिकी कथा प्राचुर्येण वर्तते । तरवः परशुक्षता मनुष्या इव रुधिरोद्गारं दर्शयन्ति ॥

'अन्तःसंज्ञा भवन्त्येते । सर्वभूतेषु भूपाल तारतम्येन वर्तते । अप्रमाणवस्तु स्वल्पा सा स्थावरेषु विशेषत' इत्यादिपराशरोक्तविष्णुपुराणवचनेभ्यः भारतीयप्रजानामपि वृक्षविषये एतादृशाभिप्राय एव चिरादस्तीति विज्ञायते । वनान्युपवनानि च देवताधिष्ठानानीति पूर्वे अमंसत । अस्मदार्याणां मतेऽपि वृक्षारण्यनदीनगरादीनां देवताधिष्ठानत्वं प्रमाणीकृतमपि तत्प्रणीतश्रुतिस्मृतीतिहासपुराणकाव्यादिवचनेभ्य एव लक्ष्यते । यथा श्रीसूक्ते— 'वनस्पतिस्तव वृक्षोऽथ बिल्वः' इति । अत्र बिल्वो लक्ष्म्या अधिष्ठानतया वर्णितः ॥

श्रीरामायणे गङ्गोत्तरणसमये गङ्गां सीता— 'पुत्रो दशरथस्याय महाराजस्य धीमतः । निदेशं पारयित्वेमं गङ्गे त्वदभिरक्षितः । ततस्त्वां देवि सुभगे क्षेमेण पुनरागते । यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनी ॥' इति । वृक्षविषये कालिदासेन शाकुन्तले—'क्षौमं केनचिन्दुपाण्डु तरुणा...अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैः

इत्युक्तम् । तस्यैव मेघसंदेशे— 'पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानाम्' इति ॥

पितृदत्तराजधान्यां कुशावत्या निवसन् कुश एकदा स्वीयशयनागारे निद्रामासेवमान· निशीथसमये अग्रतोवस्थितां दीनवदनां कांचिन्नारीं दृष्ट्वा 'का त्वम् ? कस्य परिग्रहः ? पिहितकवाटे मम मन्दिरे ? इत्यप्राक्षीत् । तदुपरि सा 'राजन् रघुकुलप्रकाण्ड स्वपदं गतेन तव पित्रा परित्यक्तां दुरवस्थामापन्नां मामयोध्यानगराधिदेवतामवेहि । नार्हत्येवं भवानपि मां हातुम्' इत्यश्रुधारासारपङ्किलीकृत· शयनागारकुट्टिमा भृशं रुरोदेति रघुवंशे षोडशे सर्गे कथितम् ॥

तस्मादनादिकालमारभ्य वृक्षादयो देवतायतनानीत्यभिप्रायो हिन्दूशर्मण्यप्रजानामासीदिति पूर्वोदाहृतवचनेभ्योऽधिगम्यते ॥

## अथ गृहनिर्माणकौशलम् ॥

ऐरोपाखण्डस्य भूयानुत्तरभागः पशुचारणोपजीविभिरस्थिरवासैः प्रवहणमात्रशरणैर्मनुष्यै. समाक्रान्तः अभूदिति प्राञ्चोऽजानन् । ते प्रवहणेषु स्वदारगवं सपरिच्छदं च निधाय देशाद्देशान्तरमाहिण्डमाना आसन् । विशेषत· ऐरोपाखण्डस्य पूर्वदिग्भागे निवसतां सिथियस्सारमेद्रजातीयानामयमेव जीवनप्रकार इति सर्वैरुच्यते । हिन्दूशर्मण्यजातिष्वप्ययमेवाचारो निःसंशयमुपलक्ष्यते । क्रीस्तोः पूर्वं द्वितीयशतके वर्तमाना बाष्टर्नीजातिजाः स्वदारपुत्रादिकं शकटैः स्थलान्तरं प्रापयन्ति । तथा सोबीजादिरपि प्रवहणान्येव सज्जीकृत्य पशुगणैः समं यथाभिलषितं देशं गन्तुं शेकु· । सिंब्रीजातिमनुष्यैरपि प्रवहणान्येव गृहत्वेनोपयुक्तानि ॥

(क्रमश ।)

आधिराज्येऽभिषिच्य गुरावेवासज्य सकलमपि राज्यतन्त्रम्, संतोष्य धनरत्नभूषणवसनैश्चिरानुगतं परिजनम्, प्रीणयित्वा प्रवयसोऽधिकारिपुरुषान् ग्रामधनाभरणै, संपूज्य यथाभिमतं यथार्हं च द्रविणनिचयेनाचार्यान् पुरोधस ऋत्विज आर्यान् द्विजातीनपि, व्यवस्थाप्य तेषु तेष्वधिकारेषु परीक्षितगुणगणान् अनुरक्तान् स्वामिन्यभिजनवतोऽधीतशास्त्रान् प्रगल्भान् पुरुषान्, अपि च विसृज्य कारागारनिरुद्धान् बन्धिन., अवधूय विषयस्पृहाम्, अपसार्य कामं, परित्यज्य भयम्, अपाहृत्य शोकमोहौ. विचार्य स्थिरता भुवनानाम्, बुद्ध्वा अविद्यापरिणतिं जगत', अभिज्ञायाहंतोपकल्पितता वैषयिकसुखदुःखानाम्, आवेश्य हृदय परस्मिन् पुरुषे, स्नात्वा भागीरथ्याम्. उपस्पृश्यास्थित आतनुविनाशं महान्तमपि नियमं शुचा तस्या एव दक्षिणे तटे प्रागग्रेषु कुशेषु तमेवालोकयन् विधूतमकलसग' प्रायमुपविवेश ॥

तदानी च समाधिविज्ञातपरीक्षिद्वृत्तान्ताः उपजग्मुराश्रमेभ्यः कालत्रयवेदिनः अत्रिरगस्त्योऽरिष्टनेमिरार्ष्टिषेण इध्मवाह इन्द्रमद उचथ्य और्व अङ्गिरा गाधिनन्दनो गौतमश्च्यवनो जामदग्न्यो देवलो नारदः पराशरः पिप्पलादो बादरायणो भरद्वाजो भृगुर्मेधातिथिर्मैत्रेयो वसिष्ठोऽन्ये च देवर्षयो ब्रह्मर्षयो राजर्षयश्च । परीक्षिदपि तान् प्रत्युद्गम्य विनयप्रह्वः प्रणिपत्य यथार्हमर्घ्यादिभिरुपचारै पूजयामास । अथ तेषु पूजितेष्वलंकुर्वाणेषु चासनानि, हर्षयन् परिषदं तादृशी मुनीनां परीक्षिदपि श्लक्ष्णयारोपितभक्तिभारया गिरा प्रत्यवादीत्— 'विदितं हि वो भगवतां तादृग्गुरुतनयास्त्रनिर्दग्धोऽहं कुरुपाण्डवान्वयप्रतिष्ठापनायैव प्रत्युज्जीवितोऽस्मि भगवता कृष्णेनेति । मया पुन-

रनुशिष्टेन पितामहैरनुगृहीतेन वासुदेवेनानुवर्तमानेनाचार्यं शारद्वतम्, अपि च दिवमारूढेषु सकृष्णेषु तेषु पूर्वराजर्षिषु धर्ममेवाबध्नता पालिता मही, शिक्षिता दुष्पथप्रवृत्ताः, निरस्तः कलिः, स्थापितो धर्मः । अद्य त्वनतिलङ्घ्येन नियोगेन विधेरात्माविनयप्रभवस्तनुविनाशो ममान्तिक एव परिवर्तते । जानाम्यप्रतीकारभीषणं महिमानं ब्राह्मणानाम् । न हि तत् प्रभवति कर्तुं मृत्युर्नालं बलवान् वह्निः नाशीविषो वा रोषितः, यत् क्रुद्धो ब्राह्मणः कुर्यात् । सर्वथा बलवान् विधिः । यथास्मै रोचते तथैव चेष्टयति जगत् । नियतमिदं खलु मोहविलसितम्; यदेवंविधे वस्तुनि प्रत्ययो नाम पौरुषे पुरुषस्य । तदननुशोच्ये व्यतिकरेऽस्मिन् गायत भागवतीर्गाथा. । वर्णयत चरितानि हरेः । निवेदयतानन्तरकरणीयं मम । यदिह निःश्रेयसावहमासन्नमृत्योर्मम तदादिशन्तु भगवन्तः । भगवन्तो हि निर्णीतपरावराः प्रसन्ना योजयन्ति श्रेयसा प्रपन्नान् प्राणिनः । इदानीं माननीयोऽस्मि राजसु ; यमेतादृशि समये अचिन्तितोपगता मान्या मानयन्ति भगवन्तः––' इति ॥

ततो महर्षयस्तेन गम्भीरमधुरेण नरपतिवचनेन तरलितहृदया विचारयन्तस्तमेवार्थं सर्व एव ते नृपतिमवोचन्— 'महाभाग, अनुरूपेयं प्रवृत्तिरखिलात्मनि वासुदेवे तवानुजातस्य पाण्डवान्; ये खल्वपहायाखिलक्षितिपालमकुटोपलालितमासनमनुजग्मुर्भगवन्तं कृष्णमेव । भङ्गबहुले दुरितोदर्केऽस्मिन् संसारे कः प्राणित्यभग्नसंतोषो मुहूर्तमपि? तादृशि चास्मिन् परिवर्तमानः शरीरी जानन्नप्यचेतयमानोऽपि शक्तिमानप्यनीशोऽपि विद्वानपि मूर्खोऽपि आढ्योऽपि दुर्गतोऽपि प्रबुद्धोऽपि स्वप्नायमानोऽपि धीरोऽपि कातरोऽपि विनी-

तोऽपि स्वच्छन्दवृत्तिरपि बन्धुमानप्येकोऽपि जल्पाकोऽपि मूकोऽपि कुशलोऽपि जडोऽपि शूरोऽप्यबलोऽपि वदान्योऽपि कृपणोऽपि अभिभूयते भवितव्यतया । को नाम मनीष्यनुशोचेदतिक्रान्ते ? चेष्टितव्ये ह्यनुरूपे प्रसरति बुद्धिर्मनीषिणाम् । न तच्छक्नोति कोऽपि कर्तुमन्यथा यद्भवितव्यम् । तदिमामपास्यानर्थबहुलामतीतानुबन्धिनी कल्पनां परस्मिन् शर्मौपयिकी वृत्तिरेकैव संश्रयणीया शरीरिणा । साऽपि तव नान्या भगवद्भजनात् । वयमप्यादेहपातं वर्तमाना अस्मिन्नेव तटोद्देशे जाह्नव्या विनोदयामस्त्वा हरिकथाभिरेव । त्वमपि मुक्तसङ्ग प्रसन्नेन मनसा ध्यायन् परमं ज्योतिर्भगवन्तं वासुदेवं परित्यज्य चेदं दुःखबहुलं कलेबरं प्राप्नुहि निरतिशयमानन्दम्—' इति । परीक्षिदपि समाश्वासितो वचोभिर्मुनीनां तैः सह तास्ता भागवतीः कथाः कुर्वन्नासाचक्रे ॥

अत्रान्तरेऽमलेन देहप्रभासंतानेनोन्निद्रेन्दीवरविलसितानीव दिगन्तराणि दर्शयन्, अभिनवपल्लवारुणाभ्यामतिमृदुलस्पर्शाभ्यां रक्ताङ्गरागभक्तिमिव विरचयन् पदेपदे वसुन्धरायाः, चरणोत्क्षेपणावक्षेपणप्रस्फुरिताभिरच्छाच्छाभिश्चरणनखमयूखच्छटाभिः सर्वतः प्रकीर्णाभिः कुसुमराजिभिरिवाभ्यर्चयन् भूतधात्रीम्, आत्मविज्ञानविजितात् पञ्चशरादाच्छिद्याधःकृतेनेव तूणीरद्वितयेन जङ्घायुगलेनोद्भासमानः, उद्वृत्तचित्तमत्तगजनिरोधार्गलाभ्यामिव प्रतिष्ठिताभ्यामूरुस्तम्भाभ्यामवष्टब्धगतिः, हृदयकमलकर्णिकान्तरसंततावस्थापितस्य भगवतः सुदर्शनेनेव बहिर्विस्फुरितेन कूलंकषकरुणालहरीप्रवृत्तावर्तनिभेन नाभिचक्रेणोपजनितलोकलोचनभ्रमणः, निरपायशमनिःसारितस्य तापत्रयहुतवहस्यापयानसरण्येवाञ्जनमेचकया रो-

मावल्या विभूषितमुत्तरङ्गलावण्यलहरीवीचिभिरिव वलिभिर्विराजितं प्रतनूदरं बिभ्राणः, आजानुलम्बिभ्यां निर्मलनखसुषमोपगताभिररुणतनुदीर्घाभिरङ्गुलीभिर्विराजिताभ्यामारक्तकमलकोमलमृदुलतलाभ्यां दीर्घपीवरवृत्ताभ्यां भुजाभ्यां सकुसुमपल्लवाभ्यां कल्पलताभ्यामिवोद्भासितपार्श्वभागः, दृढघटितेन विद्याविज्ञानधनागारद्वारकवाटेनेव विशालेनोन्नतेन वक्षःस्थलेन विराजमानः, अवच्छन्नजत्रुदेशाभ्यामंसाभ्यामुद्भासमानः, प्रतिहतमहामोहेन विजयिना विवेकवीरेण विधृतं जैत्रशङ्खमिव विलसत्त्रिरेखाञ्चितं कण्ठदेशं दधानः, विद्रुमलताविभ्रमया अधरमणिरेखया कुमुदकोरकानुकारिभिर्दन्तकुड्मलैर्भूषितमुखपुण्डरीकः, वदनलावण्यामृतसरोविस्फुरितशफरानुकारिभ्यां विकचकमलकोमलाभ्यां विशालाभ्यां नयनाभ्यां विराजमानः, नयनकमलशोभागतया उपरि निश्चलावस्थानयालिमालयेव भ्रूलतया जनितपरभागः, असंयतोन्मुक्तेन व्यालम्बिना कुटिलदीर्घेण केशकलापेन पिहितममृतकिरणबिम्बविडम्बि विशालं निटिलतटमुद्वहन्, वाग्देवताविलासभवनान्तरास्थापितममलं मणिमुकुरद्वितयमिव कपोलयुगलं बिभ्राणः, सुप्रतिष्ठिताभ्यामायतविशालाभ्यां कर्णपाशाभ्यामुत्तुङ्गेन नासावंशेन च सूचितविश्वातिशायिवैभवः, उपात्तामेययोगैश्वर्यतया प्रचुरतेजःपुञ्जदुर्विभाव्यतया चापरिज्ञेयवयोवस्थाभेदोऽपि षोडशवार्षिक इवोपलक्ष्यमाणः, हरविनाशितावलेपतया जातनिर्वेदस्तपस्यन्निव पञ्चबाणः, निजाश्रयमहिमोपनतमवलम्ब्यावधूतभावं मुक्तसङ्गः परिभ्रमन्निव शंकरचूडनिलयः शशी, सद्गुरूपाश्रयणजनितमहिम्ना निरवशेषितदोषविकारेण विनीतेन शिष्येणेव यौवनेन संसेव्यमानः, स्वसंपर्कोपनतपरभागेन परिपूर्णाङ्गयोगेन सुहृदेव सौन्दर्येणा-

नवरताभियुक्तः, अतिमनोहरनिजलावण्यविलोकनविस्मितेन स्त्रीबालकप्रायेण नागरिकलोकेनानुगम्यमान , शुचिमधुरेण स्मितेन सविभ्रमैः कटाक्षवलनै. भुवनातिशायिना रूपेणाप्याययन् जनानां लोचनानि, आकर्षन्निन्द्रियाणि, आनन्दयन्मनांसि, मोहयन्मुनीनपि. अपि च सकलभूतहितैकान्तवृत्तिकतया हर्षावेशोत्फुल्लनयनै. काननमृगैरनुगम्यमानः, विस्मृत्य क्रूरभावमवलम्ब्य सौम्यता सुहृदमिवानुसरद्भि शार्दूलैरविरहितपरिसर , अन्यैश्चारण्यैर्ग्राम्यैर्निर्निमेषदृष्टिभिरुत्सृष्टस्वस्वव्यापारैः पशुभिरनुसृत , विततफणामण्डलैः कुण्डलिभिरभिनन्द्यमानागमन , उपरि चावद्धपङ्क्तिभिर्निजावयवासक्तलक्ष्यैर्वल्गुव्याहारैरनुगच्छद्भिर्हंसबर्हिणशुकपिकशारिकाप्रभृतिभिरखिलैरपि पत्त्ररथैरवच्छादितोपरिभाग , प्रमोदभरोल्लसितयादोगणया उद्यतोत्तुङ्गतरङ्गहस्तया भगवत्या हरिचरणनिम्नगयोपलाल्यमान . तनुवातेऽप्यानम्रशाखाग्रैस्तरुव्रातैरभिनन्द्यमान., अपि च क्वचित्तिष्ठन्, क्वचिच्छनैर्गच्छन्, क्वचिद्धावन्, कुहचिद्विहसन्, क्वचिदालपन्, कुत्रचिद्गायन्, मत्त इव, उन्मत्त इव, जड इव, मूक इव, अविज्ञेयाकारानुभावः, किं चावास शान्तेः, अधिष्ठानं विद्यानाम्, आलयो विज्ञानस्य, आकार सर्वलक्षणानाम्, आश्रय. सौन्दर्यस्य, आशयज्ञः सर्वोपनिषदाम्, वेत्ता वेदवेदाङ्गतत्त्वानाम्, अपि च वैतानहुतवह इव शमीगर्भप्रभवः, प्रभाकर इव निरस्ततमोबन्धः, प्रावृषेण्यवारिवाह इव शमितरजःप्रसर., प्रत्यूषसमय इवोचितप्रबोध , कौस्तुभ इव कलितजलजाक्षहृदयासक्तिः, उत्तमकाव्यबन्ध इव वाच्यातिशायिपरमार्थाभिव्यक्ति , भर्ग इव प्लोषितकामः, अमरतटिनीपूर इव हरिचरणासक्तिजनितपरभागः, अ-

ध्वरदीक्षित इवासकृन्निषिद्धममकारः, तार्क्ष्य इवाच्युतधारणोपसिद्धानुपममाहात्म्ययोगः, फणिपतिरिव विमलसत्त्वाङ्कान्तरनिषण्णविश्वंभरः, राकामृतकर इव परिपूर्णाखिलकलः, शरत्समय इव भुवनदर्शितप्रसादः, वसन्त इव कलितसुमनोविकासः, आम्नाय इवाप्राकृतवाग्वृत्तिः, निगमोत्तमाङ्गसंदर्भ इव भगवद्वैभवविशदीकरणचणः, द्वन्द्वयोगविमुक्तोऽप्यद्वन्द्वयोगविमुक्तः, प्रबुद्धमतिरप्यबुद्धमतिः, विख्यातचरितोऽप्यविख्यातचरितः, उत्तमश्लोकगुणकथाभिरतोऽप्यनुत्तमश्लोकगुणकथाभिरतः, अवधूतवृत्तिरप्यनवधूतवृत्तिः, अपि च दवदहनो मोहगहनस्य, प्रभाकरोऽविद्यातमसः, निस्त्रिंशः पाशबन्धानाम्, कुम्भयोनिः संसाराकूपारस्य, कुठारस्तृष्णाविषवल्लरीणाम्, अपि च तपोमय इव करुणामय इव चिन्मय इव निरतिशयमाहात्म्यनिधिराजगमावधूतो भगवान् वैयासकिर्महायोगी ॥

ततो दूरत एव विज्ञाय तैस्तैर्लिङ्गैस्तं महायोगिनं शुकं सर्व एव ते समुपजातसंभ्रमा मुनय आसनेभ्यः समुत्तस्थुः । परीक्षिदपि तथाविधमागतं प्रत्युद्गम्य मुकुलितकरकमलो दूरावनतेन शिरसा प्रणम्य दर्शितभक्तिः संपूज्य विविधैरुपचारैः निवेद्य सप्रश्रयं मधुपर्कं गां च महार्हमासनमर्पयामास ॥

अथ तस्मिन् नरपतिनिर्दिष्टमासनमलंकुर्वति सर्वेऽपि मुनयः स्वासनानि भेजिरे । अनुगतश्च नरतिर्यङ्निवहो यथागतमगच्छत् । तथाविधे च तस्मिन् व्यतिकरे महीव कुलगिरिनिकरपरिवृतेन कनकगिरिणा, द्यौरिव ग्रहनक्षत्रसंवृतेन शीतकरेण, महाध्वरवेदीवाहवनीयेन, बलियज्ञवाटीवाखिलसवयस्यार्त्विङ्मण्डलमध्यगतेन भगवता वा-

मनेन, परमेष्ठिसभेव सकलसुरनरराजर्षिगणपरिवृतेनात्मभुवा विरराज सा सभा भगवता बादरायणिना । ततश्च तत्सौन्दर्यविस्मितहृदयेषु तदाननासक्तदृष्टिषु निःष्पन्दगात्रेषु जोषमास्थितेषु महर्षिषु मुनिचित्रमय इव तस्मिन् सदसि परीक्षदपि भक्त्यानतेन मूर्ध्नाभिनन्द्य शुकयोगिनमुवाच — 'भगवन्! धन्यतामुपयातोऽस्मि यदृच्छयापि मदनुग्रहार्थमेवागतेन भवता । भवान् निर्भरानन्दतुन्दिलस्वान्तः सकलभूतहृदयवेत्ता तीर्थयन् तीर्थान् पावयन् पूतान् गुरुर्गुरूणामर्हणीयो महात्मनां पूज्यः पूज्यानां ब्रह्मभूत एव केवल स्मृतमात्रोऽपि योजयेन्निःश्रेयसेन मादृशं क्षत्रबन्धुम्; किं पुन साक्षात्कृतः । महानयं फलोद्गमो मज्जननान्तरसंभृतानां पुण्यानाम्, यदुपसर्पणाभाषणाभिवन्दनस्पर्शनचरणावनेजनादिभिर्भगवत. कृतार्थीकृतोऽस्मि । सर्वथा प्रसन्नो मयि भगवान् देवकीनन्दनः पैतृष्वसेयप्रीत्योपारूढपक्षपातो मत्पितामहेषु, कथमन्यथा परिभ्रमतोऽपारे भवकान्तारे निबिडतमःप्रसरपिहितदृष्टेः कांक्षतो निस्तारमुद्विग्नस्य शरणार्थिनो मुमूर्षोर्मम गोचरीभवेदेवंविधे समये परमो गुरुर्योगिनामव्यक्तगतिर्भगवान् । अद्य खल्वेतादृशीं दशामुपगतेन मया किं करणीयम्? किं श्रोतव्यम्? किं नु चिन्तनीयम्? किं जप्यम्? किं वा ध्यातव्यम्? किं पठनीयम्? किमाचरणीयम्? येन निर्धूय परमिममविद्याबन्धं परममुपगच्छेयमच्युतं पदम् । सर्वथा नान्यदस्ति शरणं मम विमुक्ताखिलसंगात् करतलबदरायमाणपरतत्वादखिललोकवन्द्यचरणाद्भगवत । सुदुर्लभमवस्थान भगवतो गोदोहनकालमपि भवनेषु गृहमेधिनाम् । इदानीं च यदि प्रसन्नो मयि भगवान् यदि मान्योऽहं महर्षीणां यदि चार्हामि तावदनुग्रहं यदि च जानात्यखिलहृदयाप-

रोक्षसंवित्संपन्नो भगवानिमां मदार्ति निर्वेदं ममैवंविधं यदि च संप्रतिपन्ना ब्रह्मण्यता मत्पितामहानां यदि चोपलालनीयो मय्यनुग्रहो भगवतः कृष्णस्य यदि समान्योऽन्ववायो यस्मिन् जातोऽस्मि, आवेदयतु तर्हि भगवान् पृच्छते मह्यम् । अखिलजगद्विलोभनीयात्युदारप्रकृतिरियं भगवतो न कमर्थीकुर्यात्? सर्वथा स एवोपलम्भमर्हति महिमा भगवतः, यो मामपि प्रश्नकर्मणि नियुङ्क्ते' इति ॥

अथ भगवान् वैयासकिरतिगभीरामाकर्ण्य क्षितिपतेर्गिरं प्रत्यवादीत्— 'विष्णुरात! उचितस्तवैवायमखिलभुवनभावुकनिदानाऽनुपम प्रश्नः । स एव धन्यतमः प्राणिषु, यस्य चानुरज्यते स्वभावतो हृदय गुणेषु भगवतः, शुश्रूषते वा भागवतीः कथाः । यद्यप्यवतीर्णानां दुःखमयमिदं परिचितिगहनं पीड्यमानानां विविधैः संगैरविज्ञातात्मतत्त्वानां प्रार्थयतामभेदं नृणां सन्ति भूयांसः श्रोतव्यादयोऽर्थाः, तथापि काङ्क्षद्भिः परमं निःश्रेयसं विज्ञेयोऽयमेव महार्थः; यो ह्यद्य जिज्ञासितो महाभागेन । दुर्लभं हि मानुषं जन्म प्राक्तनकर्मवासनाविवशानां संसरतामात्मनाम् । हन्त! उपलब्धेऽपि तादृशे जनुषि अतिक्रामत्यर्धं निद्रालूनामेव रजनीषु । अर्धे च परस्मिन् अपनीयते कियानपि कालोऽज्ञानबहुलेन शैशवेन । अतिवाह्यन्ते च कियन्तोऽपि दिवसा ग्राम्यविविधोपभोगलालसैरभिनवतारुण्यविलुप्तविवेकैः पुरुषैः । दुर्भरनिजकुटुम्बभरणव्यग्रैरर्थतर्षमुषितात्मभिर्याप्यन्ते कतिचन दिनानि । अपरश्च वयःपरिणामशिथिलितावयवैरपारयद्भिर्निर्वोढुमात्महितं जराजर्झरैर्नीयते कालः । अहो! महती खल्वियमनात्मज्ञता लोकस्य, यदविद्याविलसितेऽस्मिन् जगति स्वप्नोपलब्धितुल्येषु देहालयसुतकलत्रबन्धुसुहृदर्थेषु निविष्ट

स च कल्पभेदः दीक्षणीयादिद्वारा अनेककर्तृकेषु सत्रादिषु प्राप्त । तत्र सत्रादौ भिन्नकल्पानामप्यधिकार. समानकल्पानामेव वेति विशये अविशेषात् भिन्नकल्पानामपीति प्राप्ते एककल्पाननुष्ठाने अन्येषां वैगुण्यापत्त्या समानकल्पानामेवाधिकार इति ॥

इति षष्ठाध्याये षष्ठः पादः ॥

———*———

## अथ सप्तमः पादः ॥

सप्तमे पादे देयविचार. । तथाहि— "विश्वजिति सर्वस्वं ददाति" इति श्रुतम् । तत्र पित्रादीनामपि ज्ञातित्वेन स्वशब्दवाच्यतया दानम्, उत धनस्यैवेति चिन्तायाम् अविशेषात् पित्रादीनामपि दानम् । परस्वत्वापादनरूपस्य दानस्य पित्रादिविषयेऽपि परविधेयीकरणेनोपपत्तेः इति प्राप्ते, स्वस्वत्वत्यागपूर्वकं परस्वत्वापादनं हि दानम् । न हि पित्रादिषु धन इव यथेष्टविनियोगयोग्यत्वरूप स्वत्वं संभवति । तस्मात् धनस्यैव दानमिति ॥

इति षष्ठाध्याये सप्तमः पादः ॥

——— ❀ - - -

## अथाष्टमः पादः ॥

अष्टमे पादे अग्न्यादिविचारः । तथाहि— 'यो ब्रह्मचार्यवकिरेत् स नैर्ऋतं गर्दभं पशुमालभेत' इति श्रुतो याग आहवनीयादिषु लौकिकाग्नौ वेति विशये ब्रह्मचारिणस्त्रैवर्णिकत्वेन विद्यावत्त्वाच्च भार्यामधिगम्याधानोपपत्तेराहवनीयादिष्वेवेति प्राप्ते 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति वचनेन विप्लुतब्रह्मचर्यस्यावकीर्णिन.

अकृतप्रायश्चित्तस्य विवाहनिषेधात् अपत्नीकस्य चाधानासंभवात् लौकिकाग्नावेवेति । एवम् 'अग्नीषोमीयं पशुमालभेत' इत्यनेनाश्वादीनामपि यागाङ्गत्वमविशेषात् बोध्यते, उत, 'छागस्य वपाया मेदसोऽनुब्रूहि' इति मन्त्रवर्णानुरोधात् छागमात्रस्येति चिन्तायामविशेषप्रवृत्तविधेः न मन्त्रवर्णात् संकोचसंभवः । मन्त्रवर्णस्य विध्येकवाक्यतानापन्नत्वात् । 'अक्ताः शर्करा उपदध्यात्' इत्यत्र तु तेजो घृतमित्यर्थवादवशात् घृतेनैवाञ्जनमित्युपपद्यते । अर्थवादस्य विध्येकवाक्यत्वात् । छागस्य वपाया इति मन्त्रस्तु छागपक्ष एवेति प्राप्ते, सामान्यशब्दस्य विशेषपर्यवसानमन्तरेणानुष्ठानानिर्वाहात् विशेषापेक्षायामनुष्ठानदशायामर्थस्मारकस्य मन्त्रस्यैव विशेषसमर्पकतया तदनुरोधेन विधिगतपशुशब्दस्य छागमात्रपरतया तस्यैवाङ्गत्वम् । न त्वश्वादीनामिति छागवत एवाधिकार इति ॥

इति षष्ठाध्याये अष्टमः पादः ॥

समाप्तश्च षष्ठोऽध्यायः ॥



## सप्तमोऽध्यायः ॥

### प्रथमः पादः ॥

तदेवं पादाष्टकपरिमितेन षष्ठाध्यायेनाधिकारो निरूपितः । इत्थं पूर्वषट्केन उपदेशविचारे वृत्ते उत्तरषट्केन तदधीनसिद्धिकातिदेशविचारः प्रवर्तते । तत्रातिदेशो नाम यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनावधारितः तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण ता-

दृशोपकारद्वारैवान्याङ्गताबोधक प्रमाणम्। भवति च प्रकृतिवत् विकृतिः कर्तव्येत्येवमादिकं वाक्यम्। प्रयाजादिपदार्थानामदृष्टोपकारद्वारा आग्नेयाद्यङ्गत्वेनावधारितानामाग्नेयादिसंबन्धित्वेन रूपेण तादृशोपकारद्वारैव सौर्याद्यङ्गताबोधकम्। अत्र च दर्शपूर्णमासादीनामपूर्वद्वारा स्वर्गाद्यङ्गत्वेनावधारितानां तेनैव द्वारेण पापक्षयाद्यङ्गताबोधके यावज्जीवादिवाक्ये अतिप्रसङ्गवारणाय तत्संबन्धित्वेन रूपेणेति। न हि दर्शादेः स्वर्गसंबन्धित्वेन रूपेण पापक्षयार्थता, प्रमाणाभावात्। अपि तु दर्शत्वादिनैव। प्रकृते तु प्रयाजादीनामाग्नेयेतिकर्तव्यतात्वेनैवानुगमात् तदेव विकृत्यङ्गतावच्छेदकम्। पुरोडाशकपालादेश्च पुरोडाशसबन्धित्वेनावधारितस्य तेनैव रूपेण तुषोपवापाङ्गताबोधके 'पुरोडाशकपालेन तुषानुपवपति' इति वाक्येऽतिप्रसङ्गवारणाय तादृशोपकारद्वारेति। पुरोडाशे तज्जनकश्रपणाधिकरणतया कपालस्योपकारकत्वम्। तुषोपवापे तु करणतया तथात्वमिति भेदात् न दोषः॥

स चातिदेशस्त्रिविधः—प्रत्यक्षवचनातिदेशः, नामातिदेशः, अनुमितवचनातिदेशश्चेति। तत्र तृतीयस्त्रिविधः— सादृश्यकल्पितवचनातिदेशः, स्थानापत्तिकल्पितवचनातिदेशः, आश्रयोपस्थितिकल्पितवचनातिदेशश्चेति। तत्र सप्तमेऽध्याये सामान्यातिदेशविचारः। तत्र प्रथमे पादे प्रत्यक्षवचनातिदेशनिरूपणम्। तथाहि——इषुर्नाम एकाहो ज्योतिष्टोमविकारः। तत्र प्रकृतिप्राप्तसामानुवादेन वषट्कारनिधनं प्राकृतविषुताविष्वाकारम्। प्राकृतस्तोत्रे सप्ताहाख्यं साम च विधाय 'समानमितरत् श्येनेन' इति श्रुतम्। इदं च वाक्यं किमनुवादः, उत अतिदेशविधिरिति विशये अतिदेशप्राप्ताना ज्योतिष्टोमादिधर्माणामनुवाद एवायम्। अप्राप्तत्वेन विधानार्हाणां श्येनवैशेषिकधर्माणां लोहितो

ष्णीषादीनामसंनिहिततया इतरशब्देनप्रतिपादनासंभवात् । इतरशब्दस्य हि पूर्वोक्तातिरिक्तसंनिहितवाचित्वमेव, लोके तथैव दर्शनात् । ततश्च ज्योतिष्टोमधर्माणामतिदेशत· संनिहितत्वात् श्येनेऽपि सत्त्वेन सादृश्यनियामकत्वसंभवाच्च इतरशब्दस्तत्पर एवेति अनुवादरूपमेवेद वाक्यमिति प्राप्ते अतिदेशविधिरेवाय श्येनवैशेषिकधर्माणाम् । इतरशब्दो हि न पूर्वोक्तातिरिक्तसंनिहितमात्रवाची । किं तु पूर्वोक्तातिरिक्ततत्सदृशसंनिहितवाची । चैत्रमैत्रयो. कम्बलकौशेये देये, इतरत् विष्णुमित्रायेत्यत्र इतरशब्देन पूर्वोक्तसदृशसनिहितवस्त्रादेरेव प्रतीते. । इत्थं च संनिहिताना प्राकृताना पूर्वोक्तैरप्राकृतै. सप्ताहादिभि· सादृश्यासंभवात् श्येनवैशेषिकधर्माणामप्राकृतत्वेन सादृश्यसंभवेऽपि असंनिहिततया सादृश्यसंनिहितत्वयोरन्यतरस्य त्यागे अवश्यकर्तव्ये वचनार्थवत्त्वाय संनिहितत्याग एव युक्त । न ह्यनुवादे किंचित् फलमस्ति । तथा च श्येनाङ्गसदृश यदप्राकृतत्वेन सप्ताहादिसदृशं तदिषौ कार्यमिति वाक्यार्थ । तस्मादतिदेशविधिरेवायमिति ॥

## इति सप्तमाध्याये प्रथमः पादः ॥



## द्वितीयः पादः ॥

द्वितीये पादे अतिदेशोपयुक्तो रथंतरादिपदशक्तिविचार. । तथाहि— 'कवतीषु रथंतरं गायति' इत्यादौ रथंतरादिशब्दा ऋग्वाचिन , गीतिविशेषवाचिनो वेति विशये गीतिविशिष्टायामृच्येव रथंतरादिशब्दाना प्रयोगात् तद्वाचित्वमेवावश्यकम् । ततश्च ऋचि

ऋगन्तरातिदेशासंभवात् कवतीशब्देन कवतीकार्यमर्थप्रकाशनं लक्षयित्वा तदुद्देशेन रथंतरशब्दवाच्याया अभिवत्या विधानमिति प्राप्ते गीतिविशेष एव रथन्तरादिपदशक्तिः । न तु गीतिविशिष्टायामृचि, गौरवात् । गोत्वादिवाचकगवादिपदात् व्यक्तेरिव ऋग्लाभसंभवात् । ततश्च कवतीषु रथंतरं गायतीत्यस्यायमर्थः — अभिवत्यामुत्पन्नो गीतिविशेषः कवतीषु कार्य इति । अभित्वा शूरनोनुम इत्यादिका ऋक् अभिवती । कयानश्चित्र आभुवदित्यादिका कवत्य ॥

इति सप्तमाध्याये द्वितीयः पादः ॥

---

## तृतीयः पादः ॥

तृतीयपादे नामातिदेशविचार । तथा हि— कुण्डपायिनामयने श्रूयते—'मासमग्निहोत्रं जुहुति' इति । इदं चाग्निहोत्रं नैयमिकाग्निहोत्रात् कर्मान्तरमिति प्रकरणान्तराधिकरणे स्थितम् । तत्राग्निहोत्रशब्दः किं नैयमिकाग्निहोत्रधर्माणामतिदेशकः, उत नेति चिन्तायां नैयमिकाग्निहोत्रस्येव मासाग्निहोत्रस्यापि शक्त्यैव बोधोपपत्त्या न मासाग्निहोत्रेऽग्निहोत्रशब्दस्य गौणत्वम् । अतश्च न धर्मातिदेशकत्वमिति प्राप्ते, अनेकार्थत्वस्यान्याय्यतया नैयमिकाग्निहोत्र एव शक्तिः । मासाग्निहोत्रे तु नैयमिकाग्निहोत्रधर्मसदृशधर्मवत्परतया गौणत्वमेव । न च विनिगमनाविरहः । तत्प्रख्यन्यायेन नैयमिकाग्निहोत्रनामताया व्यवस्थापितत्वात् । मासाग्निहोत्रे अग्निदेवताकत्वस्य कथमप्यप्राप्तत्वेन तन्न्यायानवतारात् । तस्मान्मासाग्निहोत्रे अग्निहोत्रशब्दः नैयमिकाग्निहोत्रधर्मविधानार्थतया आतिदेशिक एवेति ॥

इति सप्तमाध्याये तृतीयः पादः ॥

## अथ चतुर्थः पादः ॥

चतुर्थे पादे अनुमितवचनातिदेशविचारः । तथा हि—'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादिषु अनाम्नातेतिकर्तव्यताकेषु इतिकर्तव्यताकाङ्क्षायां वक्ष्यमाणसादृश्येन प्रकृतिभावनोपस्थितौ तदंशत्रयस्याप्युपस्थितेः । तत्र फलकरणयोरनपेक्षिततया अपेक्षितेतिकर्तव्यतैव कल्पितेन प्रकृतिवदित्येवंरूपेण विकृतिवाक्यशेषभूतातिदेशेन विकृत्यङ्गतया विधीयते । अतः सर्वत्रानाम्नातेतिकर्तव्यताकस्थले आम्नातेतिकर्तव्यताकादितिकर्तव्यतातिदेशः । तत्राम्नातेतिकर्तव्यताकाश्च यथा दर्शपूर्णमासादयः । श्रौतास्त्रेताग्निसाध्या वैदिकाभिधानास्तथा पार्वणस्थालीपाकादयः स्मार्ताग्निसाध्या लौकिकाभिधाना अपीति । तत्राविशेषात् सौर्यादावुभयेभ्योऽप्यतिदेश इति प्राप्ते, प्रत्यक्षपठितश्रुतिविहितत्वसादृश्यात् वैदिकानामेवोपस्थित्या तत एवेतिकर्तव्यतातिदेश इति ॥

### इति सप्तमाध्याये चतुर्थः पादः ॥

### समाप्तश्च सप्तमोऽध्यायः ॥

---

# अथाष्टमोऽध्यायः ॥

## प्रथमः पादः ॥

एवं सामान्यतश्चोदनालिङ्गातिदेशे सिद्धे प्रकृतिविशेषनिरूपणाय अष्टमाध्यायप्रारम्भः । तत्र एकस्मिन् सौर्यादौ एकविध्यन्तेनैव निराकाङ्क्षत्वात् सर्वविध्यन्तसमुच्चयायोगेऽपि नियामकाभावात् अनि-

यमेनानेकविध्यन्तप्राप्तेर्विकल्प एवेति प्राप्ते, अष्टदोषदुष्टविकल्पस्यान्याय्यत्वात् यस्यैव सादृश्यविशेषेण शीघ्रोपस्थिति तत एव धर्मातिदेश । तच्च सादृश्यं शब्दघटितमर्थघटितं चेति उत्तरत्र प्रपञ्चयिष्यते । तत्र प्रथमे पादे स्पष्टलिङ्गेनातिदेशविशेषनिरूपणम् । तथा हि— सौर्यादिषु इष्टिसमाख्यातेषु इष्टिसमाख्याकत्वसामान्यात् निर्वपतिधातुमद्वाक्यसंबन्धित्वात् तद्धितपदविहितदेवताकत्वाच्च दर्शपूर्णमासविकारत्वमेव । अत एव प्रयाजे प्रयाजे कृष्णलं जुहोतीति लिङ्गमुपपद्यते । परिमाणविशेषविशिष्टसुवर्णशकलं कृष्णलम् । तच्च प्रयाजानुवादेन विधीयते । न हि दर्शपूर्णमासविकारत्वाभावे कथमपि प्रयाजप्राप्तिः संभवति । एवं पशावप्यग्नीषोमीयदैक्षसंज्ञिके तद्धितपदविहितदेवताकत्वात् आलभतिधातुमद्वाक्यसबन्धित्वाच्च दर्शपूर्णमासविकारत्वमेव । अत एव प्रयाजानिति लिङ्गोपपत्तिः । सवनीयादिपशुषु तु दैक्षपशुविकारत्वमेव । आलभतिचोदनाकत्वपशुद्रव्यकत्वाद्यधिकसादृश्यात् यूपाद्यधिकधर्मलाभाच्च । अत एव औदुम्बरो यूपो भवतीत्यादिलिङ्गमुपपद्यते । ऐकादशिनेषु तु सवनीयविकारत्वम्, सुत्याकालिकत्वस्याधिक्यात् । पशुगणेषु सौत्येषु असौत्येषु वा पशुगणान्तर्गतत्वसादृश्यात् गणधर्माधिक्यलाभाच्च ऐकादशिनविकारित्वम् । उद्भिदादिषु अव्यक्तत्वसादृश्यात् ज्योतिष्टोमविकारम् । अव्यक्तत्वं च स्वाङ्गतया सहितदेवतारहितत्वम् । ग्रहणाङ्गभूताया इन्द्रवाय्वादिदेवताया प्रसङ्गेन सोमयागोपकारकत्वेऽपि ज्योतिष्टोमाङ्गत्वाभावात् तस्याव्यक्तत्वोपपत्तिः । उद्भिदादौ देवतात्मकरूपलाभस्तु अव्यक्तत्वेन ज्योतिष्टोमधर्मातिदेशे सिद्धे आतिदेशिकग्रहणाङ्गभूताया देवतायास्तदुपकारकत्वकल्पनया सुलभ । एवं गवामयनादिसत्रेषु द्विरात्र्याद्यहीनेषु

च सुत्यागणेषु द्वादशाहविकारत्वम् । सुत्यागणान्तर्वर्तित्वसामान्यात् अहोरात्रसाध्यकर्मवाचिपदवाच्यत्वसामान्याच्च । अत्र हि रात्रिशब्दोऽह.शब्दश्चाहोरात्रसाध्यकर्मविशेषपर । संवत्सरसाध्यसत्रेषु गवामयनविध्यन्त., संवत्सरसत्रत्वसामान्यात् अयनशब्दवत्त्वसामान्याच्च । निकायिनां तूत्तरेषु पूर्वविध्यन्तः साहस्राः साद्यस्का इति एकसंज्ञया युगपत् प्रकृत्य पश्चात् क्रमेण विहिता यागा निकायिन उच्यन्ते, संघातरूपनिकाययोगात् । तेषु च यो धर्मवान् तस्याधर्मकेषु प्रवत्तिः एकसंज्ञायोगित्वसाम्यात् धर्मवांश्च पूर्व एवेति तद्विध्यन्त उत्तरेषु प्रवर्तत इति ॥

एवं प्रकृतिविशेषे निरूपिते फलनियमकर्तृसमुदायांशेऽपि तेषां प्रकृतित्वं संभवति न वेति चिन्तायां, प्रयाजादीनामिव तेषामपि प्रकृतिसंबन्धितया अतिदेशसंभवात् तदंशेऽपि प्रकृतित्वं संभवतीति प्राप्ते, न तदंशे प्रकृतित्वं संभवति ; तथा हि---फलस्य नियमशब्दाभिहितनिमित्तस्य कर्तृशब्दाभिहिताधिकारिणश्चाङ्गताविरहेण इतिकर्तव्यतामात्रसाकाङ्क्षायां विकृतौ नातिदेशसंभव , अनाकाङ्क्षितत्वात् । अथ सौर्यादिरूपविकृतौ श्रुतब्रह्मवर्चसादिना फलाकाङ्क्षाशान्तावपि अश्रुतफलविश्वजिदादिषु फलाकाङ्क्षासत्वात् अव्यक्तत्वसादृश्येन ज्योतिष्टोमफलातिदेशः संभवत्येवेति चेत् ; उच्यते— न तावदेकेनैव प्रकृतिवत् विकृतिः कार्येति वचनेन विकृत्युद्देशेनाङ्गविधानं फलोद्देशेन विकृतिविधानमिति सभवति । वैरूप्यापत्ते· । नापि सादृश्यकल्पितवचनान्तरेण फलोद्देशेन विकृतिमात्रविधानमात्रम् । स्वविध्युपस्थापितविश्वविन्न्यायेनैव फलकल्पनोपपत्तौ अतिदेशकल्पने प्रमाणाभात् । अतो न फलस्यातिदेश इति । समुदायः अग्नी-

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकल परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे माघमासः । [संचि. ११.

## सुभाषितानि ॥



निष्क्रान्तौ मधुमाधवौ यदुदये कान्तारशैलापगा-
कासारोपवनेषु दीप्तविभवाः पुष्पप्रवालश्रियः ।
विश्रान्तो मलयानिलः परभृतास्तिष्ठन्ति वाचंयमाः
कालस्ते करट प्रजल्प विरसा वाचः स्वयूथार्चिताः ॥ १ ॥

पक्षौ शश्वद्विधून्वन् पतसि गृहवनारामशृङ्गोपकण्ठे
तीव्राक्रन्दैः स्वयूथं गृहबलिसमये मेलयस्यप्रमत्तः ।
दूराद्व्योमाग्रभागे निभृततनुरुहं स्वैरमुड्डीयमानं
द्रष्टुं वा राजहंसं प्रभवसि किमरे दुर्मते काण काक ॥ २ ॥

नैमित्तिकैर्विरुतमस्य गतं स्थितं वा
ज्ञातं शुभाशुभफलेषु निमित्तभूतम् ।
आहूयते बलिभुगेष बलिग्रहार्थं
सर्वाशुभास्पदमसौ तु खलो दिवान्धः ॥ ३ ॥

शतावधानम् . ति. ई. श्रीनिवासाचार्यः ।

# पुस्तकसमालोचना ॥

संस्कृतभाषायां तन्मयग्रन्थेषु चाचिरनिरूढमनादरमपोह्य तत्राभिरुच्युत्पादनार्थं विशेषतो बालानां पठनसौकर्यार्थं चाधोलिखितानि पुस्तकानि श्रीवाणीविलासादवतारितानि ॥

१. **रघुवंशः**— एकोनविंशतिसर्गात्मकमत्युत्तममिदं काव्यरत्नं बहुषु मुद्रणालयेषु मुद्रितचरमपि नावर्जिका मुद्रणरीतिरिति समालोच्य प्रथमं सर्गद्वयं सिंहविक्रान्तप्रतिकृतिपरिकर्मितं हृदयंगमया रीत्या पठनसौकर्यार्थं द्विचत्वारिंशत्पृष्ठेषु संमुद्रितं समावर्जयति प्रेक्षकाणां मनांसि । एतत्पठितॄणां वाग्देवीप्रसादो निरवकुण्ठितो भवेदिति सूचयन्तीव सरस्वतीप्रतिमा आदौ विन्यस्ता मुद्रापयितुः पठितॄणां च निरवधि निःश्रेयसमुत्पादयेदिति प्रतीमः ॥

२. **मेघसंदेशः**— आश्वासद्वयात्मकं कालिदासकृतमिदं काव्यरत्नमनितरसुलभेन मुद्रणसौष्ठवेन विद्युत्वानिव जलदो जीवलोकममुमेकान्ततः समाह्लादयति । अत्रादौ विन्यस्ता मूर्तिमतीवालका काचन प्रतिमा एतादृश्या भोगानुकूलाया नगर्या यक्षं विप्रोष्य कुत्रचित् कान्तारे प्रक्षिप्य महति दुःखसागरे विनिपातितवतः कुबेरस्य निर्घृणतामवगमयति ॥

३. **ऋतुसंहारः**— षट्सर्गात्मकमिदं काव्यमनन्यसुलभया मुद्रणवैखर्या मुद्रापितं मूर्तिमत्येव ऋत्वधिष्ठानदेवतया प्रतिकृत्या

द्वितीयः— सखे! तथैव । पुरा हि सर्वे वर्णाः स्वस्वधर्मेषु निरता अकृत्याचरणभीरवश्च समभवन् । अद्यत्वे तु ब्राह्मणाः शूद्रवृत्ति-मालम्बन्ते । शूद्राश्च ब्राह्मणधर्मानध्यापनादीनाश्रयन्ति । एवं सर्व एव शास्त्रचोदिता धर्मा विप्लवमुपयाता इति बलवान् कलिमहिमा ॥

प्रथमः— सत्यमाह भवान् । पश्य, अद्यत्वे हि ब्राह्मणाः करधृततुला-दण्डाः स्पृहयन्ति वाणिज्याय, विक्रीणन्ति घृततैलतण्डुलादीन-विक्रेयान् पदार्थान्, शुश्रूषन्तेऽवरजातीन् । शूद्राश्चाध्यापयन्ति ब्राह्मणान् ॥

द्वितीयः— पुरा हि राजानः यथा तत्तद्वर्णधर्माचाराः रेखामात्रमपि न वर्त्मनो व्यतीयुस्तथा वर्णधर्मपरिपालनबद्धोद्यमा पृथिवीं पर्य-पालयन् । यदि कश्चिदन्यवर्णधर्माननुतिष्ठेत् तदा तस्य दण्डो विधातव्य इति राजनीतिश्चासीत् ॥

प्रथमः— सत्यमेव । पुरा हि शूद्रकं तपस्यन्तं राघवोऽन्विष्यादण्ड-यदिति श्रूयते ॥

द्वितीयः— अद्यत्वे तु तस्मिन् विषये उदासिकामेव परमासीना भूपतयो नैव विचारयन्ति वर्णधर्माचारावस्थितिमिति तदुदर्कोऽयं व्यत्यासः ॥

प्रथमः— सखे मैवं वादीः । राजनीतिर्हि सर्वसाधारणी । तत्र यदि कश्चित् स्वीयं मतं वर्णं धर्मं चास्वरसमन्यं वर्णं धर्मं च स्वरसं मन्यते तदा स कामं प्रविशतु तन्मतं तं वर्णं वा इति प्रजानां मतानुवर्तिनीयं नीतिः ॥

द्वितीयः— तर्हि सर्वत्रापि प्रजामतानुसारिण्येव नीतीरस्तु । किं वा

महता धनव्ययेन न्यायस्थलानां तदधिकारिणां च परिकल्पनक्लेशेन? ॥

प्रथमः— अहो! तथा सति हि राज्यस्यैव मूलोच्छेद. प्रसज्येत। बलवन्तश्च दुर्बलान् पीडयेयुरिति मात्स्यो न्यायश्च प्रवर्तेत। अतः न्यायस्थलानां तदधिकारिणां च परिकल्पनमत्यावश्यकमेव ॥

द्वितीयः— किं वा देशान्तरीयाणां न्यायस्थलपरिकल्पनेन सुविहितं भविष्यति?। न्यायस्थलनियमनेऽपि प्राचीनस्मृतिविहितानां नीतीनां निवापाञ्जलिरेवाद्य दत्त। परं तु देशान्तरीया नीतय एवास्मद्देशेऽपि नियामकतया न्यायस्थलेषु परिकल्पिताः। कलहोपजीविनोऽपि ता एवाधीत्य तदनुसारेणैव न्यायस्थलेषु व्यवहरन्ति। तदनुसारेणैव च तत्त्वनिर्णय इति किञ्चिदिव विमनायन्ते पण्डिताः ॥

प्रथमः— नहि नहि। तथा न वक्तव्यम्। मनुयाज्ञवल्क्यवृद्धपराशरादिस्मृतिविहिता नीतय एव एतद्देशे न्यायस्थलेषु नियामकतया परिकल्पिता·। अत तदनुसारेणैव सर्वत्र न्यायस्थलेषु तत्त्वनिर्णयः क्रियते।

द्विनीयः— कथमेतत्। अपि नाम न्यायाधिकारे नियुज्यमाना आङ्गलदेशीया प्राड्विवाका अपि मनुस्मृत्यादीन् अस्मद्देशपरिक्लृप्तस्मृतिग्रन्थानवगच्छन्ति?। कथं तेषां संस्कृतभाषापरिचयः? ॥

प्रथमः— अस्त्येवाङ्गलानामपि केषांचित् संस्कृतभाषापरिचयः। अपि च मन्वादिस्मृतय एव आङ्गलभाषायां विपरिणमिताः सर्वेषामपि

पठनसौकर्यार्थं परिकल्पिताः । आङ्गला अपि ता अधीत्य मन्वादिस्मृतिचोदिता नीतीरधिगत्य तदनुसारेणैव न्यायस्थलेषु विवादनिर्णयमारचयन्ति ॥

द्वितीयः— अहो! कीदृशमिदं दौर्भाग्यं संस्कृतभाषायाः; यत् मन्वादिस्मृतीर्हौण्या विपरिणमय्य ता अधीत्य न्यायस्थलेषु न्यायनिर्णयः, न पुनः साक्षात् ता एव स्मृतीरधीत्य तत्त्वार्थपरिज्ञानेन निर्णय इति ॥

प्रथमः— सखे! साक्षान्मन्वादिस्मृतीनां पठनं खलु संस्कृतभाषानभिज्ञानां दुष्करम् । संस्कृतभाषाभिज्ञैरेव न्यायाधिकारिभिर्भाव्यमिति च देशान्तरेषु सस्कृतभाषाया प्रचाराभावात् न सर्वदेशसाधारणो नियमः । अतः तासा स्मृतीनां हौण्यां विपरिणाम एव सर्वजनसाधारणः साधीयानुपायः । अपि च राजभाषा हि सर्वतो बलीयसीति सर्वाभ्युपगतो विषय. ॥

द्वितीयः— तर्हि मध्यकाले महंमदीया अपि कंचित्कालं राज्यं पर्यपालयन्निति शृणुम. । तदा तैः परिकल्पिता नीतयोऽपि हौण्या विपरिणमिता इति तर्कयामि ॥

प्रथमः— तथैव । तेषां नीतयोऽपि हौण्यां विपरिणमिताः सन्ति । ता अधीत्य तादृशव्यवहारेषु तद्रीत्यैव निर्णयः परिकल्प्यते ।

द्वितीयः— सर्वमपि सम्यगेव । यदि वर्णधर्माचारविषयेऽपि किंचिदिव राजकीयैः श्रद्धा दीयेत तदा निश्प्रचमिदमेव राज्यतन्त्रं सर्वोत्कृष्ट भवेत् ॥

प्रथमः— सखे! आङ्गलेभ्यः पूर्वं राज्याधिकारे अधिष्ठिता. सर्वानपि वर्णान् निर्बन्धेन स्वजातौ प्रवेशयामासु· । यदि कश्चित्

तेषां जातिं न प्रविशेत् तर्हि सद्यो वध एव तस्य दण्डः परिकल्पित । अद्यत्वे पुन. राजान· नैतादृश निर्बन्धं कुर्वन्ति । यस्य या जातिरभिलषिता स तस्यां जातौ तिष्ठतु इत्यनुमतिरेव महान् प्रसादोऽस्माकम् ॥

द्वितीयः—— सखे! कुत इदमुच्यते ? । अद्यत्वेऽपि क्रिस्तुजातीयाः प्रतिदेशं प्रतिग्रामं च स्वीयं मतमेव श्रेष्ठतयोपवर्णयन्तः सर्वानपि स्वीयायां जातौ प्रवेशयन्ति । अनेन च ब्राह्मणा अपि स्वां जातिं विमुच्य क्रिस्तुजातिमेवाभिनिविशन्ते । राजकीयाश्च एतादृशं तै क्रियमाणं निर्बन्धमङ्गीकुर्वन्ति, न पुनर्निवारयन्ति ॥

प्रथमः—— अहो ! न तत्र निर्बन्धः । क्रिस्तुजातीया हि स्वेषां मतमेवोत्कृष्टमिति बहुभिर्वाक्प्रपञ्चैरस्माकं मनासि प्रतारयन्ति । तेन च प्रतारिता आस्माकीना एव तदेव मतं सर्वाभ्यर्हणीय मन्यमानाः स्वान् स्वकीयांश्च तदनुसारिण. सुहृद. तस्मिन् मते प्रवेशयन्ति। न पुनस्तेषां निर्बन्धेन तत्र प्रविशन्ति । अतश्चास्माकीना एव तत्रापराध्यन्ति ॥

द्वितीयः — एवमेव यद्यास्माकीना अपि वेदान्ततत्त्वविदः तत्र तत्रोपन्यासान् विरचय्य अन्यमतस्थानपि अस्मन्मतं प्रवेशयेयुः तदा सुविहितं सुप्रतिष्ठितं चास्मन्मतं भवेत् ॥

प्रथमः—— सत्य तथैव । यदि वर्णाचारधर्मा अविहता भवेयुः तदा परैर्महतापि प्रयत्नेनास्मन्मतमविचालनीयं भवेत् । ते च धर्मा अद्यत्वे द्विषन्त इवास्माकीनेभ्य. सुदूरं पलायिता नास्तिक्यमेव परं दुहन्ति । एवमेव यदीतः कंचित्कालमवतिष्ठेत तर्हि नूनं वर्णभेद एव न स्यात्, नैव वा अस्मन्मतमवतिष्ठेत ॥

द्वितीय.— हन्त! गतास्ते शंकररामानुजादयो महनीयमहिमान आचार्या.; ये हि बौद्धचार्वाकभूयिष्ठमिमं लोकमज्ञानसंतमसदिङ्मूढं तत्त्वोपन्यासैः न्याय्ये पथि प्रावर्तयन् । अद्यत्वे पुनः सर्वेपि लोका मत्सरग्रस्ताः न लोकोपकारमाद्रियन्ते ॥

——*——

# पण्डितपरिषत् ॥

प्रथमः— अहो! किमिति पण्डितंमन्योपि भवान् न काञ्चीपुरं प्रस्थास्यते? ॥

द्वितीयः— को वा विशेषः साम्प्रतं काञ्चीपुर्याम्? । किमद्य तत्र ब्रह्मोत्सवः प्रचलति? ॥

प्रथमः— अहो! किमेवं कूपमण्डूक इव पृच्छसि । काञ्चीनगरे हि काचन पण्डितपरिषत् भाविनि फाल्गुने मासि प्रचलिष्यतीति सर्वास्वपि देशवृत्तान्तपत्रिकासूद्घुष्यते । पण्डितानां च प्रत्येकमाह्वानपत्रिका प्रेषिता ॥

द्वितीयः— पण्डितपरिषन्मेलने को वा भवेदभिप्रायः? । मन्ये कदाचिदभिजनवंशजानां विदुषां संभावना दीयेतेति ॥

प्रथमः— सर्वत्र धनलिप्सोर्धनागम एवाभिसंधिः । विद्वांसो हि तत्र संमिलिता समुद्रयात्राप्रौढाविवाहादीन् विषयानधिकृत्य धर्मशास्त्राणां संमतिं पूर्वेषामनुष्ठानं प्रायश्चित्तप्रभेदांश्च सप्रपञ्चं विचारयिष्यन्ति ॥

(क्रमशः ।)

# विजयिनी ॥

( पूर्वतोऽनुवृत्तम् )

पित्राभिनन्दिता समादिष्टा च मुनिदारकायेश्वरसूरये च प्रणाममकरोत्। बाष्पावरुद्धकण्ठो युवमुनिस्तु आशिषमप्रयुज्यैव तन्मुखावलोकनपरोऽवतस्थे। अभिमतेन वरेण संगच्छस्वेत्याशिषं प्रयुञ्जान ईश्वरसूरिः कार्तवीर्यं रत्नाकरविजयिनीविवाहं कार्तवीर्यमहाविक्रान्तपक्षीयाणां च यावज्जीवं सख्यं ययाचे, न्यवेदयच्च तस्मै निखिलमपि भूतपूर्वं वृत्तान्तम्। राजापि याचनयानया तुष्टः सत्वरमस्याः सम्पादनायाज्ञापयामास। कार्तवीर्योऽप्यभिलषितपूर्त्या प्रमुदितान्तःकरणोऽविलम्बितमेवेदमनुमेने ॥

'अलं विवासनं दण्डितस्य रत्नाकरस्यान्वेषणायासेन' इति वदन्नीश्वरसूरिर्युवमुनिं वेषपरिवर्तनायाज्ञापयामास। स्वीकृतप्रथमवेषो रत्नाकरः परिवेषनिर्मुक्तो हिमदीधितिरिव प्रतिपन्नपूर्वतेजाः सर्वेषां नयनगोचरतामगात्। राज्ञाज्ञप्तेन परिचारकेण निवेदिताखिलवृत्तान्त आहूतश्च महाविक्रान्तः सह परिवारेण तत्रागमत्, पुत्रमवलोक्य च सस्नेहनिर्भरं परिषस्वजे ॥

तदा किमिति रत्नाकरेण युवमुनिवेषः स्वीकृतः, कथमनेन ज्ञाता विगतजीविता विजयिनी, कथं चाविलम्बितमेव समधिगतोपायसिद्धिरिति भूपतिरीश्वरसूरिणमप्राक्षीत्। सोऽपि सर्वं वृत्तान्तं रत्नाकरविजयिन्योर्विवाहादिकं सर्वेभ्यः कथयामास, अवोचच्च सर्वमपीदं कार्तवीर्यमहाविक्रान्तकलहनाशबद्धादरस्येश्वरसूरिसूत्रधारस्य नाटितमिति ॥

यथाविधि निरवृतत्पाणिपीडनमहोत्सवः। निखिलापि वारणावती नष्टमानन्दं सौभाग्यं च पुनः प्रपेदे। दीर्घं कालं कथामिमामुपलक्षीकृत्य विरचितम्—

('विहरति हरिरिह' इत्यस्य रीत्या गीयते)

'भवतु जगदिदं कलहविनाशैर्मोदभरितमतिनिर्गतदुःखम्।
ईश्वरसूरिविहितविजयिनीपरिणयफलभाग्रत्नाकर इव ॥ भवतु ॥'

इति पद्यं मधुकर इव गुञ्जन् वारणावतीस्थो जनः, रत्नाकरगृहीतामात्यद्वयकार्यधुराप्रदत्तप्रमोदोपबृंहितो भवानीजानिचरणपरिपूतमानसः सुखमध्युवास। रत्नाकरोऽपीदृशीभिः प्रजाभिरतीव प्रीतो विजयिनीपरिनिवेशितभावः सुखेन कालमयापयत्॥

वयमपि सह सहृदयावाचकवर्गेण पुनः प्रवेशाय जवनिकान्तरं प्रविशामः॥

पाश्चात्यकालिदासस्य कृतयश्चित्तहारिकाः।
तेभ्यो बिन्दुं समादाय रचिताख्यायिका मया ॥ १ ॥

अणुरपि मलयजजातः प्रभवति संतर्पणाय भुवनस्य।
बिन्दुरयं प्रभविष्यति गैर्वाणिरसिकचित्तहरणाय ॥ २ ॥

द्वीपान्तरप्रभवमेतदुदारशोभं
गीर्वाणवाग्विभवबद्धमतीव चारु।
रत्नं सदस्यपरितोषकृते कृतं त-
ज्जीयाच्चिराय जगतीति मनीषितं नः ॥ ३ ॥

विद्याविवेकजनिभूद्वैद्यकुलोत्पन्नपरशुधररचिता।
आख्यायिका विजयिनीसंज्ञा प्रज्ञावतां मुदे भूयात्॥

**इति तुरीय आश्वासः॥**

**समाप्ता चेयं विजयिनीसंज्ञाख्यायिका॥**

———*———

## शाकुन्तलसंविधानरामणीयकम् ॥

( पूर्ततोऽनुवृत्तम् )

इत्यादिकं श्लोकान्तरमरचयत् । एवमन्येऽपि केचित् नान्दीबाहुल्यविधानेन पदपरिच्छेदक्लेशमप्यननुभवन्तः नियमपक्षमप्यपरित्यजन्तः प्रवृत्ताः। कालिदासस्तु कविबृन्दारकः कवितास्वैरगतिशृङ्खलायमानेषु मन्दप्रयोजनेषु एवंविधेषु वितथनियमेष्वनास्थामुपदर्शयन् गौणमुख्यार्थपरमुभयमपि पदपरिसंख्यानपक्षमनपेक्षमाण एव मालविकाग्निमित्रे विक्रमोर्वशीये च नान्दीं निबबन्ध । शाकुन्तले तु 'ये द्वे कालं विधत्तः' इत्येकोक्त्या सूर्याचन्द्रमसोर्ग्रहणसौकर्यसंभवात् यच्छब्दघटितैः सप्तभिरेव वाक्यैरष्टानामपि परमेश्वरमूर्तीनां पर्याप्ते परिगणने तच्छब्दघटितेनाष्टमेन वाक्येन वाक्यार्थं समापयन् पदशब्दस्य वाक्यार्थपरत्वपक्षे तस्थिवान् । न चात्रापि कथंचिदपि संख्यानिर्वहणे निर्भरं कविर्मन्यते । अत्यर्थसुकुमारगात्रीं कवितासुगात्रीं नैष कवीन्दुरलंकारयन्त्रणाभिरपि भूयिष्ठं परिक्लेष्टुमुत्सहते, का कथा पदपरिच्छेदादेरकिंचित्करस्य नियमराशेः । श्लोकबहुत्वेन वितथविस्तरं कर्तुं च मितभाषी कविरेष नाभिलषति । अथवा कालिदासापरिग्रहमेवास्य पक्षस्य दूषणमिवाकलयद्भिरर्वाचीनैरपि निबन्धकारैः शाकुन्तलदर्शनेन पदशब्दस्य वाक्यार्थलक्षणा व्याकृता स्यादित्यपि शक्यमभ्यूहितुमिति कृतं प्रसक्तानुप्रसक्तेन ॥

इदमस्त्यत्रावधेयम्; यदुत— कलाविशेषपरिशीलनकृतलक्षणेन च कवीन्दुना शाकुन्तलनान्द्यां नटपरिषदुपदेशो निधिरिव कश्चिदवधानदृश्यो निगूढनिहितः प्रतीयते । तथा हि ईशपदमत्र

निखिलनाट्यावयवनेतारं सूत्रधारमभिप्रैति । सूत्रं हि धारयन् सूत्रधार इति व्यपदिश्यते । कृत्स्ननटवर्गप्रणयनालंकर्मीण शासनमिह सूत्रम् । सूत्रशब्दस्य हि द्वयी निष्पत्तिः — 'सूत्र ग्रथने' इति धातुनिष्पन्नः सूत्रशब्दः शास्त्रमाचष्टे । 'सूत्र वेष्टन इत्येके' इति पक्षे 'षिवु तन्तुसंताने' इति धातो. 'सिविमुच्योष्टेरू च' इत्यौणादिके ष्ट्रन्प्रत्यये टेरूत्वे च सूत्रमिति रूपं संभवति । त्रिष्वपि पक्षेषु विशकलितवृत्तयोऽपि मणिप्रभृतयो यथैकग्रथनाग्रथिता हारादिरूपेणैकामर्थक्रियां कुर्वन्ति, तथा विभिन्नप्रभृतयोऽपि बहवः शैलूषा यदनुशासनात् स्यूता नाट्यरूपैकार्थनिर्वाहक्षमा भवन्ति, स हि सूत्रकल्पशासनधारणात् सूत्रधार इति व्यपदिश्यते । अतिमात्रविविक्तस्थितिभिरेव ह्यक्षकीलकफलकशलाकादिभिरेकसूत्रघटनाक्षघटितैर्नौकारथादयः स्वं स्वमर्थं साधयन्ति । मुद्राराक्षसे च यन्त्रनिर्माता दारुवर्मा नाम प्रधानशिल्पी सूत्रधार इत्युच्यते। तदिहानेकपात्रक्रियाकलापरूपमपि स्वनिदेशविश्रान्तमभिन्नक्रियमिव प्रेक्षणिकं प्रेक्षावतामुपहरन्नन्वर्थनामा सूत्रधार. । अत्रैव चोपरिष्टात् प्रस्तावनायां 'प्रतिपात्रमाधीयता यत्नः' इति समानयोगक्षेमां नटीं प्रति सूत्रधारोक्तिरमुमेवार्थं विशदयति । तत्र हि 'सुविहिदप्पओअदाए अज्जस्स ण किंवि परिहीअदि' इति वदन्त्यां नट्याम् 'आर्ये कथयामि ते भूतार्थम्—आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥' इति प्रतिब्रुवन् सूत्रधारः यावत्फलावाप्ति न कृतकृत्यत्वविस्रंभ उपाये श्रेयान् महान्तमर्थं सिषाधयिषतः । दर्शयितव्यस्तु नियताध्यवसायः परेषु, अन्यथा हि तेषामाभिमुख्यं हीयेत । त्वयि त्वभिन्नहृदयायां न

गोपनीयं तत्त्वमितीदमुच्यत इति ह्यभिप्रयन् यत्नस्यावर्जनीयतां दर्शयति । तस्मादस्या नान्द्यामीशशब्देन सूत्रधारः सूच्यते । अष्टाभिस्तनुभिरित्यनेन च बहूनामपि पात्राणा सूत्रभृतः शरीरनिर्विशेषत्वमवगम्यते । ततश्च निर्विशेषावधानविषयत्वं प्रतीयते यथैव योगिन कायव्यूहेषु । प्रत्यक्षाभिरित्यनेन पात्राणां वेषभाषाचेष्टादिकं सर्वमसकृत् स्वयं प्रत्यक्षीकृत्य संस्कर्तव्यमिति दर्शितम् । 'या सृष्टिः स्रष्टुराद्या' इत्यनेन च भुवनसर्गवदकुण्ठप्रतिभोन्मेषादनायासरचितविचित्रशब्दार्थबन्धबन्धुरं महाकवे. काव्यमेवोपादेयम्, पाठ्यगुणानुबन्धी ननु भावुकभावविकास इति सूच्यते । उक्तं हि काव्यस्य सृष्टिरूपत्वं काव्यप्रकाशे-- 'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् । नवरसभरिता निर्मितिमादधती भारती कवेर्जयति' इति । हर्षचरिते च—'सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे। उत्पादका न बहवः कवयः शरभा इव' इत्युक्तम् । 'वहति विधिहुतं या हवि.' इति परिषद्गुणं शास्ति—अभिरूपसमितिरेव हि यथाशास्त्रप्रणीतस्य प्रयोगस्य सारमादत्त इति । हविर्वहतीति च वचनव्यक्तिरग्निसाम्यं गमयति । ततश्च यथा अग्निरात्मना च हुतमादत्ते, देवभागं च नयति; लोकं सुवृष्ट्या पूरयति, यजमानमपि पुनाति, तथा परीक्षकसमाजः स्वयमास्वादयन् परोक्षवर्तिनामपि प्रेक्षकाणां दिदृक्षामुपजनयन् परप्रत्ययनेयबुद्धीनामपि रसास्वादमादधत् कुशीलवबृन्दस्यापि यशः प्रथयतीति व्यक्तं भवति । 'या च होत्री' इत्यनेन तथाविधे सदसि मूर्तद्रव्यप्रक्षेपवत् सुव्यक्तमभिनयेन रसमयस्य नाट्यवस्तुनः सेचनं नटसमितिकार्यमुपदिश्यते । तदेवं गुणवतः प्रबन्धस्य गुणवति समाजे गुणवता कुशी-

लवकुलेन क्रियमाणे प्रयोगे रसपरतन्त्रचेतसां महानप्यतिपतन् कालो नोपलक्ष्यते । अन्यतमेप्येतेषां सति विगुणे कामिनीविरहिण इव तनुरपि कालो दीर्घीभवन् न कथंचिदप्यतिक्रामति । तदिदमीदृशं गुणानां साकल्यमसाकल्यं च मनसिकृत्योक्तम् 'ये द्वे कालं विधत्तः' इति । 'श्रुतिविषयगुणा' इति च रमोचितरागानुषङ्गादिरूपवाचिकाभिनयप्रकर्षमभिप्रैति । ततश्च 'शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी' इति न्यायेन परीक्षकलौकिकसाधारण्येन सर्वरञ्जनात् 'या स्थिता व्याप्य विश्वम्' इति सूपपन्नम् ॥

(क्रमशः)

## आर्यभाषाचरितम् ॥

( पूर्वतोऽनुवृत्तम् । )

स्वाम्यभावे सारमेयैरभिरक्षितानि च । इतरहिन्दूयूरोप्जातिष्वस्थिरनिवासं तैरध्युषितभूमौ अभिमानबन्धशैथिल्यं च यदि सम्यग्विमृश्येत तर्हि शकटानां गृहत्वेनोपयोगः प्राक्तनकाले औत्तराहकृतजीवनस्य लक्षण संगृहीतमिति निःशङ्कमुच्येत । आदिमभाषायां शकटनिर्माणस्य विपुलायां परिभाषायामुपलब्धायां न चित्रीयेमहि । सर्वासु हिन्दूयूरोपियन्भाषासु वेगनेशब्दनिष्पादकः वहधातुप्रतिरूपः वेगिति धातुरुपयुज्यते । वाहनवाचिनां शब्दानां सकलभाषासु संवादो दृश्यते । यथा— संस्कृत— वाहन.

प्राचीनशर्मण्यभाषा—वोगुन्
सेग्जन्—वोजु
विधूनियन्—वेजिमस् इति,

तथा शकटावयववाचिपदेष्वपि परस्परसादृश्यं दृश्यते ।

यथा—

| संस्कृत. | वेटिन्. | विधूनियन्. | जर्मन्. | ऐरिष्. | पारसीक्. |
|---|---|---|---|---|---|
| रथ. | रोठ. | राटास्. | राड्. | रात्. | |
| अक्ष. | याग्जिस्. | यास्जिस्. | अहासा. | | |
| नाभि. | .... | ... | नाभा. | | नाभिस्. |
| आणिः | लिनेस्. | ल्यूनिसा. | | | |
| युग. | इयुगं. | इगो. | जुङ्गस्. | | |

एतच्छब्दसंघाते अरस्य सदृशवाचकशब्दो नास्ति ॥

अरपर्यायशब्दादर्शनेन प्राक्कालिकरथचक्रस्यारा नासन्नित्यनुमीयते । पुरा एकं बृहद्दारुखण्डमादाय तेनैव चक्रद्वयमक्षं चाच्छिन्नं निर्मातुं ते जज्ञुः । चिरकालानन्तर संघविच्छेदात्पूर्वमक्षं पृथङ्निर्माय तच्चक्रबिलमध्ये निवेश्य कीलकेन पिनद्धु बुद्ध्युत्कर्षं लेभिरे । इयं रथाकृतिः प्राचीनरोमकरथाकृत्या संवदति । तद्रथोऽप्यरशून्यः । साक्षं चक्रद्वयमखण्डदारुणैव निर्मितम् , अयःपरिवेष्टितप्रान्तं चासीत् । चक्राभ्यामक्षमप्यावर्तते । मार्कस् ऑरिलियसूनामकस्य जयस्तम्भे चित्रित. पशुभिरूढः स्यूटनिग्जातिरथोऽपि एतादृश एव । चिरात्प्रभृति हिन्दूयूरोप्प्रजानां रथनिर्माणकला एतत्प्रजासंघस्य विशिष्टलक्षणतया प्रतिभाति । आसियामरुधन्ववासिनः क्षमासारेणोष्ट्रेणैव दारान् पुत्रान् दूष्यादिपरिबर्हं च वाहयितुमभ्यस्ताः । हिन्दूयूरोपियन्प्रजास्तु जाङ्गलोदधिनौभूतस्य दासेरकस्योपयोगमजानाना रथविधाने बुद्धिं व्यापारयामासुः । हिन्दूयूरोपियन्प्रजा निषादा इव सदा पर्यटनेनैव स्वपुरुषायुषमक्षपयन्नि-

त्यवगमेऽपि यदा कृषिश्रद्धाबद्धमानसाः स्थिरनिवासमङ्गीचक्रुस्तदा कीदृशाकारमगारं निर्मिमिरे इत्यंश इदानीमस्मद्विचारणामर्हति ॥

अत्र च प्रथमं तावद्भूम्यन्तर्गतानां गृहाणां (Subterranean dwellings) प्रस्तावनामवतरिष्यामः । तादृग्गृहाणामस्तित्वं बह्वीषु हिन्दूशर्मण्यप्रजासु पुष्कलतया विद्यमानेन लेख्यप्रमाणेनोपलभ्यते । ते शीतवातातपादिजनितबाधां निवारयितुमलंकर्मीणा आसन् । तादृगालया अद्यापि छन्दोऽवस्थाने (Zend Avesta) ख्यातशब्देन व्यपदिश्यन्ते । आधुनिकपारसीकभाषायां व्यवह्रियमाणैर्गृहसामान्यवाचिभिः खडादिशब्दैः अस्मात् खातशब्दादेवोत्पन्नैर्भवितव्यम् । पामरप्राकृतभाषासु (dialects) केड् खेड् इत्यादिशब्दा लक्ष्यन्ते । आर्मिनियन् फ्रिजियन् जातीनामपि भूम्यन्तर्गृहाण्यासन्निति प्राचीनग्रन्थप्रामाण्येन ज्ञायते । तेषां द्वाराणि कूपमुखतुल्यानि अधोऽधः पृथुतरीभवन्ति । अधःप्रदेशं नीतानां गोमहिषादिजन्तूनां बन्धनार्थं पार्श्वतो दण्डा निखाता भवेयुः । एतादृशभूम्यन्तर्गृहाणां प्राचीनट्यूटानिक् नाम टङ्किरित्युच्यते । अद्यापि टङ्कित्येकस्मिन् प्रदेशे डङ्गित्यपरस्मिन् प्रदेशे व्यवह्रियते । डङ्गितिशब्देन भूम्यन्तर्गृहा अभिधीयन्ते । हिन्दूयूरोपियन्जातेः अन्तर्भूमिगृहविषये एतावनधिगतो वृत्तान्तः ।·तस्मिन् काले गृहकुटीरादिनिर्माणचातुरी पदं निधातुमारेभे इति निःसंशयं वक्तुमायात्यधोलिखितसौसादृश्यपर्यालोचनया ; यथा—

| | | | |
|---|---|---|---|
| संस्कृतम् | धाम | शाला | आतुः |
| आर्मिनियन् | टन् | डर्न् | |
| वेटिन् | डोमस् | | अण्टे |

(क्रमशः ।)

हृदयः पश्यन्नपि विपदमन्येषां नावधारयति तामात्मनो भाविनीम् । किं चाकलयन्नाशरीरपातमविनाशमर्थानामात्मनो ब्रह्मप्रलयं यतते ऽर्थेभ्यः; कथमन्यथा आसीत निर्भरमविचारयन्नौपयिकीं व्यक्तिमात्मनो देही प्रवर्तेत प्राकृतेभ्योऽर्थेभ्यः । किं चानर्थकायुर्ह्रासैकफलैः परिस्पन्दनैर्दिनकृतो वञ्चिता अजानानाः श्रेयो नन्दन्ति दिनरजनीभ्याम् । सर्वथा स एवाभिजातजन्मा, येन नोपनीयते व्यर्थता क्षणार्धमपि विना कीर्तनं भगवतः पुण्यश्लोकस्य, यस्य च चिन्तनीयस्तन्महिमा, श्रोतव्यं च तच्चरितम्, कीर्तनीयास्तद्गुणाः । किंच निमेषार्धमपि तदेव जन्म, यत्र च ध्यायते हरिः । स एव च क्षणो गणनीयः पुरुषायुषे, कीर्त्यते यस्मिन् भगवानरविन्दलोचनः । अपि च, अतिक्रान्तायामपि कलायां तादृश्यां युक्तरूपमाक्रन्दितुमब्रह्मण्यं लुण्ठितसकलधनस्येव लुण्टाकैर्मनुजस्य, या खल्वपनीयते विना कीर्तनं भगवतो हरेः । प्रायेणातिक्रान्तविधिनिषेधा निरस्तत्रैगुण्या अपि शुद्धसत्त्वमया मुनयोऽपि रमन्ते कथाभिरेव भगवतः । अहं त्वपास्य त्रैगुण्यमयं भावं परिनिष्ठितोऽपि ब्रह्मणि परमे सकलजगत्कलुषहरणनिपुणाभिर्लीलाभिरेव भगवतो वशीकृतहृदयोऽधीतवानस्मि भागवतीरिमाः कथाः पितुर्मम भगवतो द्वैपायनात् । त्वमप्युपारूढभक्तिर्भगवति वासुदेवे पात्रभूतोऽस्युपदेशानाम् । महदिदमपवर्गनिदानं योगिनामपि यन्नामानुकीर्तनं विष्णोः । अहो! अगणितपरमार्थैर्विहीनविषयासङ्गलुब्धैः मानुषैरविज्ञातनिमेषकलाकाष्ठाक्रमापक्रमणो नीयते गूढमेव वर्षगणः । विदितं हि तत्त्वं हरेर्विनाशयत्यतिचिरसंभृतमपि दुरितराशिम् । आचक्षते हि पुराणविदः— पुरा खलु प्रवृत्ते भुवनभयंकरणे रणे सुरासुराणां देवार्थे विक्रान्तेनोदग्रप्रतापेन राज्ञा

खट्वाङ्गेन निरस्तेषु दानववीरेषु परितुष्टैस्त्रिविष्टपालयैरभिच्छन्दितो वरेणापृच्छदात्मनो जीविताबधिमेव । ततो मुहूर्तमात्र एव निर्दिष्टे तैरायुषि विज्ञायात्मनस्तनुविनाशमागत्य क्षणादेव कामगेन विमानेन स्वभवनं विमुच्य सर्वमपि संगं निर्मूल्य विषयस्पृहामाबध्य निश्चलां भक्तिं वासुदेवे न्यस्तात्मा तेनैव मुहूर्तेनागच्छदकुतोभयं पदं हरेः —इति । तव तु सप्तकावधिरेव कालो जीवितस्य । एतावतैवोपकल्पय सर्वमपि तदामुष्मिक श्रेयस्करणम् । मोपधारय शुच विचिन्त्येमामकाण्डोपनतां विपदम् । स हि नास्ति जन्तुर्नश्वरेऽस्मिन् जगति, योऽकलितापायमेव जीवेच्छाश्वतीः समा । अथ जीवतोऽपि चिरं सुदुर्लभमेव सुखम । तद्धि बहुरूपमवस्थानुगुणमेवायुषो विहितं विधात्रा लोकानाम् । कालेन द्राघीयसा गुणवत्स्वपि तेषु प्राकृतेषु जनयति भूयान् परिचयोऽवज्ञाम् । अर्थविशेषतर्ष एव विषयासंगहेतु पुरुषाणाम् । स एवोत्सन्नमूलो नश्यत्यभिवृद्ध्या वयसां ज्ञानस्य च । जानीमस्तदेव कारणं निर्वेदस्य, नापाटवमिन्द्रियाणां न वैकारिकमसौष्ठवं विषयाणाम् । नियतमभिनववयसामननुभूतविषयाणामेव मदयति हृदयानि रमणीयता वस्तुगुणरूपाणाम् । अपि च स एवायं देही त एव विषयाः तान्येव च सुखानि, योऽन्वभवत् ये चानुभूताः यान्युपलब्धानि । हन्त! एवंभूतेऽस्मिन् विषयग्रामे प्रार्थयमाना उत्तरोत्तरान्मनोहरान् ज्यायसो विषयान् धावन्तः सुदूरमपि न गणयन्त्यल्पीयसोऽपि क्षयमायुषः ॥

अथ यदि कश्चिज्जीवन् दीर्घमवजिगमिषुरन्तं विषयाणां जिगमिषति दूरं परिवर्तिनि कालचक्रेऽस्मिन् निर्भरतरङ्गिणीपरीवाहावर्ते इव काष्ठखण्डः भ्रममाणोऽशक्नुवन् पुरो गन्तुं पश्यति दृष्टमेव

शृणोति श्रुतं करोति कृतं सर्वमपि तदेवानुभवति यद्यदनुभूतम् । अपि च सोऽपि कदाचिदुपगच्छेदेव तां दशाम्, यस्यां चाखिलप्राणिसाधारण्यां परित्यज्यन्ते दुःखदुःखं सहैव प्राणैर्गृहा धनानि बन्धवोऽन्यदपि सर्वम् । तदेवंप्रायव्यतिकरे विषमे परिणतिविरमेऽस्मिन् संसारे विचार्य तत्त्वमवधार्य गतिं भूतानामुद्गूढभक्तिर्भगवति वासुदेवे विधूय तनुवियोगजानि दुःखदैन्यभयानि तदेवाप्नोति परमं पदम्, यत्र चानुभवन्नपूर्वान् भावान् मोदमानो न च पुनरावर्तते, तथा हि— प्रत्यासन्ने हि सकलप्राणिसाधारणे अनात्मज्ञजनहृदयाकुलीकरणनिपुणे अनतिलङ्घनीयेऽतिभीषणे तादृशि तनुवियोगे मनीषी विधूयाचिरवासनोपनतं मोहं छित्त्वा निशितया प्रज्ञासिलतया गुर्वीं विषयस्पृहामुपगम्य शुचितमं स्थानमुपकल्प्यात्मसुखौपयिकमासनं तच्छुद्धमभिगृणन् त्रिवृत् ब्रह्माक्षरमतिचपलान् वहतः शरीरमिन्द्रियाश्वान् दृढाकृष्टमनःप्रग्रहेण बुद्धिसारथिना निवर्त्य विषयेभ्यो निरुध्य श्वासमरुतः समाबध्य मनो भगवति वासुदेवे ततोऽन्यदचिन्तयमानो विप्रकीर्णमपि रजसा विरूढमपि तमसा सकलसुरनरपरिनुतं धारयमाणोऽनासादितस्थैर्यतया विच्छिन्नयाऽप्यन्तरानुसंहितया व्यवसायेन पूर्वजननशतसंभृतदुरितनिचयपरिहरणपटीयस्या धारणया पदं विष्णोः स्फुरदमलमणिमयकुण्डलाङ्गदहारकटककौस्तुभमुखविविधभूषणपरिकर्मित कनककपिशशोभाविभावित भूषण भूषणानां मङ्गलं मङ्गलानां सुन्दरं सुन्दरेभ्योऽपि मनोहरं रमणीयेभ्योऽपि निध्यायतो विग्रहं भगवत अचिरेणैव संपद्यते भक्तिलक्षणो योग इति ॥

ततः परीक्षिदप्याकर्ण्याखिलस्फुटीकरणपटुतमं शुकमुनिभा-

षितमवस्थाप्य भगवति कृष्णे हृदयं विसृज्यात्मसुतागारदारबन्धुद्रविणराज्यनिरूढां ममतां संन्यस्य त्रैवर्गिकं कर्मजातं विज्ञायात्यन्तिकं करणीयं बुद्ध्वा प्रत्यासन्नमात्मशरीरपातं हरिचरितश्रवणैकान्तानिबद्धकुतूहलः परमं जिज्ञासमानो ब्रह्मतत्त्वमुन्मस्तकया श्रद्धया समञ्चितहृदञ्चलोऽतिविततप्रेमभरनिरूढां बिभ्राणो भगवदात्मतां प्रणिपत्य योगीन्द्रं प्रत्युवाच— 'भगवन्! हरिगुणवर्णनमयेनामलतरेण सर्वज्ञस्य भवतः समुपदेशेनानेन विनिवर्तितो महानान्तरो मे तमोबन्धः। प्रेरयति महतीयं जिज्ञासा मां बलादस्मिन् प्रश्नकर्मणि। भगवन्! सर्वज्ञाद्भवतः श्रुता पूर्वमेव सृष्टिराद्या भगवतः, परिज्ञाताश्च प्रभावाः, विज्ञाताश्च प्रादुर्भावाः कल्पभेदतोऽण्डपुष्करादिषु ब्रह्मणः, आकर्णिता विविधाः सृष्टयो ब्रह्मणां कुमाराणां प्रजापतीनामृषीणां देवाना मनुष्याणा च, आवेदिता निर्मितयो वेदानाम्, अवगतानि तत्तत्फलानि भङ्गुराणि कर्मणामग्नीनां च, स्फुटीकृताश्च विभागा दिशां कालस्य तेजसां लोकानां च, मीमांसिताश्च प्रकारा आयुषां पुण्यपापानां गुणदोषाणां च। भगवता पुनर्वर्णितानि जन्मानि कर्मदेवानामसुराणा पितॄणां गन्धर्वाणामप्सरसां किंनराणाम्, व्याख्याताश्चोत्पत्तयो यक्षाणां सिद्धाना गुह्यकानां विद्याधराणाम्, निरूपिता उद्भवाः पिशाचानां रक्षसां च, वर्णिताः सर्गा मानवानामृषीणाम्, प्रकाशिताः सृष्टयो दानवानां पन्नगानां पतगानां पशूनां च, द्योतितानि निर्माणानि कीटपतङ्गमशकादीनाम्, गदिता विभागा वर्णानामाश्रमाणां च, कथिताश्च विस्तारा महर्षिगोत्राणाम्, वर्णिताः प्रसूतयो रवीन्दुसंतानयोः, किं बहुना? व्याख्यातमुदन्तजातं स्थावरजङ्गमात्मकस्य कृत्स्नस्यापि जगतोऽस्य, यादृशमभवदादौ, यथाव्यक्तम्,

यतः प्रसूतम्, यथोद्भूतम्, येन च विस्तृतम्, यादृशोस्य विनाशः, यस्मिश्च विलीयते सर्वमिदमप्रतिहतशक्तेरमेयमहिम्नोऽवबोधयति माहात्म्यं भगवतो नारायणस्य; यस्य च संकल्पादेव बहुरूपमिदमुल्ललास। अत्र खलु महान् संदेहो भवति बलादाक्रम्य हृदयं मम; यथा—कथं नु स भगवानादिदेव आवृतममरैरापूर्णं पुण्यकृद्भिरपहाय तेजोमयं पुण्यं त्रिविष्टपं देवलोक रतिमुपययौ मनुष्यलोके। किं च नेता देवमानुषरक्षसा प्रभु प्रभूणां विभुर्विभूना दिव्यो देवानामनवधिकातिशयवैभवो भगवान् किमर्थमात्मानं मानुष्येण योजयामास। यश्चावर्तयत्येक एव सदेवमानुषं चराचरात्मकं जगच्चक्रं स कथं नु मानुषैर्गुणैरबध्यत। यश्च सर्वाचिन्त्ययोगमायो धारयति जगदखिल कथं नु दधार तं गर्भेण मानुषी नारी; येन चामेयवैभवेन परेण परस्मादमृतात्मनानन्दमयेन दुःखबहुलेऽस्मिन् मानुषे लोके दर्शिताः खल्ववतारास्तिर्यग्योनिषु—इति। निवारय प्रवृद्धमिमं मे संशयम्। जानामि न त्वदन्योऽलमिमामपाकर्तुं शङ्काम्, न वा वर्णयितुं गुणान् हरेः' इति॥

अथ योगीन्द्रोऽप्याकर्ण्य पारीक्षितीं भारतीं चमत्कृतहृदय इव प्रत्युवाच—'महानयमारोपितो मयि प्रश्नभरः। सकलमप्येतद्वर्णयामि यथाप्रज्ञं यावद्विदितं सकाशाद्गुरोर्द्वैपायनस्य। अहो परिणतेयमखिलजगदभिनन्दनीया ते भागवती भक्तिः, यया बलवदाबद्धकौतूहलं हरिकथाश्रवणे ते हृदयम्। विष्णुरात! सत्य परिग्रहोऽसि भगवतः कृष्णस्य, यत्प्रकृतिनिरूढैव ते भक्तिर्भगवति वासुदेवे। जानामि कृष्णस्यैव बाल्यानुषक्ताभिर्लीलाभिः शैशवमत्यवाहय इति। सर्वथाभिजातजन्मा त्वमेव प्रियतमोसि हरे, येनैवमनुरक्तमाजानश

वनं ते मनो गुणेषु भगवतः । कथमन्यथा सुदुर्लभामपि योगिनामात्मनो मूर्तिं गर्भशयाय तुभ्यं जरायुभावेऽपि दर्शयेत्, गृहीतप्रहरणो वा तादृशमभिपालयेदपायात् । तच्छृणु समाहितमतिः । पुरा खलु महति सागराम्भसि स्वतो भगवतो नाभिपुष्करात्समभूद्भगवान् परमेष्ठी । तस्माच्च देवा ऋषयोऽसुराः पिशाचा मनुष्या पशव पक्षिण उरगा अन्यान्यपि च भूतानि प्रादुरभवन् । स एष पौष्करिको नाम कल्प, सोऽयं श्रूयते श्रुतिषु वर्ण्यते पुराणेषु, (यत्र च भगवान् विष्णुरास्थाय सुमहद्वाराहं रूपमुद्धारापाराकूपारनीरपूरनिमग्नां विश्वभराम्, यस्य च यज्ञमयस्य वेदा पादा बभूवुः, क्रतवो दन्ता अभवन्, अग्निर्जिह्वासीत्, बर्हींषि रोमाण्युदपद्यन्त, ब्रह्मा, शीर्षमभवत्, बभूवतुर्दिनरजन्यौ नयने, वेदाङ्गानि भूषणतामावहन्त, आज्यं हि समजनि घोणा, श्रुतिरौदुम्बरी बभूव, सामानि घुर्घुरा आसन्, सत्यधर्मौ पार्श्वावभूताम्, कर्माणि विक्रमतां पेदिरे, प्रायश्चित्तानि खुराण्यासन्, पशवो जानूनि, प्राग्वंशो गोत्रम्, दक्षिणा हृदयमभवत् । अपि च मन्त्राः शस्त्राणि स्रुचो यज्ञायुधानि चमसाः कुम्भ्यः कलशा गृहाः ग्रावाणो हवींषि चरव प्रवर्ग्यः सवनानीष्टयो दीक्षा ऋत्विजो वषट्कारा उपरवा. अन्यान्यप्यन्यानि सर्वाणि यज्ञीयान्यङ्गान्येव समभवन्)) तेन चैवंविधेन रूपेण समुद्धृत्य लोकहिताय पृथिवीं स्वस्थान एव निवेशयामास । स्पृष्टा च सा तथाविधेन भगवता परमं निर्वाणमविन्दत । आचक्षते चेममेव पुराणविदो वाराहं कल्पम् । पुरा किल मानसौ तनयौ ब्रह्मणः सनकः सनन्दनश्च पर्यटन्तौ यदृच्छया लोकानां दिदृक्षया भगवतः सांतानिकं भुवनमुपजग्मतु । तत्र प्रविशान्तावेव

द्विव्यालयद्वारं प्रतिहाररक्षिभ्या जयविजयाभ्यां प्रतिरुद्धौ क्रुद्धावशपताम्-- आ, यदावां स्वच्छन्दचारिणौ निषिद्धौ दिव्यालयद्वारि भगवतो युवाभ्यां क्रूरया वृत्त्या. तेनैवामुनापचारेण क्रूरतमौ दैत्यौ भवताम्--इति। ततस्ताभ्यां प्रणिपातप्रसन्नाभ्या लब्ध्वा जन्मत्रयावधिक शाप निग्रहमपि भगवतात्मनोपराधस्य प्रथम काश्यपाददितेरभूता हिरण्याक्षो हिरण्यकशिपुरिति। तस्मिंश्च कृतयुगे स आदिमो दैत्यानामस्खलिताभ्यां शमदमाभ्यां नियतेन ब्रह्मचर्येण शतसहस्राणि वर्षाणि तीव्रं तपश्चचार। तेन तस्य तपसा प्रीत. स्तूयमानः सिद्धै सप्तर्षिभिश्च ब्रह्मा स्वयमुपगम्यावोचत्-- 'वत्स! बलवदभितुष्टोऽस्मि तवानेन तपसा। वरय मत्तो वरानीप्सितान्' इति। ततः पूर्णमनोरथो वचनेनैव ब्रह्मणो व्यजिज्ञपत्— 'भगवन् यदि प्रसन्नो मे पितामहः, भवेयमवध्यो देवासुररक्षोगणैरजय्यो गन्धर्वविद्याधरसिद्धयक्षोनिवहैः अबाध्यो मानुषैरवध्यो मृगैरनाश्यश्च शापेन तपस्विनाम्, अपि चावध्योऽस्त्रशस्त्रैः। किं चाहमेक एवोद्वहेयमखिलाशाधिपत्यम्। कि चाहमेक एवोद्भासयेयमर्कः सोमो हुतवहश्चेति'— इति। ब्रह्मापि 'वत्स!. सर्वमपीदं भविष्यति ते। असंशयं प्राप्स्यस्यभिलषितान्सर्वानपीमान वरान्—' इत्युदीर्य तत्रैवान्तरधात्। तन श्रुत्वा तमिममुदन्तं सर्वेऽपि ते देवाः पितामहमुपगम्याब्रुवन्— भगवन्! उग्रपराक्रम प्रकृत्यैव स दितिजो दत्तवरश्च भगवता दुर्जय आकुलयेल्लोकान्, च्यावयेच्चाचिरेणैव नस्त्रिविष्टपात्। तत्प्रसीद विचिन्त्यतामस्य वधः' इति। तत. पद्मभूरपि मुहुर्मुहुः प्रसादित सुरैः प्रत्यवादीत्— 'काश्यपाः! विदितं हि वस्तप एव कारणं महिम्नाम्। नानवाप्यमस्ति सुतप्ततपसो

जगति । तपसैवालभन्त पुण्यकृतः स्वर्गं लोकम् । तपःकृत हि वो देवत्वम् । किं बहुना ? अहमपि तपसैव सृजामि भुवनम् । हरति हरोऽपि तपसैव । तथैवाचिरसभृतस्य महतस्तपोराशेरनुभाव्यं हि फलं तेनापि । तस्य चान्ते विष्णुरेव भगवान् निहत्य तं विधास्यति वो योगक्षेमौ । तमःप्रकृतयो हि दैतेया न चिरं धारयेयुः कृच्छ्रलब्धमपि सौभाग्यम् । सर्वथा अचिरेणैव पूरयिष्यति वो मनोरथान् भगवान् हरिरेव' इति । आकर्ण्य तद्ब्रह्मणो वचनं स्वं स्वं धामोपगतेषु त्रिदशेषु, हिरण्यकशिपुरपि दर्पोद्धत. परित्यज्य तान् सर्वानपि दिविषदो बलादाच्छिद्य भागमेव यज्ञेषु यज्ञियानां देवानामसुरानेव नियोजयामास । किं च त्रैलोक्यमपि कृत्वा स्ववशे पालयामास स्वाराज्यम् । एवं सरसिजासनवरदानपरिमत्तेन सुररिपुणा निरस्ताः स्वपदेभ्यः समस्ता एव ते शरणमुपजग्मुः शरण्यं नारायणमेव । अस्तुवश्च विविधाभिः स्तुतिभिः । ततः प्रसन्नो भगवान् वितीर्याभयं देवेभ्यः आविर्भूतः स्तम्भात् बिभ्राणो वपुषोऽर्धेन सैंहं रूपमर्धेन च मानुषमाकृष्यैकेन पाणिना तादृशमत्युद्धतं दितितनयं हेलयैव पशुघातं जघान । हिरण्यकशिपो प्रह्लादः अनुह्लाद· सह्लादः आह्लाद इति चत्वारस्तनया आसन् । प्रह्लादस्य विरोचनो नाम सूनुरासीत् । तस्माच्चाखिलनिशाचरकुलग्रामणीर्बलवानप्रतिहतशासनोऽवधीरितसुरेशवैभवो यज्वा दानपरो विख्यातकीर्तिर्बली नाम तनयो बभूव । तथैव तद्विक्रमविलुप्तैश्वर्यैर्देवै· संप्रार्थितो भगवान् तस्यैव महति यज्ञे काश्यपाददित्यां वामनो भूत्वायाचत पादत्रयपरिमितां मेदिनीम् । तदानीं च निषिद्धोऽप्यसुरैर्वार्यमाणोऽप्यमात्यैर्बोधितोऽप्युशनसा गुरुणा जानन्नपि सकलासुरकुलविनाशसमु-

षोमीयादिप्रधानान्तरसाहित्यम् । तस्य प्रकृतावङ्गत्वेऽपि परप्रयुक्ताग्नीषोमीयादिप्रतियोगिकत्वात् तदभावे विकृतौ नातिदेशसंभव इति ॥

एवमिष्टिषु दर्शपूर्णमासविकारत्वमुक्तम् । तत्रापि सौर्यादिषु औषधद्रव्यकत्वविशिष्टैकदेवताकत्वरूपविशेषसादृश्यात् आग्नेयविकारत्वम् । सांनाय्यव्यावृत्तये औषधद्रव्यकत्वस्य अग्नीषोमीयव्यावृत्तये एकदेवताकत्वस्य चादरणम् । अनेकदेवताकेष्वग्नीषोमीयविध्यन्त आज्यहविष्के उपांशुयाजविध्यन्तः दधिद्रव्यके पयोद्रव्यके च तत्तद्यागविध्यन्त इत्यादि बोध्यम् । तत्राग्नेयं पय इति विहिते अग्निदेवताकपयोद्रव्यकयागे किं देवतासामान्यादाग्नेयविध्यन्तः, उत द्रव्यसामान्यात् सांनाय्यविध्यन्त इति विशये, आग्नेयविध्यन्त एव, आग्नेयं पय इत्यत्र देवतायाः प्रथममुपस्थितत्वात् यागापेक्षया प्राधान्याच्च । यागो हि देवताराधनरूपः तत्प्रसादद्वारा फलजनकः । अतस्तत्सादृश्यस्यैव बलीयस्त्वमिति प्राप्ते यागविध्युत्तरमेवातिदेशकल्पनया तद्दशायां द्रव्यस्यैव प्रत्यासन्नतया शीघ्रोपस्थितेः तत्सादृश्यस्यैव बलवत्त्वम् । यागो हि वृद्धव्यवहारात् देवतोद्देशविशिष्टद्रव्यत्यागरूपः । तत्र द्रव्यस्य प्रधानभूतत्यागे विशेषणत्वम् । देवतायास्तु विशेषणीभूतोद्देशे । अतो द्रव्यं यागप्रत्यासन्नम् । यद्यपि यागो देवताराधनरूप इति तस्याः प्राधान्यम्, तथापि द्रव्यस्य प्रत्यासन्नतया प्रत्यक्षवेद्यतया च शीघ्रोपस्थितिकत्वेन तद्धटितसादृश्यस्यैव प्राबल्यम् । जैमिनिना तु देवताप्राधान्यमेव नाङ्गीकृतमिति । अतः सिद्धमाग्नेये पयसि सांनाय्यविध्यन्त एवेति । एवमैन्द्रपुरोडाश आग्नेयविध्यन्त एव ॥

इत्यष्टमाध्याये प्रथमः पादः ॥

## अथ द्वितीयः पादः ॥

द्वितीये पादे अस्पष्टलिङ्गकल्पितवचनातिदेशः । तथा हि— वाजिभ्यो वाजिनमिति विहिते आमिक्षानुनिष्पन्नवाजिनप्रतिपत्तिरूपे वाजिनयागे सौत्रामण्यङ्गभूतदेवतासंस्कारार्थसुरागृहेषु च किं सौमिकविध्यन्तः उत दार्शिक इति चिन्तायां 'सोमो वै वाजिनं सुरा सोमः' इति असोमे सोमशब्दस्य सोमधर्मातिदेशार्थतया सौमिकविध्यन्त एवेति प्राप्ते, आर्थवादिकस्य सोमशब्दस्य प्रकृष्टफलवत्त्वरूपसिद्धसादृश्येनोपपत्तौ वाक्यभेदापादकविधिपरत्वे प्रमाणाभावात् न सौमिकविध्यन्तः । अतश्चोदनालिङ्गातिदेशात् दार्शिकविध्यन्त एव । तत्रापि वाजिने पशुप्रभवत्वसामान्यात् पयोयागविकारत्वम् । सुरायां चौषधद्रव्यकत्वसामान्यात् पुरोडाशयागविकारत्वमिति ॥

एवं पशावग्नीषोमीये देवतासामान्यादग्नीषोमीयपुरोडाशविकारत्वे प्राप्ते, द्रव्यसामान्यात् सांनाय्यविकारत्वम्, सांनाय्यद्रव्यं हि पशुप्रभवम्, पशुरपि पशुप्रभवः । एवं च 'यदि पशुरुखायां पच्यमानः स्कन्देत्' इति पशौ सांनाय्यपात्रस्य उखाया दर्शनमुपपद्यते । तत्रापि पयोयागविकारत्वमेव, साक्षात् पशुप्रभवत्वसामान्यात् स्वतोगतिमत्त्वसामान्याच्च । पयो हि साक्षात् पशुप्रभवं स्वतो गतिमच्च । पशुरपि तथा । दधि तु न तथा, पयोव्यवहितत्वात् स्वतो गतिविरहाच्चेति ॥

'एवमामिक्षाया जुषन्तां युज्यं पयः' इति मन्त्रवर्णेन पयोरूपत्वावगमात् तद्यागस्य पयोयागविकारत्वम् । एवमहर्गणाभिधानेषु सुत्यागणेषु द्वादशाहविकारत्वमित्युक्तम् । अहर्गणाश्च द्विविधाः—

सत्ररूपा अहीनरूपाश्चेति । द्वादशाहोऽपि द्वेधा— सत्ररूपोऽहीनरूपश्चेति । तत्र सत्रत्वमासीरन् उपेयुरित्यादिचोदनाचोदितनिष्ठमखण्डोपाधिरूपम् । अनियतस्वामिकयजतिचोदनाचोदितनिष्ठमहीनत्वमप्यखण्डोपाधिरूपमेव, वृद्धव्यवहारात् । तत्र सत्राणा सत्रद्वादशाहविकारत्वम्, अहीनानां चाहीनद्वादशाहविकारत्वम्, सत्रत्वाहीनत्वसामान्यात् । अत्र द्विरात्रप्रभृति एकादशरात्रपर्यन्ता. केवलाहीनात्मका. । त्रयोदशरात्रप्रभृतयः विश्वसृजामयनपर्यन्ताः सर्वे केवलसत्रात्मकाः । द्वादशाहस्तु उभयात्मक इति बोध्यम ॥

इत्यष्टमाध्याये द्वितीयः पादः ॥

---*---

## अथ तृतीयः पादः ॥

तृतीयपादे प्रबललिङ्गकल्पितातिदेशविचार । तथा हि— ‘आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्यात् बार्हस्पत्यश्चरु.’ इत्यादिहविर्गणे क्रमसामान्यात् प्रथमतृतीययोराग्नेयाग्नीषोमीयविकारत्वमिति प्राप्ते, क्रमसामान्यस्याशाब्दस्यान्यसापेक्षस्य च विलम्बितोपस्थितिकतया उत्पत्तिवाक्यगतदेवतासादृश्यस्यानन्यापेक्षत्वेन शीघ्रोपस्थितिकत्वस्य प्रबलत्वेन तेनैवातिदेश । ततश्चाग्नावैष्णवस्याग्नीषोमीयविकारत्वं बार्हस्पत्यस्य चाग्नेयविकारत्वमिति ॥

एवं पादत्रयेण सादृश्यकल्पितवचनातिदेशविशेषनिरूपणं कृतम् । स्थानापत्तिकल्पितवचनातिदेशाश्रयोपस्थितिकल्पितवचनातिदेशयोस्तु विशेषविचारासंभवात् स न कृतः । तत्र स्थानापत्तिर्नाम तत्कार्यकारिता । सा च पञ्चविधा— प्रत्यक्षगम्या, अनुमान-

गम्या, श्रुतस्वशब्दगम्या, निषेधानुवादानुमितस्वशब्दगम्या, अभावे विध्यनुमितनिषेधकल्पितस्वशब्दगम्या चेति । तत्र प्रत्यक्षगम्या यथा — 'नैवारश्चरुर्भवति' इति । अत्र हि नीवाराणां व्रीहिस्थानापन्नत्वं व्रीहिकार्यचरुजनकतारूपं प्रत्यक्षेणावगम्यते । एवं च 'नैवारश्चरुर्भवति' इत्यनेन नीवारैश्चरुं कुर्यादित्यन्वयबोधे, कथमित्याकाङ्क्षायां दर्शितव्रीहिस्थानापत्त्या व्रीह्युपस्थितौ व्रीहिवदिति पदकल्पनया व्रीहिधर्माणामतिदेशः । अनुमानगम्या यथा 'नखावपूतश्चरुर्भवति' इत्यत्र नखानामुलूखलमुसलस्थानापत्तिः । अत्र हि नखानामवपवनसाधनत्वमेव प्रत्यक्षेणावगम्यते । उलूखलमुसलयोस्तु अवघातसाधनत्वम् । तत्रावपवनावघातयोर्वितुषीभावरूपैककार्यजनकतया अवपवनावघातसाधनयोरपि दर्शितैककार्यप्रयोजकत्वमनुमेयम् । इत्थं च उक्तस्थानापत्त्या उलूखलमुसलोपस्थितौ तत्सदृशैरिति पदकल्पनया उलूखलमुसलसदृशैर्नखैरवपवनं कुर्यात् इत्यन्वयबोधेन नखेषु उलूखलमुसलधर्मातिदेशः । श्रुतस्वशब्दगम्या यथा— 'परिधौ पशुं नियुञ्जीत' इत्यनेनावगम्यमाना परिधेर्यूपकार्यकारिता परिधेः पशुनियोजनाधिकरणतारूपा सप्तमीरूपेण तद्वाचकशब्देन गम्यते । अत्र च तक्षणप्रोक्षणाष्टाश्रीकरणादिजन्यदृष्टादृष्टसंस्कारसमुदाय एव यूपत्वमित्येके । तावज्जन्यमपूर्वान्तरमित्यपरे । निषेधानुवादानुमितस्वशब्दगम्या यथा—'न गिरा गिरेति ब्रूयात् ऐरंकृत्वोद्गेयम्' इत्यत्र इरापदस्य गिरापदस्थानापत्तिः । अत्र हि ऐरंकृत्वोद्गेयमित्यनेनाग्निष्टोमस्तोत्रापूर्वसाधनीभूतविजातीयगुणाभिधानमिरापदेन कुर्यात् इत्यन्वयबोधः । तत्रोद्देश्यवाचकपदस्याश्रवणेऽपि न गिरा गिरेति निषेधानुवादबलात् दर्शितोद्देश्यवाचकपदं कल्पनीयम् । यद्यप्यत्र न मुख्या स्थानापत्तिः, उक्तविजातीयगुणाभि-

धानस्य गिरापदेन क्वचिदप्यजननात्; तथापि दर्शितनिषेधानुवादाभावे उक्तगुणाभिधानस्य गिरापदीयत्वप्रसक्तिमात्रेण तत्र स्थानापत्तिव्यवहारः । अभावे विध्यनुमितनिषेधकल्पितस्वशब्दगम्या यथा— 'संस्थिते षडहे मध्वाशयेत्' इत्यत्र मध्वशनस्य षडहस्थानापत्तिः । अत्र हि षडहाभावे मध्वशनविधिना षडहनिषेधमनुमाय षडहकार्यवाची स्वशब्दोऽनुमीयते । इदं च क्त्वाचिन्तया उदाहृतं भाष्कारेण । अनेन हि न षडहाभावे मध्वशन विधीयते, किं तु षडहसमाप्त्युत्तर तदङ्गत्वेन मध्वशनं विधीयते । स्थिरोदाहरणं तु मृग्यमित्याहुः ॥

अत्र च स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशः प्रबलः । अङ्गापेक्षायामङ्गघटितसादृश्यस्यैव पुरःस्फूर्तिकत्वात् । अत एव सोमाभावे वैश्वानर्येत्यादौ वैश्वानर्या न सोमविकारत्वम्, किं तु दर्शपूर्णमासविकारत्वमेवेति । तदेव स्थानापत्तिकल्पितवचनातिदेश उक्तः । आश्रयत्वं नाम गुणनिष्ठकारकतानिरूपकत्वम्, गुणनिष्ठफलकरणतावच्छेदकसंबन्धप्रतियोगिक्रियात्वं वा । तथा हि— 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र दध्ना इन्द्रियं भावयेत् इत्यन्वयबोधेन दध्न इन्द्रियकरणत्वे सिद्धे तस्य ताद्रूप्येण करणत्वे विधिवैयर्थ्यप्रसङ्गात् पुरुषकृतिसाध्यकिंचिद्व्यापारसबन्धविशिष्टत्वेनैव तस्य कारणत्व वाच्यमिति दध्यादिनिष्ठेन्द्रियकरणतावच्छेदको होमादिसंबन्ध इति होमादेराश्रयत्वोपपत्तिः । तत्र दध्ना इन्द्रियं भावयेदिति वाक्यार्थे कथंभावाकाङ्क्षाया प्रकरणेन होमादिरूपाश्रयोपस्थितौ तद्वदिति पदकल्पनया होमधर्माणां दध्नि अतिदेशः । तत्सिद्धं त्रिविधः कल्पितवचनातिदेश इति ॥

इत्यष्टमाध्याये तृतीयः पादः ॥

## अथ चतुर्थः पादः ॥

चतुर्थे पादे एतदपवादेन दर्विहोमस्य प्रकृतिराहित्यरूपमपूर्वत्वं निरूपितम् । तथा हि— दर्विहोमशब्दः जुहोतिचोदनाचोदितहोमसामान्यवचनः, दर्विशब्दस्य पात्रान्तरोपलक्षकत्वात् एकदेशप्रवृत्तिनिमित्तकत्वाद्वा । यागस्थले तु चतुरवत्तं जुहोतीति जुहोतिना प्रक्षेपमात्रस्य प्रतिपत्तिरूपस्य लक्षणया विधेयत्वेन तस्य न मुख्यहोमत्वम् । अतो देवतोद्देशपूर्वकद्रव्यत्यागविशिष्टप्रक्षेपात्मका अग्निहोत्रादय एव दर्विहोमपदवाच्याः । तेषु द्रव्यदेवतादिसनिपत्योपकारकाङ्गसामग्रीसाकल्यरूपकृत्स्नविधानवत्त्वेन यावदुक्तेतिकर्तव्यतयैव निराकाङ्क्षत्वात् न कुतश्चित् धर्मातिदेशः । अतोऽपूर्वा एव दर्विहोमा इति ॥

इत्यष्टमाध्याये चतुर्थः पादः ॥

समाप्तश्चाष्टमोऽध्यायः ॥

---

# अथ नवमोऽध्यायः ॥

---

## प्रथमः पादः ॥

तदेवं पादचतुष्टयपरिमितेनाष्टमाध्यायेन प्रकृतिविशेषविचारात्मकविशेषातिदेशनिरूपणं कृतम् । एवं सिद्धे अतिदेशे, तत्प्राप्तपदार्थविषय ऊह नवमाध्यायेन विचार्यते । ऊहो नाम प्रकृतौ यस्य यत्संबन्धित्वं श्रुतं, विकृतौ तस्य तदन्यसम्बन्धित्वम् । अस्ति चेद 'देवस्य त्वा—' इत्यादिमन्त्रेषु प्रोक्षणादिसंस्कारे च । तथा हि—

प्रकृतौ स्मारकतासंबन्धेन स्मार्यतासबन्धेन वा अग्निसंबन्धितया श्रुतस्य 'देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्—' इत्यादिमन्त्रस्य विकृतौ सौर्ये स्मारकतया स्मार्यतया वा सूर्यसंबन्धित्वम्। प्रोक्षणावघातादीनां प्रकृतौ संस्कार्यतया व्रीहिसंबन्धिना विकृतौ संस्कार्यतया श्यामाकसंबन्धित्वमिति। स त्रिविध.— मन्त्रोह, सामोह., संस्कारोहश्चेति। तत्र प्रथमे पादे उपोद्धातपूर्वकमूहविचारप्रारम्भः। तथाहि—प्रोक्षणावघातादीनाम् 'अग्नये जुष्टं निर्वपामि' इत्यादौ अग्न्यादिपदानां च प्रकृतौ किं व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेनैव विधानम्, उत, अपूर्वसाधनत्वाद्यवच्छिन्नोद्देशेनेति विशये, व्रीहित्वाद्यवच्छिन्नसंबन्धितयैव श्रवणात् तदवच्छिन्नोद्देशेन विधानम्। ततश्च प्रोक्षणादीना व्रीह्यादिस्वरूपप्रयुक्ततया श्यामाकचर्वादौ तदभावात् प्रोक्षणादीनां लोप एव। प्राकृतपदार्थानां हि यद्रूपावच्छिन्नोद्देश्यसंबन्धितया विधानं तद्रूपावच्छिन्नसंबन्धितयैवातिदेश., उपकारपृष्ठभावेन पदार्थानामतिदेश इति सिद्धान्तात्। अतो नास्त्यूह इति प्राप्ते, प्रोक्षणादिव्यतिरेकेणापि व्रीह्यादेर्जायमानतया प्रोक्षणादेर्व्रीह्यादिस्वरूपे आनर्थक्यात् न व्रीह्याद्युद्देशेन प्रोक्षणादिविधानं संभवति। तस्य हि प्रोक्षणादौ व्रीह्यादिसाधनताप्रतिपत्तिरेव फलम्। सा चायोग्यतानिश्चयान्न संभवति। अतो व्रीह्यादिपदेन अपूर्वसाधनत्वावच्छिन्नं लक्षयित्वा तदुद्देशेनैव प्रोक्षणादिविधानमावश्यकमिति प्रोक्षणादीनामपूर्वप्रयुक्ततया विकृतावपि अपूर्वसत्त्वेन प्रोक्षणादीनामतिदेशावश्यंभावात् अस्त्येवापूर्वसाधनश्यामाकादौ प्रोक्षणादेरूहः। न चापूर्वसाधनत्वविशिष्टव्रीहित्वमेव उद्देश्यतावच्छेदकं वाच्यम्, अपूर्वसाधनतामात्रस्याज्यादिसाधारणत्वेन तत्राप्यवघाताद्यापत्ते.। ततश्च

श्यामाके तदभावान्नोहसंभव इति वाच्यम्, गौरवेण व्रीहित्वस्य उद्देश्यतावच्छेदककोटौ अनिवेशात् अवान्तरव्यापारतयोपस्थिततण्डुलादिद्वारककरणताया एवोद्देश्यतावच्छेदकतया यवादाविव प्रोक्षणावघातादिसिद्धिः, न त्वाज्यादौ । इत्थं च श्यामाकादापि तादृशकरणतासत्त्वेन ऊहोपपत्तिरिति । एवं दर्शपूर्णमासयोर्देवस्य त्वा सवितुरित्यादिनिर्वापमन्त्रे सवित्रश्विपूषशब्दाः विकृतौ ऊहितव्याः, उत, नेति संशयः, तदर्थं किमेते समवेतार्थाः, उत, असमवेतार्था इति । तत्र प्रकृतकर्मसंबन्ध्यप्रकाशत्वरूपसमवेतार्थत्वे दृष्टप्रयोजनलाभात् तदर्थत्वमेव युक्तम् । ततश्च विकृतौ तत्तत्सम्बन्धदेवताप्रकाशनाय ऊहः कर्तव्य इति प्राप्ते, उत्पत्तिवाक्यश्रुततद्धितावगताग्निदेवताके प्रकृतयागे मान्त्रवर्णिकसवित्रादिदेवताकल्पनाया असंभवात् सवित्रादिपदानामग्न्याद्यवाचकत्वाच्च नैतेषां समवेतार्थकत्वम् । किंतु असमवेतार्थत्वाददृष्टार्थत्वमदृष्टार्थप्रकाशनार्थत्वमेव वा । तथा हि — देवस्य त्वेत्यादिपदानां यः शक्योऽर्थः तद्विशिष्टनिर्वापप्रकाशनमेव देवस्य त्वेत्यादिविशिष्टमन्त्रस्य प्रयोजनम् । येषां पदार्थानां दृष्टप्रयोजनसंभवः तत्प्रकाशनस्य दृष्टमेव प्रयोजनम् । येषां तु तदसभवः तत्प्रकाशनस्य अदृष्टमेव प्रयोजनम् । अत एव तादृशपदार्थानां निर्वापे वैशिष्ट्यमाहार्यसंबन्धेनैव । इत्थं च निर्वापपदस्य पृथक्करणरूपं दृष्टमेव प्रयोजनम् । त्वापदस्य निर्वापकर्मसमर्पकस्य तदुपयोगितया तस्यापि दृष्टमेव प्रयोजनम्, अग्नये जुष्टम् अग्निना सेवितं यथा तथा निर्वपामीत्यर्थाङ्गीकारात् । अग्निजुष्टपदयोः निर्वापफलप्रकाशकतया इतरदेवत्यहविर्विवेकसंपत्तिः फलम्, अन्यथा हि कस्यै देवतायै निरुप्तमिति निर्णयो न

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिराहृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ४.] विरोधिकृद्वर्षे फाल्गुनमासः । [मंचि. १२.

## वत्सरान्ते विज्ञप्तिः ॥

अद्यासन्नषोडशहायनेयं सहृदया रसिकरसिकानाममरवाणीप्रणयिनामादरातिशयेन विरोधकृत्यप्यस्मिन्संवत्सरे सौहार्दमेवाधिकमभिवर्धयन्ती क्वचिदाधुनिकधर्माधिकरणव्यवस्थामभिनन्दन्ती कदाचिदार्यभाषाचरितमपूर्वमाविष्कुर्वती क्वचिदमलाभिरुपदेशवाग्भिरज्ञानतिमिरमपोहन्ती कदाचिच्चक्रवर्तिनः प्रतिकृतिधारणेनात्मानं मण्डयन्ती क्वचिद्देशान्तरीयकथानैपुण्यमात्मनः प्रकाशयन्ती कदाचित्कर्ममीमांसकानां मतं सुविशदमनुवर्णयन्ती क्वचिदमरभाषाभ्युदयप्रकारमालोडयन्ती कदाचिन्महाकविरचनाकौशलमनुविमृशन्ती क्वचिद्भूगोलशास्त्रतत्वानुवर्णनेनानुवाचकानां हृदयवैशाल्यमापादयन्ती कदाचिद्योगिवर्याणामत्यद्भुतमपदानमुपदिशन्ती प्रायो मुग्धामवस्थामतीत्य विलसत्यनितरसुलभेन सौभाग्येन ॥

संपादकः ।

# पण्डितपरिषत् ॥

——❀——

प्रथमः— मित्र! अपि नाम सम्यङ्निर्वृत्ता पण्डितपरिषत् काञ्चीनगरे? ॥

द्वितीयः— न सम्यङ्निर्वृत्तेति केचित्, न तथेत्यपरे, जातैव मृतेत्यन्ये ॥

प्रथमः— कथमेवं व्यधिकरणतयोपन्यस्यते निष्कृष्टवादिनापि भवता? ॥

द्वितीयः— सामयाचारिकधर्मतत्त्वमवैदिकानामुपदेष्टुमाहूता विद्वांसः लौकिकैरेव 'कालानुरोधेन एवं करणीयम्, इयमेव समीचीना सरणिः' इत्यादिकमनुशिक्षिता आसन् ॥

प्रथमः— न खलु सम्यगवगच्छामि । अश्रद्धेयमेतत् ॥

द्वितीयः— आदावेवोपन्यासप्रसङ्गेन सर्-सुब्रह्मण्यार्यमहाशयः अडयार्-पुस्तकशालापरिलब्धं प्रणववादनामकं ग्रन्थरत्नं सर्वैरपि पण्डितंमन्यैः पठनीयमुपादिक्षत् ॥

प्रथमः— अहो! किमित्यविवादतया प्रतिष्ठिते परब्रह्मप्रतिपादके प्रणवेऽपि वादमालम्ब्य प्रवर्तितोयं ग्रन्थः? मास्त्वस्माकं प्रणवे वादशङ्कालेशोऽपि ॥

द्वितीयः— यैस्तु स प्रणववादो न पठितस्तेषां पण्डितमानिता वितथेति च समुपन्यास्थत् ॥

प्रथमः— किमेष महानभिनिवेशः प्रणववादे तस्य महाशयस्य । स

च ग्रन्थो मया दृष्टचर एव । न तादृशानि विषयजातानि तत्रोपलभ्यन्ते; यान्यालम्ब्य तदपठितॄन् अपण्डितानमौ मन्यते ॥

द्वितीयः— अचिन्त्यो हि प्रणववादस्य प्रभाव. । येन तादृशोऽपि महाशयः असमयोचितभाषी संवृत्तः ॥

प्रथमः— मित्र! कथय कति पण्डितास्तत्रागच्छन्? ॥

द्वितीय.— शताधिका पण्डिता नानादेशेभ्यः समागताः ॥

प्रथमः— सर्वेषामप्येतेषा प्रत्येकमेकैकविषयमधिकृत्य भाषण नाम बहुकालनिर्वर्त्यं खलु । किं वा सर्वेषामपि भाषणायावकाशो दत्त.? ॥

द्वितीयः— सर्वेषामपि भाषणं बहुकालसापेक्षमिति मत्वैव सभाया. प्रथमदिवस एव केषाचित् परिमिताना पण्डितानां पारिषद्यतया परिगणनं कृतम् ॥

प्रथमः— किमन्ये केवलं तूष्णीकामास्थिताः? तथासति तेषामाह्वानमागमनं च वितथमिति मन्ये ॥

द्वितीयः— तथा न वक्तव्यम् । अन्येऽपि पारिषद्यमुखेन स्वं स्वमाशयमाविष्कर्तुं शक्नुवन्त्येव ॥

प्रथम·— आगतानां सर्वेषामपि पण्डितानां मध्ये केषांचिदेव पारिषद्यतया भाषणाधिकारितया च नियमनं यद्यपि पारिषद्यतया नियमितानां महत् गौरवमुत्पादयेत्, तथापि अन्येषां पण्डितानां स्वस्वमुखेन स्वाशयमाविश्चिकीर्षूणामवमानमेव संपादयेत् ॥

द्वितीयः— सत्यम् । समुपस्थितेऽस्मिन् कार्यसंकटे किमन्यन् कर्तुं शक्यते? ॥

प्रथमः— आह्वानसमय एव पत्रिकासु ‘एते एव पारिषद्याः, एतेषामेव भाषणाधिकार, नान्येषाम् । इतरे तु पारिषद्यमुखेनैव स्वाशयमाविष्कर्तुमर्हाः’ इति प्रकाश्येत यदि, तदा पारिषद्या एव समागच्छेयुः । सभा च सम्यक् प्रचलेत् ॥

द्वितीयः— पारिषद्यतया नियमितानामत्रागमनं खल्वितः पूर्वं न निश्चितम् । पारिषद्यतया नियुक्तानामनागमने सभा हि न्यूना भवेत् ॥

प्रथमः— प्रथममेव तेषां संमतिमवाप्य तदनन्तरमेव सर्वे आह्वातव्या. । भाविकार्यजातमालोच्य खलु पूर्वमेव संविधातव्यं कुशलैः । भवतु कति पण्डिता पारिषद्यतया नियमिता ? ॥

द्वितीय·— चत्वारिंशत् इति तर्कयामि ।

प्रथमः— किं पक्षपातं परित्यज्य वैदुष्यमात्रनियमितं परिगणनम् ? उत पक्षपातं दाक्षिण्यं चावलम्ब्य ॥

द्वितीयः— न पक्षपातगन्धोऽपि । तत्र षट् काञ्चीवासिनः, एकादश महीशूरराज्यादागताः । त्रयो विजयनगरीत आगता इति वैदुदुष्यमात्रावलम्बमेव परिगणनमभूत् ॥

प्रथमः— किं चत्वारिंशत् पण्डिता एव तत्र पारिषद्यतामर्हन्ति ।

द्वितीयः— सत्स्वप्यन्येषु बहुषु पण्डितेषु सर्वेषां प्रवेशे नियमनवैफल्यात् चत्वारिंशत्पण्डिता एव नियमिताः ॥

प्रथमः— अन्ये पण्डिताः स्वेषां परिषद्यतया अपरिगणनेन नाक्रुध्यन् वा ?

द्वितीयः— अहो ! कथं क्रोधो न जायेत ? अदूरकोपा हि मुनिज-

नप्रकृतिः । सर्वेषु समवेतेषु केषांचित् परिग्रहः अन्येषां परित्याग-श्चेति नियतमेव संजनयेदुद्वेगं मानवजनानाम् । कर्णोऽपि हि गाङ्गेयकृतादात्मनोऽर्धरथत्वेन परिगणनात् महान्तं क्रोधमुदवहत् ॥

प्रथमः— अहो ! तिष्ठतु पश्चाद्विचारणीयो महान् विषयः । प्रथमं पारिषद्यनिर्वचन एव सुमहान् विवादः समजनि ॥

द्वितीयः— अन्ततश्च कथंचित् पारिषद्यपरिगणने जाते किंचिदिव विश्रमार्थं समुदतिष्ठत् सा परिषत् ॥

प्रथमः— महान् हि विषयो महता प्रयत्नेन साधितः । नूनमर्हति विश्रामं सा परिषत् ॥

द्वितीयः— अथ सायं पुनः समिलितायां परिषदि सभाकार्यदर्शी यथासंप्रदायं सर्वेषां स्वागतमाबभाषे ॥

प्रथमः— किमद्यैव स्वागतानि पठ्यन्ते । किमिति प्रथमसंमेलन एव न पठितानि ? ॥

द्वितीयः— अद्यैव खलु सभ्या निश्चिताः । सभ्यानामभावे केभ्यः स्वागतं पठ्येत ? ॥

प्रथमः— प्रथमं को वा विषयः विचाराय समारब्धः ?

द्वितीयः— स एव कार्यदर्शी प्रथमं संस्कृतभाषाभिवृद्धिमधिकृत्य-विचारमवतारयामास ॥

प्रथमः— सभैषा खलु प्राधान्यतः समुद्रयात्राप्रौढाविवाहादिकमचर्वितचर्वं विषयमधिकृत्य विचारयितुं समारब्धा । तान् विषयान् विहाय संस्कृतभाषाभिवृद्धिमधिकृत्य प्रथमतो विचारणं किं निदानमिति नावगम्यते ॥

द्वितीय:— संस्कृतभाषाभिवृद्ध्युपाये हि विचार्यमाणे लौकिकवैदिकसाधारण्येन सर्वेऽपि जना ऐकमत्यमवलम्बेरन्, मिथः संजातसौहृदाश्च भवेयुः । सर्वैरप्यभ्युपगन्तव्योऽयं विषयः । संजाते चैकमत्ये अनन्तरं समुद्रयात्रादिषु विषयेषु विचारपदवीमुपनीयमानेषु ऐकमत्येनैव संमतिर्ग्रहीतुं शक्यत इति मत्वा प्रथममवतारितोऽयं विषयः ॥

प्रथमः— किमनेन बकबन्धनायासेन ? । पण्डितेषु हि यस्य यस्य यादृशः अभिसंधिः स तमेव साधयेत्, तत्साधिकां च पुष्कलां युक्तिं यावदवगतमुपन्यस्येत् । प्रतारणं चैतादृशं न तेषु घटते ॥

द्वितीय:— अनन्तरं चाग्रासनाधिपतिः तमिममवतारितं विषयमधिकृत्य स्वीयमुपन्यासमपठत् ॥

प्रथमः— कोऽयं महाशय अग्र्यमासनमलंचकार । किमेष पण्डितेषु पारिषद्येष्वन्यतमः ? ॥

द्वितीय:— न पारिषद्यपण्डितेष्वन्यतमः । अपि तु मद्रपुरीराजकीयमहाकलाशालायां संस्कृतभाषाध्यापकपदवीमधिष्ठास्नुः श्रीमान् मल्लूर् एम्. ए. रङ्गाचार्यः अग्र्यमासनमलमकार्षीत् ॥

प्रथमः— आङ्गलभाषाध्येतारं स्वयं संस्कृतभाषायां बृहस्पतिमपि न पण्डिताः पुरस्कुर्वते ।

द्वितीय:— आङ्गलभाषाध्येतारोऽपि पण्डितानसंस्कृतमतीन् जडांश्च मन्यन्ते । अतः पण्डिता अपि तान् केवलमाडम्बरपरानन्तःसारशून्यांश्च मन्यन्ते ॥

प्रथमः— अन्ततः संमिलितैः संघैः किं समुद्रयात्रा प्रत्यवायज-

निकेति निर्णीता, उत, करणीयेति ? ॥

द्वितीयः—— न किमपि निर्णीतम् । केवलं सङ्घ पण्डितानां हूण-भाषाप्रणयिनां च कलहाय संवृत्तः ॥

प्रथम —— किमिति कलहस्य कारणम् ? ॥

द्वितीय·—— अग्रासनाधिपतिः सर्वैरपि उपन्यासरीत्यैव विधिनिषेधकोटी उपपादनीये, न वाक्यार्थरूपेणेति सभास्तारानादिदेश ॥

प्रथमः—— पण्डिता उपन्यासरीतिं नाङ्गीकुर्युः । वाक्यार्थप्रवचनरूपेणैव सर्वत्र तेषां व्यवहारः परिषत्सु । तान् प्रति अत्र नूतनतया उपन्यासरीतिरङ्गीकरणीयेति निर्बन्धः नोचित इति मन्ये ॥

द्वितीयः—— न केवलं तेषां परिचयाभाव एवात्रानङ्गीकारे कारणम् । किं तु वाक्यार्थरूपतया व्यवहार एव अन्ततः सिद्धस्य सिद्धान्ततया विषयनिर्णयो भवेत्, नोपन्यासरीत्येति पण्डिता वदन्ति ॥

प्रथमः—— किं तत प्रतिपन्नं पण्डितैः ? ।

द्वितीयः—— यो हि पण्डितसमयाभिज्ञः स्वयं पण्डितश्च स एव मध्यस्थो भवितुमर्हति, नान्यः । इतरथा तु सद्य एव प्रतिनिवर्तिष्यामहे इति केचित् प्रधानपण्डिता निश्चित्य स्वं स्वं देशं प्रतिनिवृत्ताः ॥

प्रथमः—— अनन्तरमपि सभा प्रचलितेति हि मया श्रुतम् ।

द्वितीयः—— तत्र पण्डितेषु ये अग्रासनाधिपतिमनुनिनीषवः ते सर्वेऽपि उपचत्वारिंशाः संगत्य कमपि स्वाशयं लेखमुखेन व्यतारिषुः ॥

प्रथमः–– तर्हि पूर्वमेव लेखमुखेन सर्वेभ्यस्तत्तदाशया अवगन्तुं शक्यते खलु । किमनेन कलहोदर्केण पण्डितसंमेलनेन ॥

द्वितीयः–– अत एव खलु मया सभा न सम्यङ्निर्वृत्तेति कथितम् ॥

प्रथमः–– भवतु, यथार्थतो विचार्यमाणे समुद्रतरणप्रौढाविवाहादिषु शास्त्रसंमतिरस्ति वा नवेति जिज्ञासे ॥

द्वितीयः–– सर्वस्याप्यनुमतिरस्ति नास्ति च । वक्तुर्वचनकौशलेन गुणदोषयोर्वैपरीत्यं भवेत्खलु ॥

प्रथमः–– स्मृतिग्रन्थानालोच्य किल पण्डिता वदेयुः ।

द्वितीयः–– सभां प्रत्याहूतेषु विद्वत्सु प्रायः सर्वेऽपि न्याये व्याकरणे वेदान्ते च निपुणाः । स्मृतिग्रन्थानामाशयं व्युत्पत्तिबलेन निश्चिन्वन्ति ॥

प्रथमः–– सत्यम् । ग्रन्थकरणसामर्थ्यं विना यस्मिन्कस्मिन्शास्त्रे यस्य कस्यापि पाण्डित्यमस्तीति न मया अभ्युगम्यते । विशेषतः अस्मिन्देशे प्रायः स्मृतिग्रन्थाः न गुरुमुखेन पठ्यन्ते । तेषु परिश्रमश्च विरल एव ॥

द्वितीयः–– किमनेन शुष्कवादेन ।

(इति निष्क्रान्तौ ।)

वासरः ६. शुक्रवासरः ७. शनिवासरः इति सप्त वासरा । सूर्यस्य वासरे सूर्योदयकाले सूर्यहोरा प्रवर्तते । सोमवासरे सोमहोरेति क्रमेण वासरा विविच्यन्ते । उक्ता एव सप्त वासरा इममेव क्रममाश्रित्य पुन. पुनः परिवर्तन्ते । इयं वासराणां व्यवस्था सर्वेषु देशेषु एकरूपैव दृश्यते । सरूपो वासराणां व्यवहारो यत्र यत्रोपलभ्यते तत्र तत्र निवसतां जनानां प्राक्तना वंशीयाः समानकुलीना नेदिष्ठेषु देशेषु वसन्तः एकस्य समाजस्य नियमान् विधीश्चान्वतिष्ठन्निति संभावयितुं न्याय्यमिति प्रतिभाति ॥

कलियुगस्य प्रथमे दिवसे शुक्रस्य वासरो बभूवेति गणकाः कथयन्ति । तस्मिन् दिने प्रातःकाले सूर्योदय सप्तापि ग्रहा मेषं राशिमाश्रित्यावर्तन्त इति च ते वदन्ति । तत्कालमारभ्यास्मिन् क्रोधिवर्षे पञ्चसहस्रं वत्सरा अतीता इति ज्योतिर्विदां गणनया निश्चिनुमः ॥ ४३ ॥

राहुः केतुश्चेत्यन्यौ द्वौ ग्रहौ भवत. । अनयोर्वासरस्य राशीनां वाधिपत्यं नास्ति । नापीमौ ग्रहौ ज्योतिष्मन्तौ, अपि तु छायात्मानौ । एताभ्यां सह नव ग्रहा भवन्ति । पुरुषायुषकाल एतेषु नवसु ग्रहेष्वायत्तः । पुरुषस्य नियतिरेतैर्नवभिर्ग्रहैर्नियन्त्र्यते । तेन तेन ग्रहेण नियम्यमानः पुरुषायुषकाल· तस्य तस्य दशेत्यभिधीयते । एकेन ग्रहेण स्वस्य दशायां नियम्यमानायामन्येऽष्टावपि ग्रहा. साचिव्यमाप्नुवन्ति ॥

एते ग्रहाः पुरुषेण प्रसादयितुं शक्यन्ते । होमेन दानेन पूजया च प्रसादिताश्चेमे ग्रहाः पुरुषं प्रति शुभप्रवणा भवन्ति ॥ ४४ ॥

ज्योतिश्चक्रं द्वादशधा विभज्य प्रपञ्च्यते ज्योतिःशास्त्रे । चक्रस्यैकैको भागो राशिरित्यभिधीयते । ज्योतिश्चक्रं राशिचक्रमिति

गद्यते । इदं राशिचक्रं भूमि परीत्य दिवि संचरति । अस्मिन्नेव राशिचक्रे पूर्वोक्ता नव ग्रहाः संचरन्ति । तेषु राहुकेत्वोर्विपरीतः सचारः । तौ हि प्रतीचीतः प्राचीं दिशं गच्छत. । अथ च तौ परस्परस्य सप्तम राशिमाश्रित्य सदा संचरत । राशीनां प्रत्येकं नव भागा प्रकल्प्यन्ते ज्योतिर्विद्भिः । राशीनां रूपाणि नामधेयानि च मनस्यवधारणमर्हन्ति । तेषा स्वरूपाण्यनुसरन्ति नामधेयानि । (१) मेष: (२) वृषभः (३) मिथुनम् (४) कुलीरः (५) सिंह (६) कन्या (७) तुला (८) वृश्चिकः (९) धनुः (१०) मकर (११) कुम्भ (१२) मीनः इति द्वादश राशय । तारा. सप्तविंशति । चन्द्रस्ताराधीश इति कथ्यते ।

(१) अश्विन्यादितारा: नव
(२) मघादितारा. नव
(३) मूलादितारा. नव
} आहत्य सप्तविंशति ॥

तत्र प्रथमनवके—

| | | |
|---|---|---|
| (१) अश्विनी | (४) रोहिणी | (७) पुनर्वसू |
| (२) भरणी | (५) मृगशिरा. | (८) पुष्य |
| (३) कृत्तिकाः | (६) आर्द्रा | (९) आश्लेषा |

आहत्य नव ॥

द्वितीयनवके—

| | | |
|---|---|---|
| (१) मघ | (४) हस्तः | (७) विशाखा |
| (२) पूर्वफल्गुनी | (५) चित्रा | (८) अनूराधा |
| (३) उत्तरफल्गुनी | (६) स्वाती | (९) ज्येष्ठा |

आहत्य नव ॥

तृतीयनवके—

| | | |
|---|---|---|
| (१) मूलम् | (४) श्रवणम् | (७) प्रौष्ठपात् |
| (२) पूर्वाषाढा | (५) श्रविष्ठा | (८) अहिर्बुध्न्यः |
| (३) उत्तराषाढा | (६) शतभिषक् | (९) रेवती |

आहत्य नव ॥

इत्थं नवकत्रयाणां सप्तविंशतिः । ताराणां नक्षत्रमित्यपर नामधेयम् ॥

उक्तास्ताराः प्रत्येकं चतुर्धा विभज्यन्ते गणकैः । पूर्वोक्ता राशयश्च नवधा विभज्यन्ते तैरेव । एव सति तारासु प्रथमनवकस्य ४ × ९ = ३६ भागा· सपद्यन्ते । अनया रीत्या उत्तरयोर्नवकयोरपि प्रत्येकं षट्त्रिंशद्भागाः । आहत्य ताराणां भागाः १०८ संपद्यन्ते ॥

राशय. प्रत्येकं नवधा विभज्यन्ते । एव विभागे राशीनामपि ९ × १२ = १०८ भागाः संपद्यन्ते । अत्र ताराभागानां राशिभागानां च यथाक्रम संकलनया गणका· प्रक्रियां प्रकुर्वते ॥४६॥

द्विप्रकारा मासस्य गणना भवति । एका सूर्यस्य मेषराशिक्रमणमारभ्य या राशिचक्रे गतिः तामाश्रित्य प्रवर्तते । अन्या गणना चन्द्रमसो गतिमनुसरति । चन्द्र. सूर्याद्वियुज्य यावता कालेन पुन. सूर्येण संगच्छते तावान् कालश्चान्द्रमानो मास इति गण्यते । अस्य मासस्य द्वौ पक्षौ स्त·, पूर्वोऽपरश्चेति । आद्यः शुक्ः पक्षः, यस्मिन् पक्षे सूर्यास्तमयसमनन्तरं चन्द्र प्रकाशते । अपरः पक्षः कृष्णपक्ष इत्युच्यते, यतोऽत्र पक्षे रात्रिस्तमसा सह प्रादुर्भवति । उक्तं पक्षद्वयं प्रत्येकं पञ्चदशभिर्भागैर्युक्तं भवति । इमे भागास्तिथय इति कथ्यन्ते ॥ (क्रमश.)

## आर्यभाषाचरितम् ॥

( पूर्वतोऽनुवृत्तम् । )

| | | | |
|---|---|---|---|
| सेग्जन् | डोम | ड्विरि | |
| ऐरिष् | अर्डम | डोरम् | |
| जण्ड् | द्वारम् | | ऐत्य |
| विधूनियन् | डुरिस् | | |
| गोथिक् | डौर् | | |
| ट्याटोनिक् | | हला | |

गृहावयववाचिन एते पूर्वोक्ता शब्दा मणिशिलाभवनेषु पर्णघासदार्वादिविनिर्मितकुटीरेषु च सामान्यतो वर्तमानास्तत्कालीनगृहनिर्माणप्रकार विशेषाकारेण नाववोधयन्ति । यद्यस्माकं तद्विषये विशेषज्ञानलिप्सा तर्ह्यन्यतस्तद्विशेषा संपादनीयाः । प्राचीनहिन्दूयूरोपियन्गृहनिर्माणे द्वौ पक्षौ व्यवस्थापयितव्यौ ॥

तयोः प्रथमः गृहोपादानद्रव्यं दारूणि वैदलं स्निग्धमृत्तिका च, न दृषदः । द्वितीयो गृहस्य वर्तुलाकृति । सावधानतया विचार्यमाणे प्रथमे पक्षे औत्तराहाणां विषये पूर्वोक्त सर्वं वास्तवमेव । ट्यूटन्मनुष्यशाखा सुधेष्टकाव्यवहारस्यापरिचितेति टासिटन् कथयति । नृपो माग्जिमिनस् दारुमयानि सर्वाणि गृहाणि क्षणार्धे ददाहेति हिरोडियन्नाह । तदा वेणुदण्डैरेव कुड्यानि विनिर्मितानीति शब्दप्रामाण्याद्विज्ञायते । यथा प्राचीनशर्मण्यभाषायां कुड्यपर्यायो वाण्ट्शब्दः इषीकार्थस्य वाण्डस् इति गोथिक्शब्दस्य विकृतिरेव ।

गोथिक्भाषायां वाड्जम् इति पदं कुड्यस्य संज्ञा भवति । पूर्वोक्तसर्वांशपरिशीलनेन पूर्वकालीनाः सर्वे मृद्दारुमयगृहनिर्माणमात्रकुशला अनभ्यस्तशिलाभवननिर्माणा इति ज्ञायते ॥

## अथ कृषिः ॥

ग्रीकुजातिः प्रपञ्चचरित्रप्रारम्भेऽपि गाढपरिभ्रमणशीला (Nomads) इति थ्युसिडैड्सुनामा पण्डितः पूर्वमेवोपलक्षितवान् । इदानीं हेल्लासिति (Hellas) व्यवह्रियमाणो देशः पूर्वस्मिन् काले न सम्यग्व्यवस्थापितः । तदा सर्वे पर्यटनरुचय आसन् । जनसंख्याभिवृद्धावेकत्र वस्तु संबाधतया असहमानाः पूर्वनिवासस्थलं परित्यज्य स्थानान्तरं जग्मुः । नासीत्तदा वाणिज्या, नाप्यन्यः समागमसाधनमाप्यो भौमो वा पन्थाः । यावता स्वकुटुम्बभरणपर्याप्तिर्जायेत तावन्तमेव भूभागं चकृषुः । न धनं संचिक्युः सर्वे अश्वस्तनिकाः । नापि वृक्षान् भूमावारोपयामासुः । कुड्याभावेन गृहाणां कदा अभियोक्तार आपतेयु, कदा सर्वस्वमपहरेयुरिति तेभ्य सदा भयं विशङ्कमाना बभूवुः । एवं जीवन्तस्ते सर्वत्र जीविकामात्रमलभन्त । स्ट्रैबो नाम (strabo) कश्चिद्विद्वांश्चरित्रकार एतानेवं वर्णयामास ॥

ऐरोपावासीतरजनैः सममेतेऽपि ग्रीकुदेशीया देशात् देशान्तरं जिगमिषवः सरलजीवना अपरिचितकृषिकर्माणः साद्यस्कापेक्षापूरणमात्रसंपादितसंभाराः सज्जीकृतकुटीराः पशुमांसाहाराः शकटिकानीतनिजपरिच्छदा यथाभिलषितदेशगामिनश्चासन्निति शर्मण्यदेशीयानामपि स्थितिश्चैतादृशीत्यपरे चरित्रकाराः समामनन्ति । हिन्दूयूरोपियन्जातेः चरित्रसमयात्प्रागेव कृषिकर्मण्यत्यल्पपरिचयोऽस्तीति ग्रन्थप्रामाण्यात् ज्ञायते । क्रीस्तोः पूर्वं तृतीयशतके गृहपु-

ष्टान् जन्तून् प्राक्तनीमपि कृषिपद्धतिं च प्रिथियसूनामक कश्चि-दुत्तरसमुद्रप्रस्थानसमये दृष्टवानिति स्ट्राबो (Strabo चरित्रकारो वदति । विधूनियन्जातिजाः पूर्वे लोहपरिचयगन्धशून्या अपि कृषि-कर्मण्यनलसा अभूवन् । स्लाक्जातिमनुष्या कृष्युपयुक्तनानाविधपशून् पुपुषु । कृषिफलादानसमये प्रियङ्गून् संचिक्युरित्यन्यो वदति । समु-द्रतीरवासिनः कृषिकर्मविशारदा इति बहुग्रन्थवचनेभ्यो ज्ञायते । तत्तद्भाषागतशब्दांश्चरित्रकारवचनै सह संकलय्य विचारिते हिन्दू-यूरोपियन्कुटुम्बे ऐरोपियासियाशाखयो कृषिपरिभाषापदाना सं-वादोऽतीव परिच्छिन्नोऽव्यापकश्च । यूरोपियन्भाषाकदम्बे तु पर-स्परसवादोऽनल्पः । हिन्दूयिरेनियन्शाखायामपि एतदन्यविषये बहू-न्युदाहरणानि सिद्धानि । एते शब्दा प्रथमवर्गमवगाहन्ते ।

संस्कृत— यव.

जण्ड्— यव.

पारशीक— जाव्.

पामर्— यङ्.

लिधूनियन्— जावि.

ऋग्वेदेऽपि धान्यसामान्यवाचकत्वेन प्रयुक्तत्वादेतेषां शब्दा-नां प्रथमाभिधेयं न सम्यङ्निर्धारयितुं शक्यते । एतस्मिन् प्रकरणे एतेऽपि वक्तव्या.— लेटिन्— पिन्सो । संस्कृत— पिष् इत्यादि । एते धातवो धान्यपेषणमात्रवाचिनः, न तु धान्यविशेषमवगमयन्ति । पुरातनस्थितिमनुमातुं न किमपि सहकार कुर्वन्ति च ।

सेग्जन्— पिसिनो अन्नम् .

संस्कृतम्— भिस्सा अन्नम् .

नार्मन्– फिस् तुष..
जण्ड्– पिष्ट्रा धान्यमर्दनम्.
विधूनियन् दून.
स– धाना लावक् कर्षु वृक उर्वरा.
जण्ड्– दाना उर्वरा कर्ष.
पारसीक– दानह.
पामर्– पिङ्कुदाना.

एवमैरोपासियाशाखयोः पदसादृश्यं दर्शितम् । इतःपरमैरोपाभाषासु विद्यमानं पदसादृश्य दर्शयिष्यते । तद्यथा—

| लेटिन्. | सस्कृत. | गोथिक्. | सेग्जन्. | इरेनियन्. | लिधूनियन् |
|---|---|---|---|---|---|
| अजर् | आज्र | आक्रस् | | | |
| अररेर् | ,, | ,, | ओरटि | ऐरिम् | आर्ति |
| अरट्रम् | ,, | ,, | ओरेलो | अरभर् | अरक्लाम् |
| ओंका | ,, | ,, | ,, | ,, | अकेटि |
| सिरो | ,, | सियन् | ,, | सिक् | सेटि |
| सीमेन् | ,, | ,, | सेमि | ,, | सेमु |
| सर्पेरि | ,, | ,, | स्नुपु | ,, | ,, |
| मोवेरि | मार् | मालर् | मेला | मेलिम् | माल्टी |
| पोर्का | ,, | ,, | ,, | ,, | फुरु |
| विरा | ,, | ,, | लिचा | ,, | लिसि |

(क्रमश ।)

यतममरहितार्थाय कुहनाभिक्षुरूपमादिपुरुषं विभावयन्नपि भाविनमात्मपराभव केवलमत्युदारतयाभिलषितमर्थिने ददौ । भगवानप्याक्रम्य त्रिभिर्विक्रमैरखिल जगत् विजित्य सन्नद्धान् सर्वानप्यसुरान् नियम्य रसातले बलिं पुनरपि प्रत्यर्पयामास त्रिलोकीं महेन्द्राय । राजन्नेतदेव त्रैविक्रमं यशो वेदा वेदविदश्च समामनन्ति ॥

ततः परमपि कदाचिन्नष्टेषु धर्मेषु शिथिलीभूतासु क्रियासु मखानामव्यवस्थे चातुर्वर्ण्ये आकुलीकृतेषु दुष्प्रकृतिभिर्धर्मेषु अभिभवति धर्ममधर्मे समजनि ब्रह्मणोऽत्रेर्दत्तात्रेयो नाम योगी; स हि प्रत्यानीय वेदान् विधाय लोकमसंकीर्णं स्थापयामास धर्मान्। अनन्तरं चोद्वृत्तनरपालककुलभरपीडिताया भारावताराय भुव. संजातो रेणुकायां जमदग्नेर्भूत्वा भार्गवो राम त्रिःसप्तकृत्वो विधाय निकृत्तक्षत्रियव्रातामुर्वीमाजहाराश्वमेधम् । यज्ञान्ते च मारीचाय काश्यपाय वसुमतीं दक्षिणामदात् । स हि भगवान् प्रादुर्भावो विष्णोरधुनापि चरन् हिताय लोकानामतिमहत्तपोऽधिवसति शिखरं महेन्द्रस्य ॥

ततोऽतिक्रान्तेषु युगेषु तावेव जयविजयौ शापदोषेण महर्षे. पौलस्त्याद्विश्रवस केकस्यां रावणकुम्भकर्णौ बभूवतु । तयोश्च रावणो ज्येष्ठ आराध्य तीव्रेण तपसा भगवन्तं परमेष्ठिनमवाप्य तस्मादभीप्सितान् वरान् बबाधे भूयोऽपि लोकान् । तदापि त्रिदशैरभिप्रार्थितो भगवान् नारायणो विभज्यात्मानं चतुर्धा दशरथस्य पत्नीषु तिसृषु चाविर्भूतो मुनेः कौशिकादुपलभ्य साङ्गं धनुर्वेदमवाप्याखिलास्त्राणि च नियोगात्पितुर्विचरन् काननेष्वनुगत सौमित्रिणा भ्रात्रा भार्यया च वैदेह्या निजघान सकलसुरनरमुनिकण्टकमत्युद्धतदर्पबन्धुर दशकन्धरमन्यांश्च तदनुयायिनो निशा-

चरान् । तदा च विनाशितेषु जगदुद्वेजनेषु यातुधानेषु पालयामास त्रैलोक्यमपि भगवान् शचीपतिः । स खल्वेवं दाशरथी रामः शशास दशसहस्रं समाः पृथिवीम् । ईजे च शतेनाश्वमेधानामन्यैश्चापरिमितदक्षिणैर्मखैः । तस्मिंश्च पालयति महीं नासीत् प्रजानां भयं रोगादिभ्यः, नापीड्यत लोकोऽनावृष्ट्या, न चेतिभिः, नाप्यपमृत्युना, नैव दस्युभिः, नात्यचरन् पत्न्यः पतीन्, पतयो वा कलत्राणि । अपि च चत्वारो वर्णा न तत्यजुः स्वधर्मान् । किं बहुना? धर्मश्चतुष्पात्सर्वतः प्रतिष्ठामवापि । अनन्तरमपि निर्वर्त्य देवकार्यं प्रार्थितः सुरपतिभिः सर्वेणाप्यात्मानुगतेनायोध्यावासिना लोकेन स्वं धामोपययौ । सोऽयमपरः प्रादुर्भावो हरेः ॥

अन्यदा च कालपरिवृत्तावन्ते द्वापरस्य दुष्टक्षत्रियभरखिन्नया वसुमत्या प्रार्थितोऽवतीर्य यदोरन्ववाये व्याजीकृत्य कलिं कुरुपाण्डवानामवरोपयामास महतीं धुरं विश्वंभरायाः । उत्पत्स्यते च विष्णुयशा नामेतश्च भूयोऽपि विभुः कल्की । इमे च प्राधान्येन सूचिताः प्रादुर्भावा भगवतः । सन्त्यन्येऽपि भुवनमङ्गला असंख्येया अवतारा देवस्य, यानामनन्ति पुराणविदः' इति ॥

अथ परीक्षिदपि कथाश्रवणजनितोत्कलिकेन चेतसा विभावयन् गुणान् भगवतः प्रत्यवादीत्— 'भगवन्! कथं नु नारायणोऽदितेः पुत्रतामवाप? । विष्णुर्भूत्वा किमकार्षीत्? । कथं मानुषेषु कृष्णो बभूव' इति । शुकोऽपि प्रत्युवाच—'राजन्! पुरा खलु संवृत्ते वृत्रवधे वर्तमाने च कृते युगे बभूवातिदारुणो देवानां दानवानां च संग्रामः । ततो बलिभिरर्दिता दितिजैरदितितनयाः प्रक्षीणबलशस्त्रास्त्रविक्रमाहतौजसोऽन्यमपश्यन्तस्त्रातारं शरणमुपजग्मुर्नारायणम् । अत्रान्तरे

भगवानपि परितोषित अदितिकाश्यपयोरतिप्रभूतेन तपसा प्रियं चिकीर्षुर्दिवौकसामदित्यामेव प्रादुर्भूत इन्द्रावरजो विष्णुर्भूत्वा अध्यास्थितो हरिरिव कनकशिखरिणम् अतिप्रभूतोद्धृत्तेन प्रबलनरय्याभिघातदूरविक्षिप्तघनाघनाक्षीणवेगभरप्रक्षोभणोत्क्षुभिताकूपारतया च संवर्तबलाहकव्रातनिरन्तरमिवान्तरिक्षमुपदर्शयता पक्षप्रभञ्जनेनोन्मूलयन्तं शाखिन कम्पयन्तमचलान् चालयन्तमुर्वीं छन्दोमयं काश्यपिनं महार्हकनककौशेयावच्छादितशरीरतया उद्यतशार्ङ्गशरासनतया चाचिरद्युतिपटलवलयित: सेन्द्रचाप इव वारिवाह मूर्तिमद्भिर्दिव्यायुधैर्भूषितपृथुदीर्घभुजचतुष्टय: शिशिराशिशिरकिरणनिकरसोदराभि प्रभाभिर्मकुटकुण्डलकटकहारमुखाना भूषणानामखिलदिगन्तरप्रसृतेनात्युज्ज्वलेन देहप्रभावितानेन विद्योतयन् रोदोगर्भमाजगामारादायोधनाङ्गणमखिलभुवनगुरुर्भगवानरविन्दलोचन: ॥

तदानीं च सर्वेऽपि सुपर्वाणो विलोक्य तादृशमसुरकुलभीषणमत्युदारं रूपं भगवतो जयरवनिरन्तराभि. मशरणवरणाभि: सकरणीयनिवेदनाभि: मनमोवाकाभि: सात्मविपद्विज्ञापनोपज्ञाभिरीडिरे स्तुतिभि । ततश्च प्रसन्नेन विष्णुना प्रतिज्ञायाखिलसुररिपुविनाशमभये वितीर्णे प्रसेदुरखिला दिश , प्राहृष्यन् दिवौकस , ननन्दुर्मुनय:, ववु: शिवा वायव:. जज्वलुरग्नय:, व्यरोचन्त ज्योतींषि, बभूव प्रहृष्टमेव त्रैलोक्यम् ॥

ततश्च मन्यमानाना विनष्टानेव निशाचरान् आपूर्यमाणहर्षबलोत्साहानामाकर्ण्यातिमहदुज्जृम्भितमपूर्वं कोलाहलं त्रिदशपृतनानां बलवदागृहीतहृदया अपि विष्णुभयेन तत्कालोचितमकुर्वत महान्तं समरसंनाहं दानवपतय । ततश्च प्रवृत्तेऽतिभीषणे रणे

सुरासुरसेनयोः प्रयुज्यमानेषु शस्त्रास्त्रेषु, उज्जृम्भमाणेषु सिंहनादेषु, भिद्यमानेषु कवचेषु उद्घोष्यमाणेषु नामगोत्रेषु, शूराणा खण्डद्यमानेष्ववयवेषु, वीराणां छिद्यमानेषूत्तमाङ्गेषु, भज्यमानेषु वरूथेषु, पात्यमानेषु यानेषु, प्रयुज्यमानासु मायासु, मन्त्र्यमाणेषु दिव्यास्त्रेषु, प्रवृत्तासु शोणितलहरीषु, उत्थाप्यमानेषु कबन्धेषु, प्रध्मायमानेषु विजयशङ्खेषु, क्षणेन प्रबलरक्षोभीतान् परिक्षीणविक्रमबलायुधान् दुर्दान्तारातिवीरनिकरनिरन्तरप्रवर्त्यमानविविधशस्त्रासारजर्झरितवर्ष्मणो विलोक्य निर्जरपतीन् सद्य समुद्बुद्धयुद्धाभिनिवेशो भगवान् शार्ङ्गशरासनः प्रजविना विहंगमपुङ्गवेन समराङ्गणमवजगाहे ॥

ततश्च प्रलयजलधरनिवहनिर्घातनिर्घोषगम्भीरभैरवेण टङ्कारेण शरासनस्य स्फोटयन् हृदयानि पिशिताशनानाम्, अनवरतप्रवर्तिताभिरखिलदिगन्तरविसारिणीभि शरधाराभिः पातयन्नन्तरिक्षादुत्तमाङ्गानि विपक्षाणाम्, भिन्दन् गुरुतरकौमोदकीनिपातनेनासुरगजतुरगरथसंघातान्, भञ्जयन् पतत्रिपतिपत्त्रिप्रभञ्जनेन यातुधानव्यूहान् मुहूर्तमिव संवर्तसमवर्तीव विपक्षबलेषु विचचार चराचरगुरुः ॥

तदानीं च तादृग्बलवदवष्टम्भसंभूतसमरसंरम्भैरमरपृतनापतिभिः सर्वतोपि भज्यमानान्यपसस्रुरायोधनादसुरबलानि । ततस्तादृशमवलोक्यात्याहितमजातपूर्वमात्मबलानां तत्क्षणप्रवृद्धदुर्वारामर्षप्रकर्षशोणीकृतभीषणनयनकोणोद्भ्रान्तविस्फुलिङ्गच्छटाजटिलेन तत्तादृङ्निजाटोपनिरीक्षणनिवृत्तदुर्वृत्तनिखिलयातुधानवीरगणानुगतेन दुर्निरीक्ष्यमूर्तिना अतिप्रमाणवपुषा कालनेमिना हन्यमानाः सर्वतोपि विशीर्णकवचहेतयो विदलितवपुष अपसृत्य रणाजिरादवनिमुपगम्य मानुषतामापेदिरे वितथीकृतमतयो विबुधपृतनापतयः ॥

ततश्चासहमानेन तादृशमतिमहदुपनतं वैशसममराणां भगवता मधुरिपुणा आहूतः समराय कालनेमी विलोक्यावस्थितमग्रतोऽखिलनिशाचरकुलविनाशनमास्थितपन्नगाशनमादिपुरुषं स्मृतपूर्ववैरं तत्समयसमुन्मिषितेन मन्युना विवशीकृतहृदयः समगत द्वन्द्वममरेण । तादृशि चाखिलभुवनविलयानुकारिणि अश्रुतदृष्टपूर्वे प्रवृत्ते भीषणे संग्रामे निजेश्वरविजयप्रार्थनाप्रचुरेष्वभिभवत्सु शब्दान्तराणि स्तोत्रारावेषु सुरासुराणाम्, दृढ क्षितिजपतिकरशतोद्भ्रामितगुरुगदाभिघातकम्पितवपुषि मन्दीकृतप्राणे पुनरपि भगवच्छक्त्याहितबले च गरुत्मति, जगदातङ्कशमनसभृतरभसेन भगवता प्रायुज्यत निर्निरोधप्रसरज्वालाजालदर्शितपरिवेषं युगपदुद्भूतसकलमार्ताण्डमण्डलोद्गमदीधितिच्छटोपमतेजःप्रसरप्रतिहतदिविचरलोचनस्फुरणमसुरकुलपतिभयदर्शनं सुदर्शनम् । तेन च विच्छिन्नकरचरणोत्तमाङ्गेन पन्नगराजपक्षचरणाभिहतिजर्झरितेऽधःपतति कालनेमिकबन्धे, विनाशितेषु यथाभागमवशिष्टेषु सुरपतिभिः क्षणेनोपशशामातिचिरप्रवृद्धं भयं त्रिलोक्याः । भगवानपि स्तूयमानो ब्रह्मर्षिभिरवस्थाप्य स्वेषु पदेषु सुरवीरान् दत्वा स्वाराज्यमिन्द्राय सप्रेष्य च ब्रह्मादीन् सुरलोकेभ्यः अवाप्य क्षीरोदं तत्र चोपगम्य स्वं भवनं तस्मिश्च महति फणिपर्यङ्कतले निखिलजगद्भद्रामुवाह निद्राम् । या खलु प्रसूता भगवतः शरीरादात्मशक्तिर्नारायणस्याखिलजगन्मोहिनी जीवितहारिणी घोरा कालरात्रिः प्राणभृतां गुणमयी दुर्विभाव्यगतिर्गह्वरी माया स्वायत्तमेव परिवर्तयति जगत् समस्तमपि । यया च भुवनकारणया तिरोहितरूपे भगवति परस्मिन् ज्योतिषि मुह्यन्ति ब्रह्मादयो देवा ऋषयश्च । या चाह्ना रजन्या चोत्थापिता परवशयति लोकान् । इयमेव मृत्यु

प्राणहरा स्वापयति प्राणिनो द्राघीयसी अकलितोत्थानम् । न हि तयाविष्टो वेदात्मानमन्यं वा । न वा कश्चिदस्त्यन्यो नारायणात् सुरेषु यस्तादृशीं ससर्ज धत्ते व्यापारयति दर्शयति विस्तारयति व्यावर्तयति च । तया चैवंभूतया मायया प्रतिच्छन्ने भगवति विष्णौ ब्रह्मादयो ब्रह्मर्षयश्चाविजानानास्तद्वृतमुदन्तं किमासीन ? किं चरति ? किं शेते ? किं स्वपिति ? किं जागर्ति ? किं करोति ? अपि च, स किंरूप ? किंचेष्ट ? किंवपु. ? किंतेजा: ? किंगुण. ? किंविक्रम: ? किंमहिमा ? किंशक्तिरिति च, अपि च, विमृशन्तो यथाबलमुपचितविद्यावितातिभिर्मतिभि. समुपगतोपपत्तिश्लोक्यैर्वाक्यै. लिङ्गविद्योतनवशंवदै: ब्रह्मपदैरापादितोपलक्षणै· लक्षणै समर्थितसकलाङ्गनिर्माणै प्रमाणैश्चाशक्नुवन्तस्तमन्वेष्टु जन्मकर्मरूपेभ्यो रमन्ते श्रुतिपुराणगम्याभिस्तदनुषक्ताभि: कथाभि: । स खल्वेवं सुष्वाप शतसहस्रं समा· ॥

तत· कदाचित् द्वापरान्ते निरस्तपूर्वेषु भगवतोपगम्य मानुषीं योनिं धृतनृपतिभावेषु प्रवृद्धबलविक्रमेषु पीडयत्सु साधून् दितिजेषु अन्येषु च पूर्णाङ्गेषु पालयत्सु नरपालकेषु वसुंधरां तादृशेन च पीड्यमाना दुर्भरेण भारेण भगवती विश्वंभरा उपगम्य भवनं ब्रह्मणो निवेदयामासाखिलमप्यात्मनो दु:खमम्बुजभुवे । ब्रह्माप्याकर्ण्य गिरं धरण्या विभावयंश्च मनसा खेदकारण तादृशि च समायोगे अपश्यंस्त्रातारमन्यमार्तानां निर्गत्य तया सह स्वभुवनादनुगम्यमान: कार्यवेदिभि: सुरगणै: स्तूयमानश्च महर्षिभिरासाद्य क्षीरपयोधिवेलां प्रबोधयन् तुष्टाव भगवन्तमिष्टाभि· स्तुतिभि· ॥

अथ भगवानपि विज्ञायातिगुरुकार्यानुबद्धमागमनं ब्रह्मण·

प्रसन्नश्च तादृशीभिर्ब्रह्ममयीभि. स्तुतिभि: अपमार्य तां तिरस्करिणी-मिव निद्रामयीं मायामभिव्यक्तमूर्तिरवलोक्याखिलसुरर्षिगणानुगतम-ब्जयोनिमीषत्स्मयमान प्रत्युवाच -- 'महाभाग! स्वागत भवते? उपागतोऽसि च दवीयसीमिमा भूमिं महैभिर्महर्षिभि । अपि मही-भृत. पालयन्ति महीम्? स्वानि पदानि वा सुरपतय: ? । अप्यनाकुलो वा जगति शाश्वतो धर्म:? । अपि प्रतायन्ते भुवि यज्ञा ? अपि न बाध्यते गण: सुपर्वणा दानवै । सर्वथा स्थितोऽहं योगक्षेमायैव सुराणाम । किं करवाणि प्रियं भवताम्' इति ॥

तथाविध च सकलभुवनभद्रोन्निद्रमुपदर्शितधर्मार्थतत्वमनुगत-कार्यकरणोपन्यासमाकर्ण्यार्ताभयभूषणं भाषणं भगवत: पितामहोऽपि सुरलोकहितमेवं विज्ञापयामास— 'भगवन्! कुतो नु भय नाम देवतानां निहन्तरि दैतेयाना त्रातरि दीनाना कर्तरि जगतां शासि-तर्यधार्मिकानां स्थापयितरि धर्माणां पालयति पितरि च त्वयि । तथाप्यापतितं महत् कार्यजातम्, यस्मै चेयं मत्परिसरवर्तिनी दु:सह-व्यथातिशयग्लपिततनुर्विषण्णवदना त्वत्परायणा त्वदेकरक्ष्या त्वत्परि-ग्रहभूता चेयं भूतधारिणी अपारयन्ती सोढुमतिविततमात्मनो दु:ख-मुपगम्य मत्सदनं न्ययुङ्क्त मामेवं प्रसादनाय भगवन', येनैभिस्तत्त्व-दर्शिभिर्महर्षिभिरुपगतोऽस्मि शरणं त्वामेव । इय खलु सर्वतोऽप्यति-प्रवृद्धाभिर्नरपालककोटिभिरसंख्येयेन च निचयेन प्रजानां बलवद-भिपीड्यमाना क्षमाप्यक्षमावष्टम्भाय अचलापि चलितवृत्ति. स्थिरापि प्रश्लथस्थैर्या सर्वसहापि नि सहाङ्गी नियतमवसीदेत्प्रजाभिभवनपरि-श्रान्ता । अस्यां ह्यवसन्नायां स्पृशेदेव महाननयो दिविषदोऽस्मान् । पर्या-कुलमव्यवस्थितं च दुष्येज्जगदेव । तद्यावदियमविपर्यस्तरूपा यावच्च न

भिद्यते धर्मसेतुस्तावदेव विधीयतां यत्नो भारावतरणायास्या । न ह्यविदितमस्ति किंचिद्भगवत । तथापि मन्त्रयितुममुमेवार्थं मेरुशिखरप्रतिष्ठितायां सभाया समवेतो महान् समाज सुराणा प्रतिपालयति भगवन्तमेव, येनोपागतोऽस्मि प्रसादनायानया सहेमं देशम् । तदागच्छ तामेव सभाम्' इति ॥

ततो बाढ गच्छाम इति वदन्नेवाज्ञाप्रतीक्षमाशयज्ञमधिरुह्य वेदमयवपुषमतिप्रमाणमात्मचरणसंपर्कधन्यं विहङ्गमपुङ्गवं विमलस्थूलमुक्ताकलापविद्योतिततनु उरसि विराजता कौस्तुभमणिना च भूषितोऽनिलवशपरिचलिताञ्चलेनाङ्गदशिखरासङ्गिना महार्हेण कनकमयेनोत्तरीयेणावच्छादिततनु., सबलाकपङ्क्तिरुद्यद्दिनकरबिम्बविद्योतितैकदेशसध्यारागरञ्जित इव प्रावृड्घन पतगराजपक्षविक्षेपपवनसंमूर्च्छनव्यक्ताभ्या स्तूयमानो बृहद्रथंतराभ्या गगनाध्वनि च मुकुलितकरकमलै सर्वतो विजयनमोवादमुखरमुखैर्नमद्भिर्वैमानिकैरावेदितवर्त्मा, सपक्षमिवाद्रिराजन्यमाश्थितवता राजहंसमनुगम्यमान: कमलयोनिना, स्तूयमानश्च महर्षिणामृग्यजु साममन्त्रावर्तननिरन्तराभि: स्तुतिभि:, अनुसृतो निजासक्तदृष्टिभिर्वियति सुरैर्नातिमहता कालेनोपगम्य मेरुं तस्मिंश्च विन्यस्तामुत्तप्तकार्तस्वरमये समे प्रदेशे सर्वतोपि योजनशतायामामतिविततसुरविटपिनिकरनिरन्तरेण सततविकसिताम्लानकुसुमभरसौरभभरितेन सर्वर्तुगुणशोभितेन दिव्योद्यानेन परिवेष्टितपर्यन्तामत्युन्नतकनकमयप्राकारवलयितामुज्ज्वलवस्त्रसंयोगविन्यस्ततोरणविन्यासाममलकुरुविन्दशिलाफलकसंदोहसंदानितपर्यन्तभित्तिप्रसृमररुचिवितानाविरतविधूतबालातपोन्मेषाम् अध्यस्ताच्छाविरलशाड्वलशङ्कावहेन उद्गतकिरणाङ्कुरनिकरेण मरकतमणिकुट्टिमेन

स्यात् । तदितरेषां सर्वेषामदृष्टफलकस्वार्थप्रकाशनार्थत्वमेवेति । तस्मात् सवित्रादिशब्दाना नास्त्यूहः । अग्निशब्दस्य तु प्रकृतयागीय-देवताप्रकाशनार्थस्यास्त्येवोह । यद्यपि सौर्ये अग्नये इति पदस्थाने सूर्यायेति पदं प्रक्षेप्तव्यम्; तथा हि-- अग्निपदेनापूर्वसाधनीभूतां देवतां शक्त्या प्रकाशयेदिति लिङ्गकल्पितश्रुत्या मन्त्रविनियोगात् विकृतावन्यदेवत्यायामग्निपदेन शक्त्या अपूर्वसाधनीभूतदेवताप्रकाश-नासंभवात् अग्निपदनिवृत्तौ शक्त्या अपूर्वसाधनीभूतदेवताप्रकाशन-रूपप्रकृतकार्यनिर्वाहाय सूर्यायेति पदप्रक्षेप एवावश्यक इति । अयं च एकपदस्थाने अपरपदप्रक्षेपो नोहरूपः, प्रागुक्तोहलक्षणानाक्रान्त-त्वात् । तथाप्यूहकार्ये पदान्तरप्रक्षेपे ऊहशब्दो भाक्तः ॥

**इति नवमाध्याये प्रथमः पादः ॥**

—— ०.——

## अथ द्वितीयः पादः ॥

द्वितीये पादे सामोहोपयोगिविचारपूर्वकं सामोहविचारः । तथा हि-- 'एकं साम त्यृचे क्रियते स्तोत्रीयम्' इति श्रूयते । तत्र किं तिसृषु ऋक्षु व्यासज्य गानं कर्तव्यम्, उत प्रत्यृच परिसमाप्य गानमावर्तनीयमिति विशये एकं साम त्यृचे क्रियत इत्यनेन सामोद्देशेन त्यृचविधानात् साम्न प्राधान्यम्, ऋचा च गुणभूतत्वमवगम्यत इति गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् तिसृषु ऋक्षु व्यासज्यैव गानं कर्तव्यमिति प्राप्ते, प्रत्यृच परिसमाप्य गानमावर्तनीयमेव । तथा हि-साम्ना स्तुवीतेत्यनेन बोधितं साम्न· स्तोत्राङ्गत्वम् ऋगक्षराभिव्यक्तिरूपदृष्टद्वारैव । अभिव्यक्तिर्नाम विश्लेषः । प्रगीतमन्त्रसाध्यगुणाभिधान हि स्तोत्रम् । प्रगीतमन्त्रसाध्यत्वं च गानविश्लिष्टमन्त्रा-

क्षरवृत्तिसंश्लेषज्ञानजन्यत्वम् । ततश्च गानेन ऋगक्षराभिव्यक्तिं विना स्तोत्रानुपपत्ते साम्नोऽक्षराभिव्यक्तिद्वारा स्तोत्राङ्गत्वम् । इत्थं च साम्नः ऋगक्षराभिव्यक्त्यर्थतया ऋचां प्राधान्यं साम्नो गुणत्वम् । ततश्च प्रतिप्रधानगुणावृत्तिन्यायात् प्रत्यृचं परिसमाप्य गानमावर्तनीयमिति । एवं च 'एकं साम त्र्यृचे क्रियते' इत्यनेन त्र्यृचोद्देशेन स्तोत्रीयविधानम् । अत्र हि त्रित्वस्य ऋच्यन्वयव्युत्पत्त्या न विशिष्टोद्देश्यनिबन्धनो वाक्यभेदः । यद्योन्यां तदुत्तरयोर्गायतीत्यनेन उपसंहारात स्तोत्रीयस्य सामरूपतासिद्धेः सामेत्यनुवाद. । यत्तु 'एकं साम त्र्यृचे क्रियते स्तोत्रीयम्' इत्यनेन स्तोत्रसाधनीभूतऋगुद्देशेन त्रित्वविधानमिति, तन्न, एकप्रसरताभङ्गप्रसङ्गात् । एकप्रसरता नाम— उद्देश्यमात्रसमर्पकत्वविधेयमात्रसमर्पकत्वान्यतरवत्त्वम् उद्देश्यत्वविधेयत्वोभयप्रयोजकत्वाभावपर्यवसितम् । इदं च एकपदे नियतम्, तथैवानुभवात् । अत एव 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र न भक्षोद्देशेन प्राथम्यविधानम्, किंतु प्राथम्यविशिष्टभक्षान्तरविधानमेव । इत्थं च त्र्यृच इत्यत्र ऋगुद्देशेन त्रित्वविधाने उक्त एकप्रसरताभङ्गः स्यादेवेति ॥

किं च तत्तत्स्तोत्रेषु स्तोमान्तरविधानात् त्रित्वविधानानुपपत्तिः । स्तोमः स्तोत्रीयागतनवत्वादिसंख्या । स्तोत्रसाधनीभूता ऋक् स्तोत्रीया । अत्र च तिसृषु ऋक्षु प्रत्येकं गीयमानमेकं साम समास्वेव गेयम्, न विषमासु । न्यूनासु गाने सामैकदेशस्य लोपाख्यसंशरापत्तेः । अधिकपरिमाणासु गाने ऋक्शेषे सामादर्शनरूपविलेशापत्तौ तत्र सामैकदेशस्यावृत्त्यापत्तेः । तस्मात् समासु गानमिति ॥

एवं सामोहोपयोगिविचारे वृत्ते अनन्तरं सामोहविचारः । "कवतीषु रथंतरं गायति", "यद्योन्यां तदुत्तरयोर्गायति" इत्यादिसामातिदेशे, स किं यत्र स्थाने योनौ एकाराद्यक्षरसंस्कारिका आ–इ– भावादिरूपा गीतिः श्रुता, तत्र स्थान उत्तरागतवर्णान्तरे सा ऊहितव्या, उत, तत्र वा अन्यत्र वा उत्तरागत एकार एव सा उहितव्या न तु वर्णान्तर इति विशये, यत्र स्थाने योनौ आ–इ–भावः श्रुतः तत्रैव स्थाने अतिदेशवशेन तादृशगीतेः कर्तव्यतावगमात् उत्तरागते तादृशस्थानपठितवर्णान्तरेऽपि सा कर्तव्या इति प्राप्ते, वर्णान्तरे अकारादौ आ–इ– भावकरणे तस्य तदक्षराभिव्यञ्जकत्वासंभवेनारादुपकारतापत्तिः, आ–इ– भावः अवर्णेवर्णात्मकस्य संध्यक्षरस्य एकारस्य विश्लेषरूपसंस्कारार्थः । न हि एकारो नाम वर्णान्तरम्, मानाभावात् । किंतु अवर्णेवर्णात्मकः, स्मृतिसहकृतप्रत्यक्षेण तथैवावगतेः । ततश्च तद्विश्लेषकस्य आ–इ– भावस्य तत्स्थानपठिताक्षरान्तरविश्लेषकत्वासंभवात् यत्रैवोत्तरादावेकारः तत्रैव आ–इ– भावः कार्य इति ॥

इति नवमाध्याये द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

तृतीयपादे मन्त्रोहविचारः । तथा हि— 'अग्नये जुष्टं निर्वपामि व्रीहीणां मेधसुमनस्यमानः' इत्यादौ अग्न्यादिपदस्थाने सूर्यादिपदप्रक्षेपात्मको भाक्त ऊहः कार्यो न वेति विशये, अग्न्यादिपदानां लक्षणया सूर्यादिप्रकाशकत्वसंभवात् न कार्य इति प्राप्ते, प्रकृतौ दृष्टे-

रपि विवक्षितत्वात् शक्त्यधीनप्रकाशनस्यैव प्रकृतौ कार्यत्वात् विकृतौ तादृशकार्यस्याग्निपदेन कर्तुमशक्यतया अग्निपदस्य बाधे तादृशकार्यरूपद्वारसिद्ध्यर्थं पदान्तरप्रक्षेप आवश्यक इति । एवं दैक्षपशौ पाशप्रमोचने अनुमन्त्रणमन्त्रद्वयमाम्नातम्— 'अदिति. पाशं प्रमुमोक्त्वेतम्' इत्येकवचनान्तमेकम्, 'अदिति. पाशान् प्रमुमोक्त्वेतान्' इति बहुवचान्तमपरम् । तत्र बहुवचनान्तस्य किं दैक्ष एव विकल्पेन निवेश:. उत, बहुपाशिकायामुत्कर्ष इति विशये, दैक्षे पाशबहुत्वविरहात् पूषानुमन्त्रणमन्त्रवत् उत्कर्ष एवेति प्राप्ते, पाशप्रातिपदिकार्थस्य विभक्त्यर्थकर्मत्वस्य प्रमोचनभावनायाश्च प्रधानभूताया दैक्षेऽपि संभवेन गुणभूतबहुवचनमात्रानुरोधेन उत्कर्षकल्पनाया असंभवात् बहुवचनस्य शक्यबहुत्वाश्रयावयवकत्वसंबन्धेन एकत्वलाक्षणिकत्वमाश्रित्य दैक्ष एव विकल्पेन निवेशः । इत्थं च बहुवचनान्तमन्त्रस्य द्विपाशिकाया विकृतौ द्विवचनान्ततया ऊहः कार्यः । 'छन्दसि दृष्टानुविधिः' इत्यनेन पाशैकत्वे लक्षणया प्रयुज्यमानस्य बहुवचनस्य साधुत्वोपपत्तावपि द्वित्वे तस्य साधुत्वासंभवादिति ॥

इति नवमाध्याये तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

चतुर्थे पादे अध्रिगुप्रेषगते 'षड्विंशतिरस्य वंक्रय. । ता अनुष्ठ्योच्च्यावयतात्' इत्यत्र पशुगणे कीदृग्भूत ऊहः कार्य इति विचारः । तथा हि— पशुगणे पशुद्वयादिगतसमस्तपङ्क्तिप्रकाशनार्थं किं षड्विंशतिरस्य इति पदद्वयावृत्ति कार्या उत षड्विंशती अनयोर्वंक्रय इ

त्येवंरूपो द्विवचनोहः कार्य., आहोम्वित् द्विपञ्चाशत् अनयोर्वंक्रय इत्येवं कार्यमिति विशये, प्रकृतिदृष्टपदान्यथात्वे प्रमाणाभावात् अश्रुतपदान्तरकल्पनानुपपत्तेः यावत्पशुगतसमस्तवंक्रिप्रकाशनार्थं षड्विंशतिरस्येति पदद्वयावृत्तिरेव कार्या । यदि च पशुगणे एकप्रयोगविधिपरिगृहीतानामनेकेषां साङ्गाना यौगपद्यावगते. अर्थप्रकाशनकार्यस्यापि यौगपद्यावगमात् तदनुरोधेन युगपदनेकप्रकाशकपदप्रक्षेपस्यैवावश्यकतया न श्रूयमाणपदावृत्तिर्युज्यते इत्युच्यते, तदा षड्विंशती अनयोर्वंक्रय इत्येवमूहः कार्यः । तत्र षड्विंशतिशब्द. गवा षड्विंशतिरित्यादावपि संख्यापर । न चैवं वक्रीणामिति षष्ठ्यापत्तिरिति वाच्यम् , वंक्रिशब्दस्य वंक्रिसंबन्धिलाक्षणिकतया सामानाधिकरण्योपपत्ते', वंक्रय इति बहुवचनस्य स्वशक्त्याश्रयसमवेतवृत्तित्वरूपसंबन्धेन द्वित्वलक्षणार्थत्वादिति प्राप्ते, 'ता अनुष्ठ्योच्यावयतात्' इति वंक्रीणामेव परामर्शात् तासामेव प्राधान्यम् । संख्या तु तद्विशेषणत्वेनोपपन्ना साकल्यसूचिकेति नादृष्टार्थतापत्ति । एवं च 'पञ्चाशदनयो वंक्रय.' इत्येवमेवोहः कार्य. । किं च प्रकृतावप्येकस्मिन् पार्श्वे त्रयोदश वक्रय. समस्यैव षड्विंशतिपदेनोक्ता इति विकृतावपि समस्यैव सर्वा' प्रकाशयितव्या इति गम्यत इति । तदेवं पादचतुष्टयपरिमितेन नवमाध्यायेनोहविचार' कृतः ॥

इति नवमाध्याये चतुर्थः पादः ॥

समाप्तश्च नवमोध्यायः ॥

---

# अथ दशमोध्यायः ॥

## प्रथमः पादः ॥

---

दशमे बाधनिरूपणम् । बाधो नाम प्रकृतिसंबन्धिनः पदार्थस्य विकृत्यङ्गत्वग्राहकप्रमाणविषयत्वाभाव. । अस्ति चायं 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्काम ' इति विहिते कृष्णलचरौ अवघातस्य । तत्र सत्यप्यतिदेशे वैतुष्यरूपप्रयोजनलोपात् न तस्यावघाते विकृत्यङ्गत्वग्राहकत्वम् । स च बाधस्त्रिविधः— अर्थलोपकृतः, प्रत्याम्नानकृतः, प्रतिषेधकृतश्चेति । अर्थ' प्रयोजनम् । इदमेव द्वारमित्यभिधीयते । तत्र प्रथमे पादे अर्थलोपप्रत्याम्नानकृतबाधोपोद्घातपूर्वकमर्थलोपकृतबाधो विचार्यते । तथा हि—विकृतौ प्रकृतिदृष्टपदार्थानां किं स्वरूपेणातिदेशः, उत, उपकारपृष्ठभावेनेति विशये, प्रकृतिवच्छब्देन प्रकृतिसंबन्धिनः पदार्था विकृतौ कर्तव्या इत्यर्थावगमात् स्वरूपेण पदार्थानामतिदेशः । ततश्च कृष्णलादावपि अवघातस्य कर्तव्यत्वावगमात् वैतुष्यरूपदृष्टप्रयोजनासंभवेऽपि अदृष्टप्रयोजनस्यैव कल्पनीयतया न बाधसंभवः इति प्राप्ते, आकाङ्क्षायोग्यतासक्तिभिः उपकाराणामेवातिदेश. । पश्चात् तत्पृष्ठभावेन पदार्थानामतिदेशः । विकृतिर्हि फलानुकूलयोग्यताजननाय उपकारमेवापेक्षते, स्वतः क्षणिकत्वेन योग्यताजनने अयोग्यत्वात् । उपकारैरेव प्रकृतौ योग्यताजननेन उपकारस्यैव तज्जनने योग्यत्वमवसीयते । विकृतौ सादृश्येन प्रकृतिभावनोपस्थितौ तदव्यवहितान्वयिनोऽवान्तरोपकारस्यैव संनिहितत्वम् । ततश्चाग्नेयसंबन्ध्युपकारसजातीयोपकारे सौर्यस्योपकर्तव्यमित्येवंविध-

वाक्यकल्पनया प्रथममुपकारेष्वतिदिष्टेषु पश्चात्ज्जनकापेक्षायां तज्जनकप्राकृतपदार्थानां पृथगतिदेशकल्पनम् । वस्तुतस्तूपकारजनकापेक्षायामपि पृथक्पदर्थातिदेशकल्पने गौरवात् पदार्थविशिष्टोपकाराणामेक एवातिदेश., प्रकृतिवत् तत्तत्पदार्थजन्यात् तत्तदुपकारान् विकृतौ कुर्यात् इति ॥

इत्थं च कृष्णलादौ वैतुष्यादिरूपोपकारासंभवात् तदनतिदेशे अवघातादेरपि अनतिदेशात् युक्तो बाध इति । अयं च दाशमिको बाध प्राप्तबाध इत्युच्यते । क्लृप्तस्य बोधकस्य विशेषविषयिताप्रतिबन्धः प्राप्तबाध., कृष्णलादौ हि बोधकमस्त्येव । परं तु तस्यावघातादिविषयकत्व नास्तीति प्राप्तबाधोऽयम् । एवं विकृतिविशेषे स्वयंदिनं बर्हिर्भवतीति श्रूयते । अत्र स्वतश्छिन्नबर्हिषि बर्हिर्लवनप्रयोजनस्य मूलाग्रावयवसंयोगनाशस्य प्रतियोग्यभावेनानुत्पत्तेः अर्थलोपेनाध्वर्युकर्तृकस्य प्रयोगान्तःपातिनो वैधम्य तदङ्गभूतस्यास्यादानादेश्च बाध इति ॥

इति दशमे प्रथमः पादः ॥

द्वितीयपादे अस्यैवार्थलोपकृतबाधस्य बहुभिरुदाहरणैर्विस्तरः ॥

---*---

## अथ तृतीयः पादः ॥

तृतीये पादे यस्यां विकृतौ प्राकृताङ्गसंबन्धेनापूर्वाङ्गश्रवणम्, 'यथा एकादश प्रयाजान् यजति' इति तत्रातिदेशेनाङ्गानां सामान्यरूपेणैव प्राप्ते. विशिष्यप्रयाजत्वादिना उपस्थित्यभावात् तदवच्छिन्नोद्देशेन एकादशत्वादिविधानायोगात् एकादशत्वादिविशिष्टप्रयाजादिविध्यव-

इयंभावः । ततश्च वक्ष्यमाणगृहमेधीयाज्यभागन्यायेन क्लृप्तापकार-प्रयाजपुनर्विधानात् तेनैव पश्वादिभावनाया निराकाङ्क्षत्वात् अतिदेशाकल्पनात् न प्रयाजातिरिक्ताङ्गकरणमिति प्राप्ते, 'मद्गृहे धान्यमस्ति शष्कुलिं भुङ्क्ष्व' इत्यादौ सामान्यपुरस्कारेण प्राप्तस्य पदार्थस्य सबन्धिविधयोपस्थितविशेषधर्मपुरस्कारेणापि प्राप्त्युपपत्तेः प्रयाजत्वेन रूपेणानुवादे बाधकाभावात् । तृतीयविधिप्रकारलिप्सया प्रयाजोद्देशेन एकादशत्वसंख्यामात्रविधानेनातिदेशोपजीवितया तद्बाधकतानुपपत्तेः नेतराङ्गनिवृत्तिरित्येवमादिविचारः ॥

## इति दशमाध्याये तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

चतुर्थपादे समुच्चयप्रत्याम्नानकृतबाधादिविचारः । तथा हि— "अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्" इति नक्षत्रेष्टिं विधाय उपहोमाः समाम्नाताः 'सोऽत्र जुहोति । अग्नये कृत्तिकाभ्यः स्वाहा'—इत्यादि । प्रकृतितश्च नारिष्टान् जुहोतीतिविहिता नारिष्टहोमा प्राप्ताः । ते किमुपहोमैर्बाध्यन्ते उत समुच्चीयन्त इति चिन्तायाम् , उपहोमानां कार्याकाङ्क्षायां होमत्वसामान्यात् प्राकृतहोमकार्ये उपस्थिते तदुद्देशेनैव विधीयन्त इति प्रत्यक्षश्रुतेः उपहोमैरेव नारिष्टहोमकार्यनिष्पत्त्या अतिदिष्टा नारिष्टा बाध्यन्त इति प्राप्ते, सर्वसाधारणहोमत्वस्य नारिष्टहोमकार्योपस्थापकत्वासंभवात् न तदुद्देशेनोपहोमविधानं संभवति । अतो न बाधः । किं तु समुच्चय एवेति । एवं 'सोमाय रौद्रं चरुं निर्वपेत्' इति विहितेष्टिविशेषे शरमयं बर्हिरिति श्रुतम् । तत्र